जपेत् तदा एकवारावृत्त्या होमः कार्यः। अयमेव दशांशहोमः। तत्र च प्रतिमन्त्रं स्वाहाशब्दं समुच्चार्य जुहुयात्। न सकलरुद्रावृत्त्यैकवारमेव जुहुयात्। मन्त्रविच्छेदश्च अध्ययनादेवावगम्यते। अथचाग्रेपि प्रदर्श्यते। गणशान्तिः – गणेश्वरशान्तिः। सा चाग्रेऽभिधास्यते। ग्रहशान्तिः – नवग्रहशान्तिः। इयमप्यग्रे निपुणतरं प्रदर्श्यते। खारीलक्षणं तु परिमाणप्रकरणे वक्ष्यते।

प्रायश्चित्तोपक्रमप्रकारमाह—

"दश पञ्चाऽथ चतुर उपवेश्य द्विजान् शुभान्।
तेषामनुज्ञया सर्वं प्रायश्चित्तमुपक्रमेत्॥
विधाय वैष्णवं श्राद्धं साङ्कल्पं निजकाम्यया।
धेनुं दद्याद्विजेभ्योऽथ दक्षिणां च स्वशक्तितः"॥

तेषामनुज्ञयेत्यादि। तेषां ब्राह्मणानां अनुज्ञया प्रायश्चित्तं भवतीति भवतेरध्याहारः। उपक्रमे – प्रायश्चित्तस्योपक्रमे। विष्णुमुद्दिश्य श्राद्धं विदधीत। श्रद्धया दीयत इति श्राद्धम्। तच्च साङ्कल्पं पिण्डदानरहितम्। धेनुं दद्यात्। सभायामुपवेशितानां ब्राह्मणानां ब्रह्मदण्डत्वेन। दक्षिणादिकन्तु श्राद्धाङ्गत्वेन। ब्रह्मदण्डत्वेन च या धेनुर्दीयते सा न प्रत्यक्षधेनुः। अपितु प्रत्याम्नायद्वारा। कुतः। बहुभ्यश्चेदेका दीयते तदा तैः सा विक्रेया स्यात्। विक्रयश्च निषिद्धोऽङ्गिरसा।

"बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः।
विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि॥
एका एकस्य दातव्या न बहुभ्यः कथञ्चन।
सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम्" ॥ इति।

धेनुं दद्याद्द्विजेभ्योऽथ दक्षिणां च स्वशक्तित इत्युक्तम्। तदनन्तरकृत्यमाह।

"अलंकृत्य यथाशक्ति वस्त्रालङ्करणैर्द्विजान्।
याचेत दण्डवन्नत्वा प्रायश्चित्तं यथोचितम्॥

तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि ।
पुनस्तान् परिपूर्त्यर्थमर्चयेद्विधिवद्विजान् ॥
दद्याद्व्रताङ्गदानानि तेभ्यः श्रद्धासमन्वितः" ।

व्रताङ्गदानानि–गोभूहिरण्यरजततिलवासोघृतगुडधान्यलवणदानानि। अन्यान्यपि विशेषविहितानि दानानि व्रताङ्गदानानीत्युच्यन्ते ।

"सन्तुष्टा ब्राह्मणा दद्युरच्छिद्रं व्रतकारिणे" ।

अच्छिद्रमस्त्वितीदं वाक्यं दद्युः ब्रूयुरित्यर्थः। अथवा वक्ष्यमाण-वचनमेवाच्छिद्रं वाक्यम् ।

" व्रतछिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ।
सर्वं भवतु तेऽच्छिद्रं यस्य चेच्छन्ति वै द्विजाः ॥
ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः ।
सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥
उपवासो व्रतं चैव स्नानं तीर्थफलं तपः ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तद्भवेत् ॥
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकामिकम् ।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥
सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा धार्यमग्निष्टोमफलं लभेत् ॥
तेभ्योऽनुज्ञामिति प्राप्य प्रतिपाद्य तथाशिषः ।
भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः" ॥

इति शातातपीयकर्मविपाकोक्तपरिभाषा ।

अथ कर्मविपाकसारोक्तपरिभाषा ।

" अथ कर्मक्षयोपायौ कृच्छ्रव्याधिविपर्ययौ ।
क्लेशासहत्वात्तत्राऽऽद्ये गां दद्याद्याधिकर्शितः" ॥

कृच्छ्रशब्देन प्राजापत्यकृच्छ्रचान्द्रायणादीन्युच्यन्ते । तेषां सर्वेषां क्लेशसाध्यत्वात्। तल्लक्षणानि चाभिधास्यन्ते। प्राजापत्यादिकरणमेका कोटिः। व्याधिविपर्ययो नाम व्याधिप्रतिकृतिदानम् । इदन्त्वपरा

कोटिः । एवञ्च आद्ये पक्षे कृच्छ्रकरणपक्षे, साक्षात् कृच्छ्राद्याचरणस्य क्लेशात्मकत्वात् कृच्छ्रप्रत्याम्नायत्वेन गां दद्यात् । कृच्छ्रादिषु प्रत्याम्नायत्वेन गावो दातव्या इत्यर्थः । तत्र कस्मिन् कृच्छ्रे किंसङ्ख्याका गावो दातव्या इत्यत आह –

" एकां कृच्छ्रेऽतिकृच्छ्रे द्वे तिस्रश्चान्द्रायणे व्रते ।
गवामभावे निष्कं वा साशीतिशतकृच्छ्रदः ॥
जपदानेऽपि तत्सूक्तं कूष्माण्डगणहोमकृत् ।
सर्वपापप्रणुत्त्यर्थमथ व्याधिविपर्ययः " ॥

एकां कृच्छ्र इत्यादि । एकां गां कृच्छ्रे प्राजापत्ये । निष्कलक्षणं परिमाणप्रकरणेऽभिधास्यते । साशीतिशतकृच्छ्रदः षड्वार्षिकप्रायश्चित्तेऽशीत्युत्तरं कृच्छ्राणां शतं भवति । षड्वार्षिकप्रायश्चित्तप्रदर्शनं च प्रायेण कर्मविपाके क्षीणपापत्वेन षड्वार्षिकप्रायश्चित्तापेक्षयाऽधिकप्रायश्चित्तप्राप्त्यभावात् । साशीतिशतकृच्छ्रप्रत्याम्नायत्वेन गवादिकं ददातीति साशीतिशतकृच्छ्रदः । अथवा " कृत्वाऽर्वाक् ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरे"दिति संभावितपापनिवृत्त्यर्थं साशीतिशतकृच्छ्रदः । षडब्दप्रायश्चित्तप्रत्याम्नायत्वेन गवादिदाता भवेदित्यर्थः । जपदानेऽपीति । जपश्च दानञ्चेति जपदाने । ते अपि कुर्वीत । तत्र जपे तत्सूक्तं तत्तद्व्याध्युपशमार्थं विहितं सौरादिसूक्तं भवतीत्यर्थः । दानं गोभूहिरण्यादीनाम् । तानि च पूर्वमभिहितानि । सर्वपापप्रणुत्त्यर्थं कूष्माण्डगणहोमकृद्भवेत् । अथ व्याधिविपर्ययः । वक्ष्यत इति शेषः । कर्मक्षयोपायत्वेनोपायद्वयमभिहितं कृच्छ्रादिकरणं व्याधिप्रतिकृतिदानं चेति । तत्र कृच्छ्रशब्दं तपःप्रधानं कर्माचष्टे । कूष्माण्डगणहोमावपि तपःप्रधानाविति तावपि प्राजापत्यादिकृच्छ्रकोटावेवान्तर्भवतः । अथ समग्रां कृच्छ्रकोटिमवधाय व्याधिप्रतिकृतिदानं वक्तव्यम् । तस्मात् कूष्माण्डगणहोमावभिधीयेते । यत्र कर्मणि "यद्देवादेवहेडन"मित्यादयो मन्त्रास्तैत्तिरीयारण्यके समाम्नाताः स कूष्माण्डहोमः । यस्मिंश्च "अग्ने नय सुपथे"ति तथा " अग्नेर्मन्वे प्रथमस्य प्रचेतस" इत्याद्या ऋचस्तैत्तिरीयशाखायां समाम्नाताः स गणहोमः ॥ तत्र जमदग्न्यभिहितः कूष्माण्डगणहोमविधिः ।

" अथातः सम्प्रवक्ष्यामि कूष्माण्डविधिमुत्तमम् ।
एनसां स्थूलसूक्ष्माणां प्रायश्चित्तं तु वैदिकम् ॥
अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्ती भवेद्द्विजः ॥
केशश्मश्रू वापयित्वा स्नात्वा पुण्यजलाशये ।
आज्यभागानन्तरेण कूष्माण्डैर्जुहुयाद्द्विजः ॥
" यद्देवे"त्यनुवाकैश्च त्रिभिर्हुत्वाऽऽज्यमन्वहम् ।
" वैश्वानराये"त्येताभिस्तमग्निमुपतिष्ठते ।
यदित्याधाय समिधो जयादि प्रतिपद्यते ।
कर्मादिष्वेतैर्जुहुयात् पूतः स्वर्गं समश्नुते ॥
संवत्सरं ब्रह्महा तु मासं वै वीरहा द्विजः ।
चतुर्विंशतिरात्रीस्तु परिवेत्ताऽपि दीक्षितः ॥
द्वादश स्वर्गदिधिषुः षड्रात्रीः श्यावदन्नपि " ।

स्वर्गदिधिषुः । ज्येष्ठेऽकृताधाने सति कनीयान् यद्यग्नीनादधाति तदा ज्येष्ठः स्वर्गदिधिषुरित्युच्यते । परिवित्तिरित्यर्थः ।

" तिस्रो रात्रीस्तु कुनखी दीक्षितो भवति द्विजः ।
न मांसमन्नमश्नीयान्नोपेयात्कामिनीमपि ॥
नो वा शयीत खट्वायां जुगुप्सेताऽनृताद्द्विजः ।
पयोव्रतं ब्राह्मणस्य यवागूः क्षत्रियस्य च ॥
आमिक्षा चैव वैश्यस्य प्रायश्चित्तार्थमिष्यते ।
सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमिष्यते " ।

इति जमदग्निप्रोक्तः कूष्माण्डहोमविधिः ।

अथ बोधायनप्रोक्तकूष्माण्डहोमविधिः ।

" कूष्माण्डैर्जुहुयाद्योऽपूत इव मन्येत । यथा स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चति । यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यत " इति ॥ अयोनौ रेतःसेकः स्वभाद्न्यत्र । भ्रूणहत्या ब्रह्महत्या । " यो वा पवित्रकामो वाऽमावास्यायां पौ-

र्णमास्यां वा केशश्मश्रुनखलोमानि वापयित्वा ब्रह्मचारिकल्पेन व्रतमुपैति। संवत्सरं मासं चतुर्विंशतिर्द्वादश षट् तिस्रो वा रात्रीः। न मांसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात् पयो-भक्षयतीति प्रथमः कल्पः। यावकं चोपभुञ्जानः कृच्छ्रं द्वादशरात्रं वा चरेत् भिक्षेत वा तद्विधिष्वि"ति। तद्विधिषु कृच्छ्रगतैकभक्तादिवि-धिषु । एकभक्ताद्युचितभैक्षाहारेणैकभक्तादींन्निष्पादयेदित्यर्थः । 'यवागूं राजन्य आमिक्षां वैश्यः' ॥["] "यदि मन्येतोपदस्या-मीति ओदनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपदा-साय" इति ब्राह्मणम्। पाकयाज्ञिकधर्मेणाऽग्निमुपसमाधाय स-म्परिस्तीर्य परिधानप्रभृत्यग्निमुखान्तं कृत्वा सावित्रीं पुरोनुवा-क्यामनूच्य सावित्र्या पक्वान् जुहोति अथ स्विष्टकृतम्। "हव्यवा-हमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेमे"मित्यनूच्य "स्विष्टमग्ने अभि तत्पृणाहि विश्वा देवपृतना अभिष्या उरुन्नः पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरन्न आयु"रिति याज्यया चरुशेषं जुहोति । अथ कूष्माण्डैः "यद्देवा देवहेडनम्, यददीव्यन्नृणमहं बभूव, आयुष्टे विश्वतो दधदि"त्येतैस्त्रिभिरनुवाकैः प्रतिमन्त्रमाज्यं हुत्वा सिंहे व्याघ्र इति चतस्रः स्रुवाहुतीः अग्नेऽभ्यावर्तिन्, अग्ने अङ्गिरः, पुन-रूर्जा, सह रय्या, इति चतस्रोऽभ्यावर्तनीर्हुत्वा समित्पाणिर्यज-मानलोकेऽवस्थाय 'वैश्वानराय प्रतिवेदयाम' इति द्वादशर्चेन सूक्तेनो-पतिष्ठते। यन्मया मनसा वाचा कृतमेनः कदाचन। सर्वस्मात्तस्मा-न्मेलितोमोग्धि त्वं हि वेत्थ यथातथं स्वाहेति समिधमाधाय वरं ददाति । जयप्रभृति सिद्धमाधेनुवरप्रदानात् । इति बोधायन-प्रोक्तः कूष्माण्डहोमविधिः॥

अथ कूष्माण्डहोमविधिर्मन्त्रानुष्ठानपाठानुष्ठानक्रमसहितः प्रदर्श्यते।

तत्रैको जमदग्निप्रोक्तः पक्वहोमादिरहितो लघुकल्पः प्रदर्शितः। अपरश्च पक्वहोमादिसहितो गुरुकल्पो बोधायनप्रोक्तो निरूपितः। सर्वशाखाधिकरणन्यायेन बहुभिर्निरूपितः कूष्माण्डहोम एक ए-

वेति गुणोपसंहारन्यायेनाविरुद्धसकलाङ्गोपसंहारः कर्तव्यः । अथवा – 'एनसि गुरुणि गुरूणि लघुनि लघूनी'ति गौतमस्मरणात् अपनोद्य पापाल्पत्वे लघुपक्षः स्वीकार्य इतरथा गुरुपक्षादर इति व्यवस्था। यो महापातकादिदोषदूषितः कृतप्रायश्चित्तोऽपि मनःपरितोषं न प्रतिपद्यते । यश्चायोनावन्ययोनौ वा रेतः सिञ्चति । यश्च ब्रह्महत्यावर्जं साक्षाद्द्वादशवार्षिकादिगुरुप्रायश्चित्तानामविषयाणि महापातकादीनि करोति । योऽपि पवित्रत्वकामः स कूष्माण्डहोमं कुर्वीत। यश्चाधानादि कर्माणि चिकीर्षति सोऽपि कर्मादिषु कूष्माण्डादिभिर्जुहुयात् । अथ प्रयोगः । अमावास्यायां वा पौर्णमास्यां वाऽन्यत्र वा विहितकाले पूर्वाह्णे केशश्मश्रुलोमनखानि वापयित्वा तीर्थावगाहनाचमनमन्त्रप्रोक्षणपुण्याहवाचनानि कृत्वा स्थण्डिलमुपकल्प्य स्वगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य प्राणायाममग्निप्रतिष्ठापनतः पूर्वं पश्चाद्वा विधाय ' अमुकप्रयोजनार्थं कूष्माण्डहोमं करिष्य ' इति सङ्कल्प्य चरुहोमपक्षे यथाशाखं " सविता देवता चतुर्हविराधारं मन्त्र"मित्याद्यभिलप्य निर्वापपात्रासादनचरुपाकान्तश्च । यथागृह्यं विधाय पक्वं चरुमभिघार्योद्वास्य प्रतिष्ठितमभिघार्यावदानधर्मेणावदाय सावित्रीं पुरोनुवाक्यामनूच्य सावित्र्यैव याज्यया जुहुयात् । गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः चरुहोमे विनियोगः " ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ " इति सावित्रीं पुरोनुवाक्यामनूच्य पुनरपि सावित्रीमेव याज्यां पठित्वा " स्वाहा सवित्र " इति जुहोति । ततः स्विष्टकृतमवदाय " हव्यवाह"मिति पुरोनुवाक्यामनूच्य " स्विष्टमग्ने " इति याज्यया जुहुयात् । द्वयोरनयोर्विश्वेदेवा ऋषयः । अग्निः स्विष्टकृद्देवता अनुष्टुप् विराड् छन्दः स्विष्टकृद्धोमे विनियोगः । " हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेमो"मिति पुरोनुवाक्यामनूच्य स्विष्टकृतमग्ने अभितत्पृणाहि विश्वादेव पृतना अभिष्य उरुन्नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरन्न आयु"रिति याज्यां स्वाहान्तां पठित्वा जुहोति । अत्राग्नये स्विष्टकृत इति उद्देशत्यागः । हुतशेषमग्नेः पुरस्तादश्वत्थपर्णेषु निदधीत । अथ ' यद्देवा

देवहेडन'मिति त्रिभिरनुवाकैराज्यहोमः। केचन सावित्र्या पक्कहोमानन्तरं स्विष्टकृतमवदाय स्थापयित्वा 'यद्देवे'त्यादिभिराज्यहोमं विधाय ततः स्विष्टकृद्धोममिच्छन्ति' ये च पक्कहोमं न कुर्वते तेषां आज्यभागानन्तरमेव तैरेव त्रिभिरनुवाकैरेवाज्यहोमः तत्र यद्देवा देवहेडनमित्येकविंशर्चस्य प्रथमानुवाकस्य ब्रह्मा स्वयम्भू ऋषिः। लिङ्गोक्ता देवताः आदित आरभ्य क्रमेण चतसृणामनुष्टुप् छन्दः। पञ्चमी त्रिष्टुप्। षष्ठी षडवसानाऽतिजगती। सप्तमी जगती। अष्टमी त्रिष्टुप्। नवमी षट्पदा जगती। दशमी बृहती। ततो द्वे षट्पदे शक्वर्यौ। त्रयोदशी त्रिष्टुप्। चतुर्दशी सप्तपदा अष्टिः। पञ्चदश्यनुष्टुप्। षोडश्यनुष्टुप् विराट्। सप्तदशी गायत्री ततस्तिस्रः त्रिष्टुभः। एकविंश्यनुष्टुप्। आज्यहोमे विनियोगः।

अथ मन्त्राः। "यद्देवा देवहेडनं देवासश्चकृमा वयम्। आदित्यास्तस्मान्मा मुञ्चत। ऋतस्यर्तेन मामित" स्वाहा आदित्येभ्यः। स्वाहा आदित्येभ्य इत्युद्देशत्यागो न मन्त्रान्तःपाती। एवमुत्तरत्रापि विज्ञेयम्। "देवा जीवनकाम्या यद्वाचाऽनृतमूदिम। तस्मान्न इह मुञ्चत विश्वेदेवाः सजोषसः"। स्वाहा विश्वेभ्यो देवेभ्यः। "ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्वति। कृतान्नः पाह्येनसो यत्किञ्चानृतमूदिम" स्वाहा द्यावापृथिवीभ्यां सरस्वत्यै च। "इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः। ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम"। स्वाहा इन्द्राग्निमित्रावरुणसोमधातृबृहस्पतिभ्यः। "सजातशंसादुत जामिशँसात् ज्यायसः शंसादुत वा कनीयसः। अनाधृष्टं देवकृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि"। स्वाहा जातवेदसे। "यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां शिश्नैर्यदनृतं चकृमा वयम्। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता"। स्वाहा गार्हपत्याग्नये। "येन त्रितोऽर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच। येनेन्द्रो विश्वादजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि"। स्वाहा अग्नये। "यत्कुसीदमप्रतीत्तं मयेह येन यमस्य निधिना चरामि। एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि"। स्वाहा अग्नये। "यन्मयि

माता गर्भे सति एनश्चकार यत्पिता। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु। दुरितानि यानि चकृम करोतु मामनेनसम्"। स्वाहा गार्हपत्याग्नये। "यदा पिपेष मातरं पितरं पुत्रः प्रमुदितो वयम्। अहिंसितौ पितरौ मया तत्तदग्ने अनृणो भवामि"। स्वाहा अग्नये। "यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिँसिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितानि यानि चकृम करोतु मामनेनसम्"। स्वाहा गार्हपत्याग्नये। "यदाशसा निःशसा यत्पराशसा यदेनश्चकृमा नूत्नं यत्पुराणम्। अग्निर्मा तस्मादेनसः गार्हपत्यः प्रमुञ्चतु दुरितानि यानि चकृम करोतु मामनेनसम्"। स्वाहा गार्हपत्याग्नये। "अतिक्रमामि दुरितं यदेनः जहामि रिप्रं परमे सधस्थे। यत्र यन्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतानुलोकम्"। स्वाहा अग्नये। "त्रिते देवा अमृजतैतदेनः त्रित एतन्मनुष्येषु मामृजे ततो मा यदि किञ्चिदानशे। अग्निर्मा तस्मादेनसः गार्हपत्यः प्रमुञ्चतु दुरितानि यानि चकृम करोतु मामनेनसम्"। स्वाहा अग्नये गार्हपत्याय। "दिवि जाता अप्सु जाता या जाता ओषधीभ्यः। अथो या अग्निजा आपः ता नः शुन्धन्तु शुन्धनीः"। स्वाहा अद्भ्य इदम्। "यदापो नक्तं दुरितं चराम यद्वा दिवा नूतनं यत्पुराणम्। हिरण्यवर्णास्तत उत्पुनीत नः"। स्वाहा अद्भ्यः। "इमं मे वरुण श्रुधीहवमद्या च मृडय त्वामवस्युराचके"। स्वाहा वरुणाय। "तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहबोध्युरुशं समान आयुः प्रमोषीः"। स्वाहा वरुणाय। "त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेलो वयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत्"। स्वाहा अग्निवरुणाभ्याम्। "स त्वन्नो अग्नेऽवमो भवेतीति दिष्टयो अस्या उषसो व्युष्टौ। अव यक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि"। स्वाहा अग्निवरुणाभ्याम्। "त्वमग्ने अयासि अयासन्मनसा हितः। अयासन् हव्यमूहिषे अया नो धेहि भेषजम्"। स्वाहा अग्नये अयसे। इति प्रथमोऽनुवाकः॥

यद्दीव्यमिति द्वितीयानुवाकस्य त्रयोदशर्चस्य ब्रह्मा स्वयम्भू ऋषिः। लिङ्गोक्ता देवताः। आद्यः प्रस्तारपङ्क्तिः। द्वितीयाद्याश्च-

तस्रस्त्रिष्टुभः । षष्ठी गायत्री । सप्तम्याद्यास्तिस्रः त्रिष्टुभः । दशम्यनुष्टुप् । एकादशी चतुष्पदोष्णिक् । द्वादश्यनुष्टुप् । त्रयोदशी त्रिष्टुप् । आज्यहोमे विनियोगः । "यददीव्यं नृणमहं बभूवादित्सन्वा सञ्जगर जनेभ्यः । अग्निर्मा तस्मादिन्द्रश्च संविदानौ प्रमुञ्चताम्" । स्वाहा अग्नये । "यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः । उग्रं पश्या च राष्ट्रभृच्च तान्यप्सरसावनुदात्तामृणानि" । स्वाहा अप्सरोभ्यः । "उग्रं पश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् । नेन्न ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुराय" । स्वाहा मन्त्रोक्तदेवतायै । "अव ते हेडो वरुण नमोभि रवयज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुरप्रचेतो राजन्नेनांसि शिश्रथः कृतानि" । स्वाहा वरुणाय । "उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम" । स्वाहा वरुणाय । 'इमं मे वरुण' 'तत्त्वायामि' 'तन्नो अग्ने' 'सत्वं नो अग्ने' इति चतस्रः प्रथमानुवाके लिखिता अत्रापि ग्राह्याः ॥ "संकुसुको विकुसुको निर्ऋथो यश्च निःस्वनः । तेऽस्मद्यक्ष्ममनागसो दूराद्दूरमचीचतम्" । स्वाहा मन्त्रोक्तदेवताभ्यः । "निर्यक्ष्म मचीच ते कृत्यां निर्ऋतिं च । तेन योऽस्मत्समृच्छातैतमस्मै प्रसुवा । स्वाहा मन्त्रोक्तदेवताभ्यः । "दुःशँसानुशँसाभ्यां घणेनानुघणेन च तेनान्योऽस्मत्समृच्छातैतमस्मैप्रसुवामसि" । स्वाहा मन्त्रोक्तदेवताभ्यः । "संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सँशिवेन । त्वष्टा नो अत्र विदधातु रायो नु मार्ष्टु तन्वो यद्विलिष्टम्" । स्वाहा त्वष्ट्रे । इति द्वितीयोनुवाकः ।

आयुष्ट इति तृतीयानुवाकस्य सप्तदशर्चस्य ब्रह्मा स्वयम्भू ऋषिः । लिङ्गोक्ता देवताः । आद्याऽनुष्टुप् । द्वितीयातृतीये त्रिष्टुभौ । ततस्तिस्रो गायत्र्यः । सप्तम्यष्टम्यौ त्रिष्टुभौ । ततः षडनुष्टुभः । पञ्चदशी ककुम्मती । षोडश्यनुष्टुप् । सप्तदशी पञ्चपदा शक्वर्यत्यष्टिर्वा । आज्यहोमे विनियोगः । "आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः पुनस्ते प्राण आयाति परा यक्ष्मँ सुवामि ते" । स्वाहा अग्नये । "आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि घृतं

पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम् ”। स्वाहा आयुर्दे अग्नये। “इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सँशिशाधि। मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत्”। स्वाहा अग्न्यादिमन्त्रोक्तदेवताभ्यः। “अग्न आयूंषि पवस आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्”। स्वाहा अग्नये। “अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं दधद्रयिं मयि पोषम्”। स्वाहा अग्नये। “अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः तमीमहे महागयम्”। स्वाहा अग्नये। “अग्ने जातान् प्रणुदानः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेलञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ”। स्वाहा अग्नये जातवेदसे। “सहसा जातान् प्रणुदानः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयँ स्याम प्रणुदानः सपत्नान्”। स्वाहा जातवेदसे। “अग्ने यो नोऽभितो जनो वृको वारो जिघाँसति। ताँस्त्वं वृत्रहन् जहि वस्वस्मभ्यमाभर”। स्वाहा अग्नये वृत्रघ्न इदम्। “अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः। तं वयँ समिधं कृत्वा तुभ्यमग्नेऽभिदध्मसि”। स्वाहा अग्नये। “यो नः शपादशपतो यश्च नः शपतः शपात्। उषाश्च तस्मै निम्रुक्च सर्वं पापँ समूहताम्”। स्वाहा उषसे निम्रुचे। “यो नः सपत्नो यो रणो मर्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन”। स्वाहा देवेभ्यः। “यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च मां सर्वांस्तानग्ने संदह याँ श्चाहं द्वेष्मि ये च माम्”। स्वाहा अग्नये जातवेदसे। “योऽस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मान्दिप्साच्च सर्वांस्तान् मष्मषाकुरु”। स्वाहा मन्त्रोक्तदेवतायै। “संशितं मे ब्रह्म संशितं वीर्यँबलम्। संशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः। उदेषां बाहू अतिरमुद्वर्चो अथो बलम्। क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाँ अहम्”। स्वाहा मन्त्रोक्तदेवतायै। “पुनर्मनः पुनरायुर्म आगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात्। पुनः प्राणः पुनराकूतं म आगात् पुनश्चित्तं पुनराधीतं म आगात्। वैश्वानरो मेऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वा”। स्वाहा वैश्वानराय। इति तृतीयोऽनुवाकः।

इत्यनुवाकत्रयेणाज्यं स्रुचा प्रतिमन्त्रं हुत्वा यजमानोऽग्नेर्दक्षिणत: समित्पाणिरुदङ्मुखस्तिष्ठन् 'वैश्वानराय प्रतिवेदयाम' इति द्वादशर्चेन सूक्तेनाग्निमुपस्थाय 'यन्मया मनसे' त्यनया स्वाहान्तया सामिधमग्नौ प्रक्षिप्य जयादिहोमं कुर्वीत। एतच्च जमदग्निमते। बौधायनमते तु अनुवाकत्रयेणाज्यहोमानन्तरं 'सिंहे व्याघ्र' इत्याद्याभिश्चतसृभि: स्रुचाऽऽहुतीराज्यस्य प्रत्येकं हुत्वा तथा 'अग्नेऽभ्यावर्तिन' इत्याद्याभिश्चतसृभिरपि स्रुचाहुती: प्रत्येकं हुत्वा यजमान: पूर्वोक्तप्रकारेण समिधमादायाग्निमुपस्थाय समिधं पूर्वोक्तमन्त्रेणाग्नौ प्रक्षिप्य जयादिभिर्हुत्वा प्रणीतामोक्षणब्रह्मविसर्जनान्तं कर्म कुर्वीत। ग्रे चाज्यहोमानन्तरं स्विष्टकृद्धोमं मन्यन्ते समिदाधानानन्तरं ते पूर्ववत्तं स्विष्टकृतं हुत्वा जयादिकं कुर्वीरन्। एतच्च कर्म पापतारतम्यानुसारेण पूर्वोक्तत्रिरात्रादिसंवत्सरान्तपक्षाणां मध्येऽन्यतमपक्षाश्रयेण कर्तव्यम्। यावत्कर्मसमाप्ति पयोव्रतं ब्राह्मणस्य यवागूव्रतं राजन्यस्य आमिक्षाव्रतं वैश्यस्य। यदि मन्येत पयोव्रतादिभि: क्षीणो भवामीति तदौदनादिभि: पूर्वोक्तै: शरीरधारणं कुर्वीत। पयोव्रतमित्यादेरयमर्थ:। पय एव ब्राह्मण: सकृद्भुञ्जीत तथा क्षत्रियो यवागूं वैश्य आमिक्षामिति।

अथ 'सिंहे व्याघ्र' इत्यादयो मन्त्रा ऋष्यादिसहिता: प्रदर्श्यन्ते। 'सिंहे व्याघ्र' इति चतसृणां सोम ऋषि:। त्विषिर्देवता। त्रिष्टुप् छन्द:। आज्यहोमे विनियोग:। "सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या इन्द्रं या देवी सुभगा जजान सा न आगन्वर्चसा संविदाना" स्वाहा त्विष्यै। "या राजन्ये दुन्दुभावायतायां अश्वस्य क्रन्द्ये पुरुषस्य मायौ। इन्द्रं या देवी सुभगा जजाने" त्यादि। "या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरश्वेषु पुरुषेषु गोषु। इन्द्रं या देवी सुभगे" त्यादि "रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी" त्यादि 'अग्नेऽभ्यावर्तिन्नि'ति चतसृणामग्निर्ऋषि:। अग्निरभ्यावर्ती देवता। आद्या पञ्चपदोष्णिक्। द्वितीया पञ्चपदा महाबृहती। इतरे द्वे गायत्र्यौ। आज्यहोमे विनियोग:। "अग्नेऽभ्यावर्तिन्नभि न आवर्तस्वायुषा

वर्चसा सन्या मेधया प्रजया धनेन "। स्वाहा अग्नयेऽभ्यावर्तिने। एवमुत्तरमन्त्रेषूद्देशत्यागः। "अग्ने अङ्गिरः शतं ते सन्त्वा वृतः सहस्रं त उपावृतः तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नोरयिमाकृधि" स्वाहा। "पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा पुनर्नः पाहि विश्वतः" स्वाहा। "सह रय्या निवर्तस्वाऽग्नेपिन्वस्व धारया विश्वफ्स्न्या विश्वतस्परि" स्वाहा।

अथ समिधमादायोपस्थानं कुर्वीत वैश्वानरायेत्यनेन सूक्तेन। अस्य सूक्तस्य द्वादशर्चस्य ब्रह्मा स्वयम्भूर्ऋषिः। वैश्वानराद्या लिङ्गोक्ता देवताः। आद्ये त्रिष्टुभौ। तृतीयाचतुर्थ्यावनुष्टुभौ। ततस्तिस्रः त्रिष्टुभः। अष्टमी पङ्क्तिः। ततो द्वे त्रिष्टुभौ। एकादशी द्वादशी च पञ्चपदे शक्वर्यौ। उपस्थाने विनियोगः। "वैश्वानराय प्रतिवेदयामो यदी नृणं सङ्गरो देवतासु स एतान् पाशान् प्रमुञ्चन् प्रवेदः स नो मुञ्चतु दुरितादवद्यात्"। "वैश्वानरः पवयान्नः पवित्रैर्यत्सङ्गरमभिधावाम्याशाम्। अनाजानन्मनसा याचमानो यदत्रैनो अव तत्सुवामि"। "अमी ये सुभगे दिवि विचृतौ नाम तारके प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम्"। "विजिहीर्ष्व लोकान् कृधि बन्धान् मुञ्चासि बद्धकं योनेरिव प्रच्युतो गर्भः सर्वान् पथो अनुष्व"। "स प्रजानन् प्रतिगृह्णीत विद्वान् प्रजापतिः प्रथमजा ऋतस्य अस्माभिर्दत्तं जरसः परस्तात् अच्छिन्नं तन्तुमनुसञ्चरेम"। "ततं तन्तुमन्वेके अनुसञ्चरन्ति येषां दत्तं पित्र्यमायनवत् अबन्ध्वेके ददतः प्रयच्छाद्दातुं चेच्छक्नवाँसः स्वर्ग एषाम्"। "आरभेथामनुसंरभेथां समानं पन्थामवथो घृतेन यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सँरभेथाम्"। "यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिँसिम। अग्निर्मा तस्मादेनसो गार्हपत्य उन्नोनेषद्दुरिता यानि चकृम"। "भूमिर्माताऽदितिर्नो जनित्रं भ्राताऽन्तरिक्षमभिशस्त्य एनः। द्यौर्नः पिता पितृयाच्छंभवासि जामिमित्वा माविवित्सि लोकान्"। "यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वा २ँ स्वायाम्। अश्लोणाङ्गैरहुताः स्वर्गे तत्र पश्येम पितरं च पुत्रम्"। "यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत

वा करिष्यन्। यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु"। "यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम्। यद्देवानां चक्षुष्याग" इत्यादि। एवमग्निमुपस्थाय यन्मयेत्यनयर्चा समिधमग्नौ निदधीत। अस्या ऋचो ब्रह्मा स्वयम्भू ऋषिः अग्निर्देवता अनुष्टुप् छन्दः समिद्धोमे विनियोगः।

"यन्मया मनसा वाचा कृतमेनः कदाचन। सर्वस्मान्मेलितो मोग्धि त्वं हि वेत्थ यथातथम्"॥ स्वाहा अग्नये। अथ जयादिहोमः। आज्यहोमात् पूर्वमेव स्विष्टकृद्धोमकरणपक्षे पूर्ववत्तेन हविषा स्विष्टकृतं जुहोति। तत्र पूर्वोक्तावपि मन्त्रौ सौकर्यार्थं पुनरपि प्रदर्श्येते। 'हव्यवाह'मित्येषा पुरोनुवाक्या 'स्विष्टमग्न' इत्येषा याज्या। द्वयोरेतयोर्विश्वेदेवा ऋषयः। अग्निः स्विष्टकृद्देवता। अनुष्टुप् विराट् छन्दः। स्विष्टकृद्धोमे विनियोगः। "हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेमोम्" इति पुरोनुवाक्यामनूच्य "स्विष्टमग्ने अभि तत्पृणाहि विश्वा देवा पृतना अभिष्य। उरुन्नः पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरन्न आयु"रिति याज्यां स्वाहान्तां पठित्वा जुहुयात्। 'अग्नये स्विष्टकृत' इत्युद्देशत्यागः। अथ हुतशेषमग्नेः पुरस्तात् अश्वत्थपत्रेषु निधाय 'कर्मसमृध्यर्थं जयादिहोमं करिष्य' इत्यभिलप्य जयादिहोमं कुर्वीत। तत्र त्रयोदशानां यजरूपाणां जयादिमन्त्राणां विश्वेदेवा ऋषयः। प्रतिमन्त्रं मन्त्रप्रथमपादोक्ता गुणविशिष्टा देवता। आज्यहोमे विनियोगः। कर्मसमृध्यर्थे वा विनियोगः। "चित्तं च"[1] स्वाहा चित्ताय। अत्र स्वाहा चित्तायेत्युद्देशत्यागः। एवमेव स्वाहा प्रभृत्युत्तरत्रापि द्रष्टव्यम्। "चित्तिश्च" स्वाहा चित्त्यै। "आकूतं च" स्वाहा आकूताय। "आकूतिश्च" स्वाहा आकूत्यै। "विज्ञातं च" स्वाहा विज्ञाताय। "विज्ञानं च" स्वाहा विज्ञानाय। "मनश्च" स्वाहा मनसे।

१. चित्तं च चित्तिश्च आकूतं चाकूतिश्च विज्ञातं च विज्ञानं च मनश्च शक्करीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरं च प्रजापतिर्जयानिति मन्त्रानुपूर्वी।

"शाक्वरीश्च" स्वाहा शाक्वरीभ्यः। "दर्शश्च" स्वाहा दर्शाय। "पूर्णमासश्च" स्वाहा पूर्णमासाय। "बृहच्च" स्वाहा बृहते। "रथन्तरं च" स्वाहा रथन्तराय। "प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्तसर्वाः स उग्रः स हि हव्यो बभूव"। स्वाहा प्रजापतये इति जयादयः।

अथाऽभ्यातानाः। अष्टादशानामभ्यातानानां विश्वे देवा ऋषयः। प्रतिमन्त्रं मन्त्रप्रथमपादोक्तैव गुणविशिष्टा देवता। यजुष्ट्वान्न छन्दोनियमः। आज्यहोमे कर्मसमृध्यर्थे वा विनियोगः। "अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे स्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्" स्वाहा अग्नये भूतानामधिपतये। उत्तरमन्त्रेषु '(अधिपतिः) समाऽवत्वित्यादेरनुषङ्गः। "इन्द्रो ज्येष्ठाना"मधिपतिः स माऽवत्वस्मिन् इन्द्राय ज्येष्ठानामधिपतये"। "यमः पृथिव्या" अधिपतिः स माऽवत्वस्मिन्। यमाय पृथिव्या अधिपतये। "वायुरन्तरिक्षस्या"धिपतिः स माऽवत्वस्मिन्। वायवे अन्तरिक्षाधिपतये। "सूर्यो दिवो"ऽधिपतिः स माऽवत्वस्मिन्। सूर्याय दिवोऽधिपतये। "चन्द्रमा नक्षत्राणा"मधिपतिः स माऽवत्वस्मिन्। चन्द्रमसे नक्षत्राणामधिपतये। "बृहस्पतिर्ब्रह्मणोऽ"धिपतिः स माऽवत्वस्मिन्। बृहस्पतये ब्रह्मणोऽधिपतये। "मित्रः सत्याना"मधिपतिः स माऽवत्वस्मिन्। मित्राय सत्यानामधिपतये। "वरुणोऽपा"मधिपतिः स माऽवत्वस्मिन्। वरुणाय अपामधिपतये। "समुद्रः स्रोत्याना"माधिपतिः समाऽवत्वस्मिन्। समुद्राय स्रोत्यानामधिपतये। "अन्नं साम्राज्याना"मधिपतिः तन्माऽवत्वस्मिन्। अन्नाय साम्राज्यानामधिपतये। "सोम ओषधीना"मधिपतिः स माऽवत्वस्मिन्। सोमाय ओषधीनामधिपतये। "सविता प्रसवाना"मधिपतिः स माऽवत्वस्मिन्। सवित्रे प्रसवानामधिपतये। "रुद्रः पशूना"मधिपतिः स माऽवत्वस्मिन्। रुद्राय पशूनामधिपतये। अप उपस्पृशेत्। "त्वष्टा रूपाणा"मधिपतिः स मावत्वस्मिन्। त्वष्ट्रे रूपाणामधिपतये। "विष्णुः पर्वताना"मधिपतिः स माऽवत्वस्मिन्। विष्णवे

पर्वतानामधिपतये। “ मरुतो गणानामधिपतयः ते माऽवन्त्व”स्मिन् । मरुद्भ्यो गणानामधिपतिभ्यः । “ पितरः पितामहाः परेऽवरे तताऽस्ततामहाः इह माऽवत अस्मिन् ” पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यः । इत्यभ्यातानाः ।

अथ राष्ट्रभृतयः। अत्र आम्नायपाठेन द्वादशमन्त्राः। अर्थतस्त एव द्वाविंशतिः। एषां द्वाविंशतियजुषां विश्वे देवा ऋषयः। स्वस्वमन्त्रोक्तगुणविशिष्टा गन्धर्वा अप्सरसश्च देवताः। आम्नायपाठेन सप्तमस्य द्वादशस्य भुवनस्पतिर्देवता। आज्यहोमे विनियोगः। कर्मसमृध्यर्थे वा विनियोगः। “ऋताषाडृतधामाऽग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ” ऋतासाहे ऋतधाम्नेऽग्नये गन्धर्वाय । “ तस्योषधयोऽप्सरस ऊर्जोनाम ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहा ” । ओषधिभ्योऽप्सरोभ्य ऊर्ग्भ्यः । “ संहितो विश्वसामा सूर्यो गन्धर्वः ” स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा संहिताय विश्वसाम्ने सूर्याय गन्धर्वाय । “ तस्य मरीचयोऽप्सरस आयुवो नाम” ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहा मरीचिभ्योऽप्सरोभ्य आयुभ्यः । सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः ” स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा सुषुम्नाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय । “ तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम ” ता इदं ब्रह्म क्षत्रं पान्तु । स्वाहा नक्षत्रेभ्योऽप्सरोभ्यः बेकुरुभ्यः । “ भुज्ज्युः सुपर्णो यज्ञो गन्धर्वः ” स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय । “ तस्य दक्षिणा अप्सरसः स्तवा ” नाम ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहा दक्षिणाभ्योऽप्सरोभ्यःस्तवाभ्यः । “ प्रजापतिर्विश्वकर्मा मनो गन्धर्वः ” स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय । “ तस्यर्क् सामान्यप्सरसो वह्नयो ” नाम ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहा ऋक्सामभ्योऽप्सरोभ्यो वह्निभ्यः । “ इषिरो विश्वव्यचा वातो गन्धर्वः ” स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा इषिराय विश्वव्यचसे वाताय गन्धर्वाय । “ तस्यापोऽप्सरसो मुदा नाम” ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहाऽद्भ्योऽप्सरोभ्यो मुदाभ्यः । “ भुवनस्य पते यस्य त उपरि गृहा इह

च स नो रास्वा ज्यानिं रायस्पोषं सुवीर्यं संवत्सरीणां स्वस्तिम्" । स्वाहा भुवनस्पत्ये । "परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वः" स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा परमेष्ठिन अधिपतये मृत्यवे गन्धर्वाय । "तस्य विश्वमप्सरसो भुवो नाम" ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा विश्वस्मा अप्सरोभ्यः भूभ्यः । "सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्वः" स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा सुक्षितये सुभूतये भद्रकृते सुवर्वते पर्जन्याय गन्धर्वाय । "तस्य विद्युतोऽप्सरसो रुचो नाम" ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहा विद्युद्भ्योऽप्सरोभ्यो रुग्भ्यः । "दूरेहेतिरमृडयो मृत्युर्गन्धर्वः" स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा दूरेहेतयेऽमृड्याय मृत्यवे गन्धर्वाय । "तस्य प्रजा अप्सरसो भीरवो नाम" ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहा प्रजाभ्योऽप्सरोभ्यो भीरुभ्यः । "चारुः कृपणकाशी कामो गन्धर्वः" स इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा चारवे कृपणकाशिने कामाय गन्धर्वाय । "तस्याधयोऽप्सरसः शोचयन्तीर्नाम" ता इदं ब्रह्म क्षत्रं पान्तु । ताभ्यः स्वाहाऽऽधिभ्योऽप्सरोभ्यः शोचयन्तीभ्यः । "स नो भुवनस्य पते यस्य त उपरि गृहा इह च उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ"। तस्मै स्वाहा भुवनस्य पत्ये । इति राष्ट्रभृतयः ।

जया अभ्यातानाः राष्ट्रभृच्चेति गणत्रयम् । अथ मन्त्रोपहोमा उच्यन्ते । तथा समनन्तरं वक्ष्यमाणाः प्रजापतय इत्यारभ्य स्विष्टकृदन्ताः पञ्चापि उपहोमा अभिधीयन्ते । एते पञ्च प्रायश्चित्तार्थमपि । तत्र पञ्चानां मन्त्राणां प्रजापत इत्यादीनां मध्ये प्रथमान्त्ययोः विश्वे देवा ऋषयः । मध्यस्थितानां तिसृणां व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगवः ऋषयः । आदित आरभ्य प्रजापतिरग्निर्वायुः सूर्याग्नी स्विष्टकृदिति देवताः । प्रजापत इति त्रिष्टुप् । आद्या व्याहृतिर्दैवी गायत्री । द्वे उष्णिहौ । यदस्येति द्राघिष्ठं यजुः । आज्यहोमे कर्मसमृध्यर्थे(वा)-विनियोगः ।"प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमः तन्नो अस्तु वयं स्याम पतयो रयीणाम्"। स्वाहा प्रजापतये । "भूः स्वाहा" अग्नये । "भुवः स्वाहा" वायवे । "स्वः

१. ऋताषाडित्यादिः यच्छेत्यन्ता मन्त्रानुपूर्वी ।

स्वाहा" सूर्याय । "यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु"। स्वाहा अग्नये स्विष्टकृते । अथानूयाजसमिध"मग्नये स्वाहे"त्यग्नावाधाय पक्व-होमपक्षे बर्हिरञ्जनपरिधिप्रहरणसंस्रावहोमान्तं कुर्वीत । "विश्वेभ्यो देवेभ्यः संस्रावभागेभ्य" इति संस्रावं जुहोति । अथवा प्रजापति-दृष्टं संस्रावभागदैवत्यं "संस्रावभागास्थे"ति यजुः पठित्वा जुहुयात् । मन्त्रस्तु "संस्रावभागास्स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्व"मिति । अथवा प्राजापत्याहुतयः । तत्रानाज्ञातत्रयं प्रथमतो जुहुयात् । अनाज्ञातत्रयस्य विश्वेदेवा ऋषयः । अग्निर्देवता । आद्येऽनुष्टुभौ । तृतीया त्रिष्टुप् । अनाज्ञातदोषनिवृत्त्यर्थे विनियोगः ।

"अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम्" ॥

स्वाहा अग्नये । "पुरुषसंमितो यज्ञो यज्ञः पुरुषस-म्मितः । अग्ने तदस्य कल्पये"त्यादि । "यत्पाकत्रा मनसा दीन-दक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवान् ऋतुशो यजाति" । स्वाहा अग्नये । अथ 'त्वन्नो अग्न' इति द्वाभ्यां होमः । एतयोर्द्वयोर्ब्रह्मा स्वयम्भू ऋषिः । अग्नि-वरुणौ देवता । त्रिष्टुप् छन्दः । विपर्यासान्तरायनिवृत्त्यर्थे विनि-योगः । "त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्" । स्वाहा अग्निवरुणाभ्याम् । "स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि" । स्वाहा अग्नीवरुणाभ्याम् । अथ केचित् 'त्वमग्ने अयासी'त्यनया जुहति । अस्या ब्रह्मा स्वयम्भू ऋषिः । अग्निरस्या देवता । अनुष्टुप् छन्दः । सर्वप्रायश्चित्तार्थे विनियोगः । "त्वमग्ने अयास्ययासन्मनसा हितः । अयासन् हव्यमूहिषे अया नो धेहि भेषजम्" । स्वाहा अग्नये अयसे । अथ यजुर्भ्रेषपरिहारार्थं 'भुवः स्वाहे'ति जुहुयात् । अत्रर्ष्यादि प्रागेवाभिहितम् । अथ

'यत इन्द्रे'ति 'स्वस्तिदे'ति द्वाभ्यां जुहुयात्। एतयोर्विश्वे देवा ऋषयः। इन्द्रो देवता। अनुष्टुप् छन्दः। न्यूनातिरेकपरिहारार्थे विनियोगः। "यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न उतये विद्विषो विमृधो जहि"। स्वाहा इन्द्राय। "स्वस्तिदा विशस्पतिः वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः"। स्वाहा इन्द्राय। अथ 'यन्म आत्मनः' 'पुनरग्नि'रिति द्वाभ्यां जुहुयात्। क्रमेण यजूऋङ्मन्त्रयोर्विश्वेदेवा ऋषयः। आद्यस्याग्निर्जातवेदा देवता। द्वितीयस्याग्नीन्द्रबृहस्पत्यश्विनो देवताः। अनुष्टुप् छन्दः। कर्मणः साद्गुण्यार्थत्वे विनियोगः। "यन्म आत्मनो मिन्दाऽभूदग्निस्तत् पुनराऽहार्जातवेदा विचर्षणिः"। स्वाहा अग्नये। "पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः। पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः"। स्वाहा अग्नये इन्द्राय बृहस्पतये अश्विभ्यां च। अथ "इदं विष्णुः" "त्र्यम्बक"मित्याभ्यां होमः। तत्र क्रमेण सोमो विश्वेदेवाश्च ऋषयः। विष्णूरुद्रश्च देवते यथाक्रमम्। क्रमेण गायत्र्यनुष्टुप् छन्दः। नियमासनवाग्लोपदोषनिवृत्त्यर्थे विनियोगः। "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुरे" स्वाहा विष्णवे। "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय माऽमृतात्"। स्वाहा रुद्राय। अथ 'आभिर्गीर्भि'रिति अनया जुहुयात्। अस्य विश्वेदेवा ऋषयः। इन्द्रो हरिवान् देवता। त्रिष्टुप् छन्दः। वर्णकालस्वरस्थानलोपपरिहारार्थे विनियोगः। "आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्द्धमानः यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्टभाजो अध ते स्याम"। स्वाहा इन्द्राय हरिवते। अथ 'पुनस्त्वे'त्यनया व्यस्तव्याहृतिभिश्च होमः। व्याहृतीनां ऋष्यादीनि प्रागभिहितानि। पुनस्त्वेत्यस्या अग्निः ऋषिः वसुरुद्रादित्या देवताः। त्रिष्टुप् छन्दः। मन्त्रचतुष्टयस्याऽप्युपघातदोषपरिहारे विनियोगः। अत्र व्याहृतिभिर्हुत्वा पुनस्त्वेत्यनया जुहुयाद्विपरीतं वा। "पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तनुवो वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः"।

स्वाहा वसुभ्यो रुद्रेभ्य आदितेभ्यश्च। अथ समस्ताभिर्व्याहृतिभिर्जुहुयात्। अस्य मन्त्रस्य जमदग्निभरद्वाजभृगवः ऋषयः। प्रजापतिर्देवता। देवी बृहती छन्दः। सर्वप्रायश्चित्तार्थे विनियोगः। "भूर्भुवः स्वः स्वाहा" प्रजापतये इदं नमः। अथ परिषेचनादि ब्रह्मविसर्जनान्तं कर्म कुर्वीत। एतच्च कर्म यावन्ति व्रतदिनानि तेषु प्रतिदिनमावर्तनीयम्। अत्र कूष्माण्डहोमे तैत्तिरीयशाखासमाम्नायानुगृहीता मन्त्रा अङ्गभावं भजन्त इति तत्तत्काण्डानुक्रमेणार्षमभिहितम्। अतः शाखान्तरानुसारेणार्षभेदेऽपि न विरोधः। एवमेवोत्तरत्र गणहोमेऽप्यवगन्तव्यम्।

इति कूष्माण्डहोमः।

[1]महार्णवाख्ये महिते प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नौघनिधिर्द्वितीय-
स्तुङ्गस्तरङ्गोऽयमगादगाधः॥

---

१. माता पुण्यपवित्रकीर्तिविभवा यस्याम्बिका नामतः
शाकल्यापरमूर्तिरार्यचरितः श्रीपेद्दिभट्टः पिता।
सोऽयं कौशिकवंशभूषणमणिः श्रीभट्टविश्वेश्वरो
वेदे स्मार्तमते नये च सपदे वाक्ये कृती वर्धते॥
मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परा शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये।
चिरं चित्ते तेषां मुकुरतलभूते स्थितिमिया-
दियं व्यासारण्यप्रवरमुनिशिष्यस्य भणितिः॥
इति श्रीपेद्दिभट्टात्मजभट्टविश्वेश्वरविरचिते महार्णवाभिधाने निबन्धे कर्मविपाके द्वितीयस्तरङ्गः। इति ग. पुस्तके पाठः।

## तृतीयस्तरङ्गः ।

अथ गणहोमः । स चाऽऽपस्तम्बमतानुसारेण तावदभिधीयते । आधानस्य वा काम्यानां कर्मणां वाऽऽदौ पवित्रत्वादिकामना वा यदा तदैतत्कर्म कर्तव्यम् । येषु कर्मसु पतिपत्न्योः सहाधिकारः तेषामाधानादीनामादौ पत्नीसहितोऽन्यत्र पवित्रत्वकामनादावेक एव स्वयं यजमानो दर्भेष्वासीनो दर्भान् धारयमाणः प्राणानायम्य 'अमुकप्रयोजनार्थं सप्ताहं सवनत्रयं गणहोमान् होष्यामी'ति सङ्कल्प्य स्वस्वगृह्यानुसारेणाग्निस्थापनप्रभृति स्थालीपाकवत्प्रतिष्ठितचर्वभिघारणान्तं कृत्वा पात्रप्रयोगकाले प्रोक्षणीपात्रेण सह प्रणीतापात्रं तन्तुभिर्वेष्टितं कलशं च प्रयुनक्ति । प्रणीताप्रणयनकाले प्रणीतामासाद्य कलशे सपवित्रेऽप आनीयोत्पूय निदधाति । आज्यविलापनप्रभृत्यग्निमुखान्ते कर्मणि कृते चरौ घृतमानीय दर्व्यामुपस्तीर्य द्विरवदायाभिघार्य 'अग्ने नये'ति षडर्चेन सूक्तेन 'सहस्रशीर्षे'त्यष्टादशर्चेन 'अग्ने मन्वे'ति द्वाविंशत्यृचा मृगारसूक्तेन 'यावामिन्द्रावरुणे'त्यनेन गणेन चतुर्मन्त्रेण 'योवा मिन्द्रावरुणे'त्यनेन चाष्टमन्त्रेण 'पवमानस्सुव'रित्यनेन चानुवाकेन सप्तदशर्चेन 'यद्देवा देवहेडन'मिति विंशत्यृचेन अच्छिद्रपठितेनानुवाकेन 'वैश्वानरो नृद्रुत्ये'त्यष्टमन्त्रेण एवमष्टभिर्गणैः प्रतिमन्त्रं जुहोति । अपि वा सकृदुपहत्य जुहुयादाद्यन्तम् । ततो जयादयः । जयादिहोमपक्षे जयादीन् कृत्वा स्विष्टकृतं जुहोति । तत्र सकृदुपस्तरणं सकृदवदानं द्विरभिघारणं च । ततश्चावशिष्टं कर्म यथागृह्यं कुर्वीत । अस्य कर्मणः प्रायश्चित्तत्वे शम्याः परिधयः प्रकारान्तरत्वे परिधिप्रहरणं भवति । ततः कलशमादाय चतुष्पथं गत्वा पादप्रक्षालनं कृत्वाऽऽचम्य प्राङ्मुख आसीनः कलशमादाय 'सिंहेमेमन्युरि'त्यनुवाकेन कलशस्थां स्वात्मनः छायां दृष्ट्वा पत्नीभिः सह कर्तृत्वे स्वस्वात्मनः छायां दृष्ट्वा 'सुमित्रा न आप ओषधयः सन्त्वि'ति किञ्चिज्जलमानीय 'दुर्मित्रास्तस्मै भूयासु'रित्यादिना पृष्ठतः कलशं निक्षिपे-

यस्यामस्य दिशि द्वेष्यो भवति । तत अप उपस्पृश्य गृहान् व्रजेत् । एवं सप्ताहं त्रिषु सवनेषु कृत्वाऽन्ते आशीर्वचनं कारयेत् । ब्राह्मण-भोजनं (च) कुर्वीत । सप्ताहं सवनत्रये मौनव्रती सकृद्धविष्याशी नियतेन्द्रियश्च भवेदिति । इत्यापस्तम्बीयो गणहोमविधिः ।

अथ बौधायनमतेन गणहोमविधिः । काम्यानां कर्मणां आधानस्य वा आदौ यदा वा पवित्रकामना तदा गणहोमं कुर्यात् । पूर्वाह्णेऽग्नि-प्रतिष्ठापनान्तं कृत्वा प्राणानायम्य 'सकलपापक्षयार्थं अशेषकर्मानु-ष्ठानयोग्यतासिध्यर्थं वा गणहोमं करिष्ये, तत्र सविता देवता आघारवत्तन्त्र'मित्यादि सङ्कल्प्य पक्वहोमान्तं कृत्वाऽवशिष्टं चरौ प्रभूतमाज्यमानीय मेक्षणेनोपघातं जुहोति । 'अग्ने नये'ति षडर्चेन पवित्रसूक्तेन 'सहस्रशीर्षे'ति पुरुषसूक्तेन अष्टादशर्चेन 'अग्नेर्मन्वे'ति मृगारसूक्तेन द्वाविंशत्यृचा चतुष्प्रतीकेन 'यावामि-न्द्रावरुणे'ति चत्वारो मन्त्राः सानुषङ्गाः 'यो वा मिन्द्रा वरुणा-वग्ना'वित्यष्टौ सानुषङ्गाः । इत्यंहोमुचां गणाभ्यां (?) पवमानः सुवरित्यनुवाकेन सप्तदशर्चेन यद्देवा देवहेडनमित्यच्छिद्रपठितेना-नुवाकेन विंशत्यृचा 'वैश्वानरो न ऊत्ये' त्यष्टाभिर्गणैस्त्र्युत्तरं शतं चरुणा हुत्वा स्विष्टकृतमवदायव्याहृत्य स्विष्टकृदादिवरदानान्तं कृ-त्वोदपात्रमादाय नैर्ऋतिं दिशं गत्वा चतुष्पद उपविश्योदपात्रं पुरो निधाय तत्रात्मनो रूपमवेक्षमाणः पाप्मनो विनधीन् पाप्मानं वि-विच्य तत्र तत्र निधाय विनधीन्मन्त्रान् 'सिंहे मे मन्यु'रित्यन्त-मनुवाकं निगद्य निनीयापः पारस्य पात्रमनवेक्षमाणः आगत्य ह-स्तपादं प्रक्षाल्य तेनैव पथा यथैतमेत्य स्नानं कुर्यात् । एवमेव सप्ताहं सवनत्रये कृत्वा सप्ताहान्ते पायसेन सर्पिषा ब्राह्मणान् भोज-यित्वा तेभ्यो गोभूतिलहिरण्यानि दत्वा सर्वेभ्यः पाप्मभ्यः प्रमु-च्यते महतः पातकादपि। काम्यानां कर्मणां च योग्यो भवति । इमां क्रियामाचार्यपितृमातॄणामात्मनश्च कुर्यात् । नान्यस्य । अन्यस्य कु-र्वन्नश्यति । कारयिता तु सर्वस्मात्पापात्प्रमुच्यते । अब्दायनर्तुमास-पक्षा अस्य विकल्पिताः कालाः। अष्टानां गणानां होममात्रमपि कु-र्यात् । एवं वा गणं जुहुयात्, जपेद्वा । दश पूर्वान् दशपरानात्मानं

चैकविंशं यावच्च पश्यति तावत्पुनाति । य एवोद्धारयति य श्चैतदाह यस्मा एतदाहेत्याह भगवान् बौधायनः । इति बोधायनप्रोक्तो गणहोमः ।

अथ मन्त्रपाठानुष्ठानसहितो गणहोमविधिः प्रदर्श्यते । अत्रापि गुरुलघुकल्पभेदे कूश्माण्डहोमोक्तैव व्यवस्था ग्राह्या । आधानं चिकीर्षुः काम्यकर्माणि वा चिकीर्षुः तदादौ यदा वा साक्षात् द्वादशवार्षिकादिमहाप्रायश्चित्तविषयभूतपापनिवृत्तिकामना तदा च यजमानः स्नात्वा नित्यकर्म निर्वर्त्य येषु कर्मसु पत्न्या सहाधिकारः तत्र पत्नीसहितः पत्नीबहुत्वेऽनिषिद्धाभिश्च सहितः पापक्षयार्थत्वेऽस्य कर्मणः स्वयमेवैकः पवित्रपाणिर्दर्भेष्वासीनः प्राणानायम्य 'अमुकप्रयोजनार्थं सप्ताहं सवनत्रयेण गणहोमान् होष्ये' इति सङ्कल्प्य पूर्वं पश्चाद्वा यथागृह्यमग्निं प्रतिष्ठाप्य यथाशाखं च प्रधानचरुहोमात्प्रागङ्गभूतपक्वहोमकरणपक्षे तत्र 'सविता देवता आधारवत्तन्त्र' मित्यभिलप्य स्थालीपाकवत् पत्न्यवहन्तीत्यादि प्रतिष्ठितचर्वभिघारान्तं कृत्वा पात्रप्रयोगसमये प्रोक्षणीपात्रेण सह प्रणीतापात्रं तथा तन्तुभिर्वेष्टितं कलशं च प्रयुज्य प्रणीताप्रणयनकाले प्रणीतामासाद्य ततः सपवित्रे कलशे अप आनीयोत्पूय प्रणीतापात्रस्योत्तरतो निदधीत । ततश्च ब्रह्मप्रतिष्ठापनाज्यविलापनप्रभृत्यग्निमुखान्तं कृत्वा अङ्गभूतपक्वहोमकरणपक्षे चरुमवदानधर्मेणादाय कूष्माण्डहोमकरणरीत्या गायत्रीं पुरोनुवाक्यामनूच्य तामेव याज्यां पठित्वा स्वाहेति जुहोति । सवित्र इत्युद्देशत्यागः । आपस्तम्बमतेऽग्निमुखानन्तरमेव प्रधानचरुहोमः । बोधायनमते त्वङ्गभूतपक्वहोमानन्तरम् । अथ चरौ प्रभूतं घृतमादाय दर्व्यामुपस्तीर्य द्विरवदायाभिघार्याऽ'ग्ने नये'ति सूक्तेनान्यैश्च वक्ष्यमाणैः पुरुषसूक्तादिभिस्त्र्युत्तरं शतं प्रतिमन्त्रं जुहुयात् । बोधायनमते त्ववदानधर्मेणादाय पर्वोक्तैरेव मन्त्रैर्मेक्षणेनोपघातं जुहुयात् । अग्ने नयेति षड्टचः पवित्रसूक्तस्य विश्वेदेवा ऋषयः । अग्निर्देवता । त्रिष्टुप् छन्दः । चरुहोमे विनियोगः । "अग्ने नय सुपथा राये अस्मान्विश्वानि देववयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम" स्वाहाऽग्नये । "प्रवः शुक्राय भानवे भरध्वं हव्यं मतिं

चाग्नये सुपूतम् । यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना-जिगाति "। स्वाहा अग्नये। "अच्छागिरो मतयो देवयन्तीः। अग्निं यन्ति द्रविणं भिक्षमाणाः सुसन्दृशं सुप्रतीकं स्वञ्चं हव्यवाह-मरतिं मानुषाणाम् "। स्वाहा अग्नये । "अग्ने त्वमस्मद्युयो-ध्यमीवाः। अनग्नित्रा अभ्यमन्त कृष्टीः। पुनरस्मभ्यं सुविता यदे-वाक्षां विश्वेभिरजरेभिर्यजत्र "। स्वाहा अग्नये । "अग्ने त्वं पारयानव्यो अस्मान् स्वस्तिभिरतिदुर्गाणि विश्वा पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः "। स्वाहा अग्नये। "प्र-कारवो मनना वच्यमाना। देवद्रीचीं नयथ देवयन्तः। दक्षिणावाड्वा-जिनी प्राच्येति। हविर्भरन्त्यग्नये घृताची "।स्वाहा अग्नये। इ-त्येकं सूक्तम्। अयमेको गणः। सहस्रशीर्षेत्यष्टा दशर्चस्य पुरुष-सूक्तस्य प्रजापतिः ऋषिः। जगद्बीजं पुरुषो नारायणो वा देवता। आद्याः पञ्चदशानुष्टुभः अन्त्यास्तिस्रस्त्रिष्टुभः। चरुहोमे विनियोगः। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृ-त्वाऽत्यतिष्ठद्दशाङ्गुलम् "। "पुरुष एवेदं सर्वं यद्भूतं यच्च भ-व्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति "। "एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रि-पादस्यामृतं दिवि "। "त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्ये-हाभवात्पुनः ततो विष्वङ्व्यक्रामच्छाशनाऽनशने अभि "। "तस्माद्विराडजायत विराजोऽधि पूरुषः । सजातोऽत्यरिच्यत पश्चाद्भूमिमथो पुरः "। "यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः "। "सप्तास्या-सन् परिधयः त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् "। "तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषय श्च ये "। "तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं। पशूंस्तांश्चक्रे वायव्यान् आरण्यान् ग्राम्यांश्चये "। "तस्माद्यज्ञात् सर्वहुतः ऋचः सा-मानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत "। "तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे त-स्मात् तस्माज्जाता अजावयः "। "यत्पुरुषं व्यदधुः कतिधा

व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते"। "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत"। "चन्द्रमा मनसो जातः। चक्षोः सूर्योऽजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत"। "नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोका अकल्पयन्"। "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वा अभिवदन्यदास्ते"। "धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः। तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते"। "यज्ञेन यज्ञमजयन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः"। सर्वत्र स्वाहा जगद्बीजाय पुरुषाय नारायणायेति। इति द्वितीयसूक्तम्। अयमपरो गणः। अग्नेर्मन्वेति द्वाविंशर्चमृगारसूक्तस्य विश्वे देवा ऋषयः। लिङ्गोक्ता देवताः। आदितः सप्त उपरिष्टाज्ज्योतिषः। अष्टमी चतुष्पदा पङ्क्तिः। ततः पञ्च उपरिष्टाज्ज्योतिषः। चतुर्दशी पथ्या। पञ्चदशीषोडश्यावनुष्टुभौ। सप्तदशी गायत्री। ततस्त्रिष्टुप्। ऊनविंशीविंशीच उपरिष्टाज्ज्योतिषौ। अन्ते द्वे त्रिष्टुभौ। चरुहोमे विनियोगः। "अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते। विश्वस्यां विशि प्रविविशिवांसमीमहे स नो मुञ्चत्वँह सः"। स्वाहा अग्नये। "यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम्। स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वँहसः"। स्वाहा अग्नये। "इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नस्तोमा उप मामुपागुः। यो दाशुषः सुकृतो हवमुपगन्ता स नो मुञ्चत्वँहसः"। स्वाहा इन्द्राय। "यः सङ्ग्रामं नयति संवशी युधे यः पुष्टानि संसृजति त्रयाणि। स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वँहसः"। स्वाहा इन्द्राय। मन्वे वां मित्रावरुणा तस्य वित्तं सत्यौजसा दृंहणा यं नुदेथे। या राजानं सरथं याथ उग्रा ता नो मुञ्चतमागसः"। स्वाहा मित्रावरुणाभ्याम्। "यो वां रथ-

ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन्। स्तौमि मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः"। स्वाहा मित्रावरुणाभ्याम्। "वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः। यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः"। स्वाहा वायुसूर्याभ्याम्। "उपश्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन्। स्तौमि वायुं सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः"। स्वाहा वायुसूर्याभ्याम्। "रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः। ययोर्वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः"। स्वाहा अश्विभ्याम्। "यदयातं वहतुं सूर्यायास्त्रिचक्रेण संसदमिच्छमानौ। स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः"। स्वाहा अश्विनीभ्याम्। "मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे। आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः"। स्वाहा मरुद्भ्यः। "तिग्ममायुधं वीडितं सहस्वत् दिव्यं शर्द्धः पृतनासु जिष्णु। स्तौमि देवान् मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः"। स्वाहा मरुद्भ्यः। "देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तुविश्वे। आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः"। स्वाहा विश्वेभ्यो देवेभ्यः। "यदिदं माऽभिशोचति पौरुषेयेण दैन्येन स्तौमि विश्वान् देवान् नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः"। स्वाहा विश्वेभ्यो देवेभ्यः। अनुनोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम्। अग्निश्च हव्यवाहनो भवतां दाशुषेमयः"। स्वाहा अनुमत्यै हव्यवाहे अग्नये च। "अन्विदनुमते त्वं मन्यासै शं च नः कृधि क्रत्वे दक्षाय नो हिनु प्रण आयूंषि तारिषः"। स्वाहा अनुमत्यै। "वैश्वानरो न ऊत्या प्रयातु परावतः अग्नि रुक्थेन वाहसा। स्वाहा वैश्वानरायाग्नये"। "पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सरिषः पातु नक्तम्"। स्वाहा वैश्वानरायाग्नये। "ये अप्रथेताममितेभिरोजोभिः ये प्रतिष्ठे अभवतां वसूनाम् स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः"। स्वाहा द्यावापृथिवीभ्याम्। "उर्वीरोदसी वरिवः कृ-

णोतं क्षेत्रस्य पत्नी अधि नो ब्रूयातम् । स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमँहसः ”। स्वाहा द्यावापृथिवीभ्याम् । “ यत्ते वयं पुरुषत्रा यविष्ठाविद्वांसश्चकृमा कच्चनाऽऽगः । कृधी-स्वस्माँअदितेरनागा: व्येनांसि शिश्रथो विष्वगग्ने ” । स्वाहा अग्नये । “ यथाह तद्वसवो गौर्यंचित्पदि षितामममुञ्चता यजत्राः । एवात्वमस्मत्प्रमुञ्चा व्यँहः प्रातार्यग्ने प्रतरान्न आयुः ” । स्वाहा अग्नये। इति तृतीयसूक्तम् । अयं तृतीयो गणः। “या वामिन्द्रावरुणे”-त्येतेषां चतुर्णां यजुर्मन्त्राणां विश्वेदेवा ऋषयः इन्द्रावरुणौ देवता चरुहोमे विनियोगः “ या वामिन्द्रावरुणा यतव्या तनूस्तयेममं-हसोमुञ्चतम् ” । स्वाहा इन्द्रावरुणाभ्याम् । “ या वामिन्द्रावरुणा सहस्या तनूस्तयेममंहसोमुञ्चतम् ” । स्वाहा इन्द्रावरुणाभ्याम् । “ या वामिन्द्रावरुणा रक्षस्या तनूस्तयेममंहसो मुञ्चतम् ” । स्वाहा इन्द्रावरुणाभ्याम् । “ या वामिन्द्रावरुणा तेजस्या तनूस्तये-ममंहसो मुञ्चतम् ” । स्वाहा इन्द्रावरुणाभ्याम् । अयं चतुर्थो गणः । “ यो वा मिन्द्रावरुणा”वित्यष्टानां यजुर्मन्त्राणां विश्वे देवा ऋषयः । इन्द्रावरुणौ देवता । चरुहोमे विनियोगः । “ यो वामि-न्द्रावरुणावग्नौ स्रामस्तं वामेतेनावयजे ” । स्वाहा इन्द्रावरुणा-भ्याम् । “ यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेना-वयजे ”। स्वाहा इन्द्रावरुणाभ्याम् । “ यो वामिन्द्रावरुणा चतु-ष्पात्सु स्रामस्तं वामेतेनावयजे ” । स्वाहा इन्द्रावरुणाभ्याम् । “ यो वामिन्द्रावरुणा गोष्ठे स्रामस्तं वामेतेनावयजे ’ । स्वाहा इन्द्रा-वरुणाभ्याम् । “ यो वामिन्द्रावरुणा गृहेषु स्रामस्तं वामेतेनाव-यजे ”। स्वाहा इन्द्रावरुणाभ्याम् । “ यो वामिन्द्रावरुणाऽप्सु स्रामस्तं वामेतेनावयजे ” । स्वाहा इन्द्रावरुणाभ्याम् । “ यो वामिन्द्रावरुणौषधीषु स्रामस्तं वामेतेनावयजे ”। स्वाहा इन्द्रा-वरुणाभ्याम् । “ यो वामिन्द्रावरुणा वनस्पतिषु स्रामस्तं वामेतेना-वयजे ” स्वाहा इन्द्रावरुणाभ्याम् । अयं पञ्चमो गणः । पव-मानः सुवर्जन इति सप्तदशर्चानुवाकस्य सोमः ऋषिः लिङ्गोक्ता दे-वताः । पावमान्यो वा देवताः । आद्ये द्वे गायत्र्यौ । तृतीयाऽनु-ष्टुप् । चतुर्थपञ्चम्यौ गायत्र्यौ । ततो द्वे त्रिष्टुभौ । अष्टमी गायत्री ।

ततोऽष्टावनुष्टुभः। सप्तदशी त्रिष्टुप्। चरुहोमे विनियोगः। "पवमानः सुवर्जनः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा"। स्वाहा पवमानाय पावमानीभ्यो वा। उत्तरत्र मन्त्रेष्वपि। पावमान्यै इति वा उद्देशत्यागः। "पुनन्तु मा देवजनाः पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः"। स्वाहा देवजनेभ्यो मनुभ्यो विश्वेभ्यो आयुभ्यः। "जातवेदः पवित्रवत् पवित्रेण पुनाहि मा। शुक्रेण देव दीद्यत् अग्ने क्रत्वा क्रतूँरनु"। स्वाहा जातवेदसे। "यत्ते पवित्रमर्चिषि अग्ने ब्रिततमन्तरा ब्रह्म तेन पुनीमहे"। स्वाहा अग्नये। "उभाभ्यां देव सवितः पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे"। स्वाहा सवित्रे। "वैश्वदेवी पुनती देव्यागात् यस्यै बह्वीस्तनुर्वो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु वयं स्याम पतयो रयीणाम्"। स्वाहा वैश्वदैव्यै देव्यै। "वैश्वानरो रश्मिभिर्मा पुनातु वातः प्राणेनेषिरो मयोभूः। द्यावापृथिवीपयसा पयोभिः ऋतावरी यज्ञिये मा पुनीताम्"। स्वाहा वैश्वानराय वाताय इषिरायमयोभुवे द्यावापृथिवीभ्यां च। "बृहद्भिः सवितस्तृभिर्वर्षिष्ठैर्देव मन्मभिः। अग्ने दक्षैः पुनाहि मा"। स्वाहा सवित्रे अग्नये च। "येन देवा अपुनत येनापो दिव्यं कशः। तेन दिव्येन ब्रह्मणा इदं ब्रह्म पुनीमहे"। स्वाहा दिव्याय ब्रह्मणे। यः पावमानीरध्येति ऋषिभिः संभृतं रसम्। सर्वं स पूतमश्नाति स्वदितं मातरिश्वना"। स्वाहा पावमानीभ्यः। पावमानीर्यो अध्येति ऋषिभिः सम्भृतं रसम्। तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम्"। स्वाहा पावमानीभ्यः। "पावमानीः स्वस्त्ययनीः सुदुघा हि पयस्वतीः ऋषिभिः संभृतो रसः ब्राह्मणेष्वमृतं हितम्"। स्वाहा पावमानीभ्यः। "पावमानीर्दिशन्तु न इमं लोकमथो अमुम्। कामान् समर्द्धयन्तु नः। देवीर्देवैस्समाभृताः"। स्वाहा पावमानीभ्यः। "पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः। ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम्"। स्वाहा पावमानीभ्यः। "येन देवाः पवित्रेण आत्मानं पुनते सदा। तेन सहस्रधारेण पावमान्यः पुनन्तु मा"। स्वाहा पावमानीभ्यः। "प्राजापत्यं पवित्रं शतोद्यामं। हिरण्मयं तेन ब्रह्मविदो वयं पूतं ब्रह्म

पुनीमहे ”। स्वाहा पावमानीभ्यः। “ इन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या यमो राजा प्रमृणाभिः पुनातु मा। जातवेदामोर्जयन्त्या पुनातु ”। स्वाहा सुनीत्या सहितायेन्द्राय स्वस्त्या सहिताय सोमाय समीच्या सहिताय वरुणाय प्रमृणाभिः सहिताय यमाय राज्ञे ऊर्जयन्त्या सहिताय जातवेदसे। अयन्तु षष्ठो गणः। यद्देवा देवहेडन मित्यछिद्रपठितस्य विंशत्यृचोनुवाकस्य विश्वेदेवा ऋषयः। लिङ्गोक्ता देवताः। आद्याऽनुष्टुप्। द्वितीया षडवसाना जगती महापङ्क्त्याख्या। तृतीयाऽनुष्टुप्। चतुर्थी त्रिष्टुप्। पञ्चमी सप्तपदाऽतिशक्वरी। षष्ठी त्रिष्टुप्। सप्तमी षडवसानाऽतिजगती। अष्टमी षट्पदा जगती। नवमी बृहती। ततो द्वे षट्पदे शक्वर्यौ। द्वादशी त्रिष्टुप्। त्रयोदशी सप्तपदा अष्टिः। चतुर्दश्यनुष्टुप्। पञ्चदश्यनुष्टुप् विराट्। षोडशी गायत्री। ततस्तिस्रः त्रिष्टुभः। विंशत्यनुष्टुप्। चरुहोमे विनियोगः। “ यद्देवा देवहेडनं देवासश्चकृमा वयम्। आदित्यास्तस्मान्मामुञ्चत। ऋतस्यर्तेन मामुत ”। स्वाहा आदित्येभ्यः। “ देवा जीवनकाम्या यत् वाचाऽनृतमूदिम। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ”। स्वाहा अग्नये गार्हपत्याय। “ ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्वति। ऋतान्मा मुञ्चताऽँहसो यदन्यकृतमारिम ”। स्वाहा द्यावापृथिवीभ्यां सरस्वत्यै च। “ सजात शंसादुत वा जामि शँसात् ज्यायसः शँसादुत वा कनीयसः। अनाज्ञातं देवकृतं यदेनस्तस्मात्त्वमस्मान् जातवेदो मुमुग्धि ”। स्वाहा जातवेदसे। “ यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां शिश्नैः यदनृतं चकृमा वयम्। अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसं ”। स्वाहा अग्नये गार्हपत्याय। “ यद्धस्ताभ्यां चकर किल्बिषाणि अक्षाणां वग्नुमुपजिघ्नमानः। दूरे पश्या च राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि ”। स्वाहा राष्ट्रभृतेऽप्सरोभ्यश्च। “ अदीव्यन्नृणं यदहं चकार यद्वाऽदास्यन् सन् संजगाराजनेभ्यः। अग्निर्मा तस्मादेनसः गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ”। स्वाहा अग्नये गार्हपत्याय। “ यन्मयि माता

गर्भे सति एनश्चकार यत्पिता । अग्निर्मा तस्मा”दित्यादि । “यदा पिपेष मातरं पितरं पुत्रः प्रमुदितो धयन् । अहिंसितौ पितरौ मया तत्तदग्ने अनृणो भवामि”। स्वाहा अग्नये। “यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मा”दित्यादि । “यदाशसा निःशसा यत् पराशसा यदेनश्चकृमा नूतनं यत्पुराणम् । अग्निर्मा तस्मा”दित्यादि । “अतिक्रामामि दुरितं यदेनः जहामि रिप्रं परमे सधस्थे । यत्र यन्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतांनु लोकम्”। स्वाहा अग्नये। “त्रिते देवा अमृजतैतदेनः त्रितएतन्मनुष्येषु मामृजे ततो मा यदि किञ्चिदानशे । अग्निर्मा तस्मा”दित्यादि । “दिवि जाता अप्सु जाता या जाता ओषधीभ्यः । अथो या अग्निजा आपस्ता नः शुन्धन्तु शुन्धनीः”। स्वाहा अद्भ्यः । ‘यदापो नक्तं दुरितं चराम यद्वा दिवा नूतनं यत्पुराणं हिरण्यवर्णास्तत उत्पुनीत नः। स्वाहा अद्भ्यः । “इमं मे वरुण श्रुधीहवमद्या च मृडय त्वामवस्युराचके”। स्वाहा वरुणाय। “तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिरहेडमानो वरुणेह बोध्युरुशँसमान आयुः प्रमोषीः”। स्वाहा वरुणाय । “त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषांसि प्रमुग्ध्यस्मत्”। स्वाहा अग्नीवरुणाभ्याम्। “स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवयक्ष्वनो वरुणं रराणो वीहि मृडीकं सुहवो न एधि”। स्वाहा अग्निवरुणाभ्याम् । “त्वमग्ने अयास्ययासन्मनसाहितः। अयासन् हव्यमूहिषेऽयानो धेहि भेषजम्”। स्वाहा अग्नये। अयमनुवाकः सप्तमो गणः। वैश्वानरो न ऊत्येत्यष्टानामृङ्मन्त्राणां विश्वेदेवा ऋषयः। वैश्वानरो देवता। आद्ये गायत्र्यौ। तृतीया जगती। ततस्तिस्रः त्रिष्टुभः। सप्तमी जगती। अष्टमी त्रिष्टुप्। चरुहोमे विनियोगः। “वैश्वानरो न उत्याऽऽप्रयातु परावतः। अग्निरुक्थेन वाहसा”। स्वाहा अग्नये वैश्वानराय। “ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं धर्ममीमहे”। स्वाहा अग्नये वैश्वानराय”। “वैश्वानरस्य दँसनाभ्यो बृहदरिणादेकस्वप-

स्यया कविः। उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा "। स्वाहा अग्नये वैश्वानराय। " पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश। वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सरिषः पातु नक्तम् "। स्वाहा अग्नये वैश्वानराय। " जातो यदग्ने भुवनाव्यख्यः पशुं न गोपा इर्यः परिज्मा। वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः "। स्वाहा अग्नये वैश्वानराय। " त्वमग्ने शोचिषा शोशुचान आरोदसी अपृणा जायमानः। त्वं देवाँ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महि त्वा "। स्वाहा अग्नये जातवेदसे। " अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीर्यं। वयं जयेम शतिनँ सहस्रिनं वैश्वानरवाजमग्ने तवोतिभिः "। " वैश्वानरस्य सुमतौ स्याम राजाहिकं भुवनानामभिश्रीः। इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण "। स्वाहा अग्नये वैश्वानराय। अयमष्टमो गणः। इत्यष्टभिर्गणैः प्रतिमन्त्रं त्र्युत्तरशतं चरुणा हुत्वा जयादिहोमान् जुहुयात्। नव जयादयो भवन्ति। जयादि मन्त्राः कूष्माण्डहोमे प्रदर्शिताः ' यदस्य कर्मणोऽत्यरीरिच 'मित्येतदन्ताः। जयादिहोमपक्षे जयादिहोमानन्तरं सकृदुपस्तीर्य सकृदवदाय द्विरभिधार्य ' अग्नये स्विष्टकृते स्वाहे 'ति स्विष्टकृतं जुहुयात्। जयाद्यकरणपक्षे प्रधानहोमानन्तरं स्विष्टकृतं जुहुयात्। इत्यापस्तम्बः। बौधायनमते तु प्रधानहोमानन्तरं अवदानधर्मेण स्विष्टकृतमवदाय विश्वेदेवार्षावग्निस्विष्टकृद्देवताकावनुष्टुप्विराट्छन्दस्कौ याज्यानुवाक्यामन्त्रौ पठित्वा जुहुयात्। मन्त्रौ तु हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृतमाहुवेमो "मिति पुरोनुवाक्यामनूच्य ततश्च " स्विष्टमग्ने अभि तत्पृणाहि विश्वा देवा पृतना अभिष्य। उरुन्नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरन्न आयुः "। स्वाहा अग्नये स्विष्टकृते। एवं स्विष्टकृतं हुत्वा ब्रह्मवरदानान्तं कर्म कुर्वीत। आपस्तंबमते तु स्विष्टकृतं हुत्वाऽनुयाजसमिधं ' अग्नये स्वाहा ' इत्यग्नावाधाय ' रुद्राय तन्तुचराय स्वाहे 'तीध्मबन्धनीमपि हुत्वा ततश्चास्य कर्मणः प्रायश्चित्तार्थत्वे परिधिप्रहरणाभावः। प्रकारान्तरत्वे तु बर्हिरञ्जनपरि-

धिप्रहरणसंस्रावहोमान्तं कर्म कृत्वा ततः प्रायश्चित्ताहुतीर्जुहुयात्। संस्रावादिहोमप्रकारोऽपि समन्त्रको 'विश्वेभ्यो देवेभ्यः संस्रावभागेभ्यः' इत्यादिना ग्रन्थेन जयादिहोमानन्तरं कूष्माण्डहोमप्रकरणे प्रदर्शितः। अथ मतद्वयेऽपि ब्रह्मविसर्जनान्ते कर्मणि संवृत्ते पूर्वासादितकलशमादाय नैर्ऋतीं दिशं गत्वा चतुष्पथ उपविश्य पादौ प्रक्षाल्य आचम्य प्राङ्मुख उपविश्य कलशं पुरो निधाय तत्र पत्नीभिः सह कर्तृत्वे ताभिः सह अथैकस्यैव कर्तृत्वे तदा स्वयमेव यजमानः कलशे आत्मनो रूपमवेक्षमाणो विनिधिसंज्ञकमन्त्रसमुदायात्मकं 'सिंहे मे मन्यु' रित्यनुवाकं बोधायनाचार्यप्रणीतकल्पसूत्रस्थं पठेत्। अस्यानुवाकस्य सौत्रत्वादेव न ऋष्यादयः प्रदर्शिताः। "सिंहे मे मन्युर्व्याघ्रे मे न्तरामयो वृके मे क्षुदश्वे मे व्यसिर्ङ्न्वनि। मे पिपासा राजगृहे मेऽशनायाऽश्मनि मे तन्द्रिर्गर्दभे मे रिश[1] शार्यके मे ह्रीरश्वत्थे[2] मे वेपथुः कूर्मे मेऽङ्गारो वस्ते मेऽपसर्या प्रिये मे मृत्युर्भ्रातृव्ये मे पाप्मा सपत्ने मे निर्ऋतिः दुष्कीर्तौ मे वृद्धिः परस्वति मे समृद्धिः खड्गे मे आर्तिर्गवये म आन्ध्यं गौतमे मे बाधिर्यमृक्षे मे शोको गोधायां मे स्वेदो जरायां मे हिमः कृष्णशकुनौ मे भीरुताकशे मे पापगन्ध उलूके मे श्वकत्यशोके म ईर्ष्या मर्कटे मे दुर्बुद्धिः कुलले मे मंस्यो लले मे प्रध्या उष्ट्रे मेऽनृतो ऋश्ये मे श्रम उर्व्यां मे आव्यं कोशे मे गन्धः कूर्मायां मेऽलङ्कारः सूकरे मे क्रन्दथुः पृदाकुनि मे स्वप्नोऽजगरे मे दुःस्वप्नो विद्युति मेयो लोलायां मे क्लेदः शरभे मे पाप्माऽलक्ष्मीर्भेस्त्रीषु मेऽनृतं अजासु मे कर्कशो व्रात्ये म इत्या शूद्रे मे स्तेयं वैश्ये मे कार्मकृत्यं राजन्यबन्धुनि मे ज्ञानं नैषादे मे ब्रह्महत्या कुलिङ्गे मे क्षवथु उलले मे विलासः उड्रिणि मेऽवमतिः किंपुरुषेषु मे रो द्वीपिनि मेऽनिष्टयं हस्तिनि मे किलासः शुनि मे दुरिष्टं स्तावन्येषु मे म्लेच्छो विदेहेषु मे शपथो महावर्षेषु मे ग्लोर्मूजवत्सु मे तप्मा दुन्दुभौ मे काशिका इक्ष्वाकुषु मे पित्तं कलिङ्गेषु मेऽमेध्यमश्वभर्यां मे प्रजस्ता पुंश्चल्यां मे दुश्चरित्रं आखुनि मे दन्तरोगा मक्षिकायां मे श्वल्कशः शुके मे ह-

---

१. शिरः क. पाठः। २. रश्वह्ये ख. पाठः रतत्स्वत्थे ग. पाठः रश्वह्ये क. पाठः।

रिमा मयूरे मे जल्प्या वृषे मे जरा थाघे मे पापवादः अप्सु मे श्रमो ब्रह्मोज्से मे किद्बिषम् अपेहि पाप्मन् पुनरपनाशितो भव नः पाप्मन् सुकृतस्य लोके पाप्मत्वेह्यविद्रुतो यो नः पाप्मन् जहाति तमुखा जहिमो वयमन्यत्रास्मिन्निविशताम् सहस्राक्षो अमर्त्यो योनो द्वेष्टि स रिष्यति यमु द्विष्मस्तमु जहि "। इत्यभिमन्त्र्य यस्यामस्य दिशि द्वेष्यो भवति तां दिशमेत्य अप उपसिञ्चेत। पृष्ठतः 'दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यञ्च वयं द्विष्य' इति। अथाऽप उपस्पृश्य पात्रमनवेक्षमाणो यथेतं देवयजनं प्रविशेत्। ततः स्नायात्। एवं सप्ताहं त्रिषु सवनेषु कृत्वाऽन्ते आशीर्वचनं कारयित्वा पायसेन सर्पिषा यथाशक्ति ब्राह्मणान् भोजयित्वा तेभ्यो गोभूतिलहिरण्यानि दद्यात्। यावद्व्रतं सवनत्रये मौनी सकृद्धविष्याशी नियतेन्द्रियश्च भवेत्। एवं कुर्वन् सर्वेभ्यः पाप्मभ्यः प्रमुच्यते।

[1]महार्णवाख्ये महिते प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नौघनिधिस्तृतीयः
स्तुङ्गस्तरङ्गोयमगादगाधः॥

---

१. इति श्रीपद्मिभट्टात्मज भट्टश्रीविश्वेश्वरविरचिते महार्णवाभिधाने कर्मविपाके तृतीयस्तरङ्गः। इति ग. पाठः।

# चतुर्थस्तरङ्गः ।

कर्मविपाकपरिभाषायां प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरामः ।

" अथ कर्मक्षयोपायौ कृच्छ्रव्याधिविपर्ययौ ।
क्लेशासहत्वात्तत्राद्ये गां दद्याद् व्याधिकर्शितः ॥
एकां कृच्छ्रेऽतिकृच्छ्रे द्वे तिस्रश्चान्द्रायणे व्रते ।
गवामभावे निष्कं वा साशीतिशतकृच्छ्रदः ॥
जपदानेऽपि तत्सूक्तं कूष्माण्डगणहोमकृत् ।
सर्वपापप्रणुत्त्यर्थमथ व्याधिविपर्ययः " ॥

इत्येते श्लोकाः कूष्माण्डगणहोमात्प्राग्व्याख्याताः । तत्र अथ व्याधिविपर्यय इत्यनेन व्याधिप्रतिकृतिदानं वक्ष्यत इति प्रतिज्ञातम् । तदिदानीं व्याधिप्रति(कृति)दानं विवक्षुस्तदुपयुक्तं किञ्चिदाह –

" प्रतिमा द्विप्रकाराऽधिदेवतादेवतात्मिका ।
आतङ्कदेवता तत्र तत्र पूज्याऽधिदेवता ॥
प्रायेण सूर्यः सर्वेषां रोगाणामधिदैवतम् ।
'आरोग्यं भास्करादिच्छे' दिति प्रख्या श्रुतिः स्मृतिः " ॥

तत्र – व्याधिप्रतिमायामातङ्कनाम्नी देवता भवति । तत्र पूज्याऽधिदेवता । तत्र – व्याधिप्रतिकृतिपूजाकर्मणि अधिदेवता – सूर्यमूर्तिः पूज्या । अधुना व्याधिप्रतिकृतिद्रव्यपरिमाणं चाह –

" हेम्नः पलात्तदर्द्धाद्वा तदर्द्धाद्वा प्रकल्पयेत् " ।

सूर्यप्रतिमालक्षणमाह –

" सूर्यं द्विलोचनं पद्मे द्वे दधानं करद्वये " ।

व्याधिप्रतिमालक्षणंतु तत्तद्व्याधिहरकर्मप्रकरणे पृथगभिधास्यते । व्याधिभेदात्प्रतिमालक्षणान्यपि भिन्नानि । मण्डपपरिमाणं वेदिकापरिमाणं चाह – ' षोडश द्वादशाऽष्टौ वा हस्तास्तैर्मण्डपे कृते । तत्पादेनोत्तरप्राच्यां हस्तोच्छ्रायां च वेदिकाम् । षोडशद्वादशाष्टौ वा हस्ताः–तत्परिमिता शान्तिकर्मभूर्भवति । तैः – हस्तैः, तत्सङ्ख्याक-

हस्तपरिमित एव मण्डपो भवेत् । तस्मिन् मण्डपे कृते, तत्पादेन – मण्डपस्य चतुर्थांशेन, वेदिकामेकहस्तोन्नतां कुर्वीत । मण्डपस्य चतुर्थांशायामा च वेदिका भवतीत्यर्थः । उत्तरप्राच्याम् – मण्डपान्तरीशानदिशि ।

" ब्राह्मणं वेदशास्त्रज्ञं दान्तं शान्तं कुटुम्बिनम् ।
सत्यसन्धं सदाचारं युवानं करुणामृदुम् ॥
दरिद्रं मन्त्रतत्त्वज्ञं निवृत्तं च प्रतिग्रहात् ।
आचार्यं वृणुयाच्छक्तिनम्रः सत्कारपूर्वकम् ॥

शक्तिनम्रः – शक्त्यनुसारेण वस्त्रालङ्कारादीनाचार्याय वरणकाले दत्वा आचार्याधीनो भवेत् । स शक्तिनम्र इत्युच्यते । सत्कारो गन्धपुष्पादिभिः पूजनम् आचार्यकृत्यमाह –

" कृतोपवासस्तां रात्रौ प्रतिमामधिवास्य च " तां प्रतिमां – रोगप्रतिमां अधिदेवतारूपसूर्यप्रतिमां च । ' आतङ्कनाम्नीममुकव्याधिदेवतामधिवासयामी ' ति वेदिकाया उपरि प्रतिमां गन्धपुष्पाक्षतैरधिवास्य ' आतङ्कनाम्न्यै अमुकव्याधिदेवतायै नम ' इति षोडशोपचारपूजां विदधीत । अथवा वक्ष्यमाणसौराष्टाक्षरमन्त्रेण वा पूजयेत् । एवं रोगदेवतामधिवास्याधिदैवतं सूर्यमपि । सूर्यप्रतिमायामधिवासयेत् । ततः सौराष्टाक्षरेण पूजयेत् । तदनन्तरकृत्यमाह –

" अर्द्धरात्रे युतो विप्रैश्चतुर्भिर्मण्डपाद्बहिः ।
प्राच्यां पायसमांसादिबलिं निक्षिप्य मन्त्रतः " ॥

विप्रैर्युत आचार्यः । बलिदानमन्त्रमाह –

" आदित्या वसवो रुद्रा देवा भूतानि पन्नगाः ।
बलिनाऽनेन दत्तेन शान्तिं कुर्वन्तु सर्वशः " ॥ इति

" जागृयादुषसि स्नात्वा धारयन् वाससी नवे ।
निर्मले चन्द्रवच्छुक्ले शुक्लमाल्यानुलेपनः ॥
सालंकारः सपर्यान्ते मण्डपस्याधिवेदिकाम् " ।

मण्डपस्य सपर्यान्त इत्यन्वयः । अधिवेदिकां – वेदिकाया उपरि ।

" मण्डलं चतुरस्रं वा तन्मध्येऽष्टदलाम्बुजम् ।
लिखित्वा पिष्टचूर्णेन तत्रोपर्युपरि क्रमात् ॥
तिलानां पञ्चचतुरैस्त्रिभिर्द्रोणैस्तथाऽष्टभिः ।
पलैश्चतुर्भिर्द्वाभ्यां वा ताम्रपात्रं भवेन्नवम् ॥
शालेयैरक्षतैः पूर्णं सौरेणाष्टाक्षरेण ताम् ।
स्नापितां पञ्चगव्येन वस्त्रालङ्कारशालिनीम् " ॥

मण्डलं चतुरस्रं वेत्यादि। गोमयेन मण्डलाकारं चतुष्कोणं वा उपलिम्पेद्वेदिकाया एवोपरि। तत्रोपर्युपरि क्रमात् – तत्र – अष्टदलाम्बुजे, वक्ष्यमाणद्रव्याण्येकस्योपर्येकमित्येवं क्रमाद्भवन्तीत्यर्थः। पञ्च वा चत्वारो वा पञ्चचतुरास्तैः। त्रयो वा चत्वारो वा पञ्च वा अष्टौ वा तिलद्रोणानां सङ्ख्या। अत्रायं क्रमः। उपलिप्ते वेदिकाप्रदेशेऽष्टदलपद्मस्योपर्युक्तसङ्ख्याकास्तिलाः स्थापनीयाः। तस्मिन् तिलराशौ पलद्वयेन चतुष्टयेन वा अष्टकेन वा घटितं ताम्रपात्रं निक्षिपेत्तत्ताम्रपात्रमक्षतैः पूरयेदिति। सौरेणाष्टाक्षरेण ताम् – अत्र प्रतिमामपि विन्यस्येत्युत्तरत्र वक्ष्यमाणमनुषज्यते। तेनायमर्थः। तां रोगप्रतिमामधिदैवतां च प्रतिमां पञ्चगव्येनाष्टाक्षरेण मन्त्रेण स्नापितां वस्त्रालङ्कारयुतां ताम्रपात्रस्योपर्यक्षतमध्येऽष्टदलपद्मं लिखित्वा वक्ष्यमाणप्रकारेण मध्ये विन्यस्य वक्ष्यमाणं कुर्वीतेति।

ओं 'घृणिः सूर्य आदित्यों' इत्यष्टाक्षरस्य सौरमन्त्रस्य देवभागः ऋषिः। सूर्यो देवता। गायत्री छन्दः। अनन्तरकृत्य माह –

'प्रतिमामपि विन्यस्य तत्र देवं दिवाकरम्।
दीप्यमानप्रभाचक्रं सान्द्रसिन्दूरभूषितम्।
पद्मे दधानं हस्ताभ्यां स्मेरवक्त्रं द्विलोचनम् ॥
दिव्याभरणसम्पन्नं रक्तस्रग्गन्धवाससम्।
साङ्गहेमारविन्दस्य कर्णिकायां निषेदुषम् ॥
मूले पूर्वादिपत्राणां शुक्राङ्गारबुधांस्तमः।
गुरुमन्देन्दुकेतूंश्च नक्षत्राणि त्रिशस्त्रिशः ॥
मध्यतः पूर्वपत्राग्रे रेवत्यन्तानि विन्यसेत् "

प्रतिमामपीत्यादि । अपिशब्दः समुच्चये । अतएव रोगप्रतिमां दिवाकरप्रतिमाञ्च विन्यस्येत्यर्थः सिद्धो भवति । साङ्गहेमारविन्दस्येति । अङ्गानि दलानि । अष्टदलोपेतसौवर्णकमलस्य कर्णिकायां मध्यभागे निषेदुषं दिवाकरं विन्यसेदित्यन्वयः । मूले – आदिभागे । तमः – राहुः । मध्यतः पूर्वपत्राग्रे । मध्यतः – कर्णिकामध्ये । पूर्वपत्राग्रे – पूर्वदलस्यान्ते अयमर्थः – सौवर्णकमलस्य पूर्वदलप्रथमभागे शुक्रं स्थापयेत् । एवमाग्नेयादिदलादिषु अङ्गारकप्रभृतीन् श्लोकपाठक्रमेण स्थापयेत् । कर्णिकामध्ये सूर्यसमीपे अश्विनी भरणी कृत्तिका चेति त्रीणि नक्षत्राणि स्थापयेत् । पूर्वदलस्याग्रे रोहिण्यादीनि त्रीणि नक्षत्राणि । एवमुत्तरत्रापि प्रदक्षिणाकारं त्रीणि त्रीणि नक्षत्राणि विन्यसेत् । ततः किमित्याह –

"यथास्वं नाममन्त्रेण गन्धपुष्पाक्षतादिभिः ।
सर्वोपचारैश्चाभ्यर्च्य क्षीराहारं निवेदयेत्" ॥

नाममन्त्रेणेति । सूर्यपूज त्वष्टाक्षरेण सौरमन्त्रेण । व्याधिप्रतिमायाः शुक्रादिग्रहाणामश्विन्यादिनक्षत्राणां च चतुर्थ्यन्तेन नमोयुक्तेन तत्तद्देवतानाममन्त्रेण ।

चतुर्भिर्ऋत्विग्भिः सहित आचार्यस्तत्रैव तिलराशिसमीपे वेदिकायाः पूर्वस्यां दिशि धान्यराशौ वक्ष्यमाणगुणोपेतान् पञ्च कलशान् स्थापयेदित्याह –

"तत्रैव सहितो विप्रैश्चतुर्भिर्लोहितान्नवान् ।
निर्व्रणान्नवभीरत्नै र्युक्तान् चामीकरेण च ॥
राजद्वाराच्च शकलैर्मृत्तिकानां सचन्दनैः ।
अश्वस्थानात् गजस्थानाद्वल्मीकात्तीर्थसंगमात् ॥

मृत्तिकानां शकलैः खण्डै रित्यर्थः । अश्वस्थानादिभ्य आहृतैः मृत्तिकानां शकलैश्चन्दनसहितैर्युक्तानित्यन्वयः ।

रोचनागुग्गुलुभ्यां च पुण्यतीर्थाम्बुपूरितान् ।
पल्लवालङ्कृतमुखान् श्वेतवस्त्रेण वेष्टितान् ॥
पञ्चाभिषेककलशान् धान्यराशौ विनिक्षिपेत्" ।

ततः किंकुर्यादित्याह ।

" आपोहिष्ठादिभिर्मन्त्रैर्हिरण्येत्यादिभिस्त्रिभिः ।
पवमानानुवाकेन शं न इन्द्रानुवाकतः ॥
शं नो वातानुवाकेन घोषयेच्छन्तिवाचनम् " ।

आपोहिष्ठेति तृचस्य सिन्धुद्वीप ऋषिः आपो देवताः । गायत्री छन्दः । शान्तिपाठे विनियोगः । " आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः " । हिरण्यवर्णा इति तृचस्याग्निकाण्डान्तःपातित्वेनाग्निःऋषिः । आपो देवता । त्रिष्टुप् छन्दः । शान्तिपाठे विनियोगः । " हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः अग्निं या गर्भं दधिरे विरूपास्ता न आपः शँस्योना भवन्तु । यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु । यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शंस्योना भवन्तु " । पवमानः सुवर्जन इत्ययमनुवाको गणहोमप्रकरणे प्रदर्शितः । शन्न इन्द्रानुवाकेनेत्यनेनाश्वालायनपरिपाठितघोषशान्तिरुपलक्ष्यते । अत्र च वेदक्रमेण प्रथमत इयं शान्तिः पठनीया । पश्चाद्याजुषी शान्तिः । अथाऽऽश्वालायनघोषशान्ते ऋष्याद्यभिधीयते । 'आनो भद्रे'ति दशर्चं सूक्तम् । गौतमेन राहुगणेन दृष्टम् । वैश्वदेवम् । आद्याः पञ्च सप्तमी (च) जगत्यः । षष्ठी विराट् स्थाना । शेषास्त्रिष्टुभः । स्वस्ति नो मिमीतामिति पञ्चर्चो वर्गः आत्रेयेण स्वस्त्यात्रेयेण दृष्टो वैश्वदेवः । तिस्रस्त्रिष्टुभो द्वे आनुष्टुभौ । शन्न इन्द्राग्नीति पञ्चदशर्चं सूक्तं वासिष्ठार्षम् । वैश्वदेवम् । त्रैष्टुभम् । 'रक्षोहण'मिति पञ्चविंशर्चं सूक्तं आङ्गिरसेन पायुना दृष्टम् । आग्नेयम् । त्रैष्टभं चतुरनुष्टुबन्तम् । आशुः शिशान इति त्रयोदशर्चं सूक्तमैन्द्रेण प्रतिरथेन दृष्टम् । ऐन्द्रं त्रिष्टुभम् । चतुर्थी बार्हस्पत्यानुष्टुप् । ' मुञ्चामि त्वे'ति पञ्चर्चं सूक्तं प्राजापत्येन यक्ष्मनाशनेन दृष्टम् । ऐन्द्रं त्रिष्टुभम् । अन्त्याऽनुष्टुप् । त्यमूषु वाजिनमिति तृचं सूक्तं

अरिष्टनेमिना तार्क्ष्येण दृष्टम्। तार्क्ष्यत्रिष्टुभम्। सर्वेषामेतेषां शान्तिपाठे विनियोगः। एवमार्षादि विदित्वा शान्ति पाठं पठन् भद्रमश्नुते भद्रमश्नुते।

अथ घोषशान्तिवर्गः। "आ नो भद्राः क्रतवो यन्तु विश्वतो दब्धासो अपरीतास उद्भिदः। देवा नो यथा सदमिद्वृधे असन्न प्रायुवो रक्षितारो दिवे दिवे"। "देवानां भद्रा सुमति ऋजूयतां देवानां रातिरभिनो निवर्तताम्। देवानां सख्यमुपसेदिमा वयं देवान आयुः प्रतिरन्तु जीवसे। तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्त्रिधम्। अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगामयस्करत्"। "तन्नो वातो मयोभुवातु भेषजं तन्माता पृथिवी तत्पिता द्यौः तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम्"। "तमीशानं जगतस्तथुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेद सामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये"। "स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्तिनः पूषा विश्ववेदाः? स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु"। "पृषदश्वामरुतः पृश्निमातरः शुभं यावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह"। "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः"। "शतमिन्नु शरदो अन्ति देवा यत्रानश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मानो मध्यारीरिषतायुर्गन्तोः"। "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्"। "स्वस्ति नो मिमीतामश्विना भगः स्वस्तिदेव्यदितिरनर्वणः। स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवीसुचेतुना"। "स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः। बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः"। "विश्वेदेवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये। देवा अवन्त्वृभवः स्वस्तये स्वति नो रुद्रः पात्वंहसः। स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति। स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि। स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव।

पुनर्ददता घ्नता जानता सङ्गमेमहि " । इत्येकोवर्गः । अत्र परिशिष्टं ऋग्द्वयमामनन्ति । तद्यथा । " स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम । अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यं प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधे ष्वभयं नो अस्तु " । इति परिशिष्टं ऋग्द्वयम् । " शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या । शमिन्द्रा सोमा सुविताय शंयोः शन्न इन्द्रापूषणा वाजसातौ । शन्नो भगः शमुनः शंसो अस्तु शंनः पुरन्धिः शमु सन्तु रायः शन्नः सत्यस्य सुयमस्य शंसः शन्नो अर्यमा पुरुजातो अस्तु । शन्नो धाता शमु धर्ता नो अस्तु शन्न उरूची भवतु स्वधाभिः । शं रोदसी बृहती शंनोऽअद्रिः शन्नो देवानां सुहवानि सन्तु । शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रावरुणावश्विना शम् । शन्नः सुकृतां सुकृतानि सन्तु शन्न इषिरो अभिवातु वातः । " शन्नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु शन्न ओषधीर्वनिनो भवन्तु शन्नो रजस्पतिरस्तु जिष्णुः । शन्न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः । शन्नो रुद्रो रुद्रेभिर्जलाषः शन्नस्त्वष्टाग्नाभिरिह शृणोतु । शन्नः सोमो भवतु ब्रह्म शन्नः । शन्नो ग्रावाणः शमु सन्तु यज्ञाः । शन्नः स्वरूणां मितयो भवन्तु शंनः प्रस्वः शम्वस्तु वेदिः । शन्नः सूर्य उरुचक्षा उदेतु शन्न श्चतस्रः प्रदिशो भवन्तु । शन्नः पर्वता ध्रुवयो भवन्तु शन्नः सिन्धवः शमुसन्त्वापः । शन्नो अदितिर्भवतु व्रतेभिः शन्नो भवन्तु मरुतः स्वर्काः । शन्नो विष्णुः शमु पूषा नो अस्तु शन्नो भवित्रं शम्वस्तु वायुः । शन्नो देवः सविता त्रायमाणः शन्नो भवन्तूषसो विभातीः । शन्नः पर्जन्यो भवतु प्रजाभ्यः शन्नः क्षेत्रस्य पतिरस्तु शम्भुः । शन्नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु । शमभिषाचः शमु रातिषाच शन्नो दिव्या पार्थिवाः शन्नो अप्याः । शन्नः सत्यस्यपतयो भवन्तु शन्नो अर्वन्तः शमु सन्तु गावः । शं न ऋभवः सुकृतः सुहस्ताः शन्नो भवन्तु पितरो हवेषु । शन्नो अज एकपादेवो अस्तु शन्नोऽहिर्बुध्न्य शं समुद्रः " । " शन्नो अपान्नपात्पेरुरस्तु शन्नः पृश्निर्भवतु देवगोपा । आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रिय-

माणं नवीयः। शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः"। "ये देवा देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः। ते नो रासन्तमुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः" (इदमपरं सूक्तम्) "रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म। शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः पातु नक्तम्। अयोदंष्ट्रो अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः। आ जिह्वयामूरदेवान्रभस्व क्रव्यादो वृक्त्व्यपिधत्स्वासन्। उभोभयाविन्नुपधेहि दंष्ट्रा हिंस्रः शिशानो वरं परं च। उतान्तरिक्षे परियाहि राजन् जम्भैः सन्धेह्यभि यातुधानान्"। यज्ञैरिषूः सन्नममानो अग्ने वाचा शल्याँअशनिभिर्दिहानः। ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रतिभङ्ध्येषाम्"। "अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम्। प्रपर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्विचिनोतु वृक्णम्। यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम्। यद्वाऽन्तरिक्षे पथिभिः पतन्तं तमस्ताविध्यशर्वाशिशानः। उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात्। अग्ने पूर्वो निजहि शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः। इह प्रब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति। तमारभस्व समिधाय विष्ठन्नृचक्षसश्चक्षुषे रन्धयैनम्"। तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्रणय प्रचेतः। हिंस्रं रक्षांस्यभिशोशुचानं मा त्वा दभन्यातुधाना नृचक्षः। नृचक्षा रक्षः परिपश्य विक्षुतस्य त्रीणि प्रतिशृणीह्यग्रा। तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च। त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति। तमर्चिषा स्फूर्जयं जातवेदः समक्षमेनं गृणते निवृङ्धि। तदग्ने चक्षुः प्रतिधेहि रेभे शफारुजं येन पश्यसि यातुधानम्। अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचित्तं न्योष। यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः। मन्योर्मनसः शरव्या जायते या तया विध्य हृदये यातुधानान्। परा शृणीहि तपसा यातुधानान् पराग्ने रक्षोहरसा शृणीहि। पराचिषामूरदेवान् शृणीहि परासु तृपो अभिशोशुचानः। परायदेवा वृजिनं शृणन्तु प्रत्यगेनं शपथायन्तु तृष्टाः। वाचास्तेनं शरवद्दच्छन्तु

मर्मन्विश्वस्यैतु प्रसितं यातुधानः। यः पौरुषेयेण क्रविषांसमङ्क्ते यो अश्व्येन पशुना यातुधानः। यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसापिवृश्च"। "संवत्सरीणं पय उस्रियायास्तस्य माशीद्यातुधानो नृचक्षः। पीयूषमग्ने यतमस्तितृप्सात् तं प्रत्यञ्चमर्चिषा विध्य मर्मन्। विषं गवां यातुधानाः पिबन्त्वावृश्च्यन्तामदितये दुरेवाः। परैनां देवः सविता ददातु पराभागमोषधीनां जयन्ताम्। सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः। अनुदह सह मूरान् क्रव्यादो माते हेत्यामुक्षत दैव्यायाः। त्वन्नो अग्ने अधरादुदक्तात् त्वं पश्चादुत रक्षा पुरस्तात्। प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु। पश्चात्पुरस्तादधरादुदक्तात्कविः काव्येन परिपाहि राजन्। सखे सखायमजरो जरिम्णे अग्ने मर्तां अमर्त्यस्त्वन्नः। परि त्वाऽग्ने पुरं वयं विप्रं सहस्य धीमहि। धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम्। विषेण भङ्गुरावतः प्रतिष्म रक्षसो दह अग्ने तिग्मेन शोचिषा तपुरग्राभि ऋष्टिभिः। प्रत्यग्ने मिथुना दह यातुधाना किमीदिना। सन्त्वाशिशामि जागृह्यदब्धं विप्रमन्मभिः। प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति। यातुधानस्य रक्षसो बलं विरुजवीर्यम्"। एतदपरं सूक्तम्। "आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः"। "सङ्क्रन्देनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा। स इषुहस्तैः सनिषङ्गिभिर्वशी संस्रष्टा सयुध इन्द्रो गणेन। संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता। बृहस्पते परिदीया रथेन रक्षोहामित्रां अपबाधमानः। प्रभञ्जत्सेना प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्। बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्। गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनु संरभध्वम्। अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाड्युध्योऽस्माकं सेना अवतु प्रयुत्सु। इन्द्र आसां नेता बृ-

...तिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभि भञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्। इन्द्रस्य वृष्णोवरुणस्य राज्ञः आदित्यानां मरुतां शर्द्ध उग्रम्। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् । उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि। उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः। अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु। अस्माकं वीरा उत्तरे भवन्त्वस्मां उ देवा अवताहवेषु। अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि। अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्। प्रेता जयता नर इन्द्रो वः शर्म यच्छतु। उग्रा वः सन्तु बाहवो नाधृष्या यथासथ। एतदन्तमन्यत्सूक्तम्। "मुञ्चामि त्वा हविषा जीवनाय कमज्ञात यक्ष्मादुत राजयक्ष्मात्। ग्राहिर्जग्राह यदि वै तदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम्। यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव। तमाहरामि निर्ऋते रुपस्थादस्पार्षमेनं शतशारदाय सहस्राक्षेण शतशारदेन शतायुषा हविषा हार्षमेनम्। शतं यथेमं शरदो न यातीन्द्रो विश्वस्य दुरितस्य पारम् । शतं जीव शरदो वर्द्धमानः शतं हेमन्तान् शतमु वसन्तान्। शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः। आहार्षं त्वाविदन्त्वा पुनरागाः पुनर्न्नव। सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च विदम् ते"। इदमन्यत्सूक्तम्। "त्यमूषु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहाहुवेम । इन्द्रस्येव रातिमाजो हुवानाः स्वस्तये नावमिवारुहेम। उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम। सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा अस्य रंहिर्नस्मावरं ते युवतिं न शर्याम्"। एतदेकं सूक्तम्। अत्र संहितावसानभागस्थं ऋग्द्वयं परिपठित्वा "नमो ब्रह्मण" इत्यादिकं पठति। "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये देवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिहातु भेषजं शन्नो अस्तु द्विपदे शं चतुष्पदे"। "नमो ब्रह्मणे नमोस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते क-

रोमि "। "भद्रन्नो अपिवातयमनः । ॐ शान्तिः शान्तिः शान्तिः।
इत्याश्वलायनघोषशान्तिः ।

अथ तैत्तिरीयाणां घोषशान्तिः । तत्र " शन्नोवातः पवता "
मित्यनुवाकस्य सोमकाण्डान्तःपातित्वात् सोमः ऋषिः । वातादयो
लिङ्गोक्ता देवताः । आद्या षट्पदा जगती । द्वितीया गायत्री इडा
यै वास्त्वसीति प्रतिष्ठासीति च द्वे याजुषी । आवात वाहीति
द्वे अनुष्टुभौ । यद्दो वात इति पञ्चपदा पङ्क्तिः । वात आवात्विति
द्वे गायत्र्यौ । भूः प्रपद्य इति अन्तरिक्षम् इति प्राणापानाविति च
त्रीणि यजूंषि । द्युभिरक्तुभिरिति, त्रिष्टुप् । कयानश्चित्र इति तिस्रो
गायत्र्यः, वयः सुपर्णा इति त्रिष्टुप् शन्नोदेवीरिति द्वे गायत्र्यौ, सु-
मित्रा न इति दुर्मित्रा न इति च द्वे यजुषी, आपोहिष्ठेति तिस्रो
गायत्र्यः । पृथिवी शान्तेति, अन्तरिक्षं शान्तमिति द्यौः शान्तेति,
पृथिवी शान्तिरिति, तयाहं शान्तेति, एह श्री श्चेति षट् यजूंषि ।
उदायुषेत्यनुष्टुप् । तच्चक्षुरित्याकृतिः य उद्गादिति पङ्क्तिश्चतुष्पदा ।
ब्रह्मणश्चोतन्यसीति यजुः । माम द्वे दोघीति एकपदा गायत्री ।
मेधा मनीषेति यजुः । आभीर्गीर्भिरित्यनुष्टुप् । ब्रह्म प्रावादिष्मेति
यजुः । शान्तिपाठे विनियोगः । अथ शान्त्यनुवाकः । शन्नो वातः
पवतां मातरिश्वा शन्नस्तपतु सूर्यः अहानि शं भवन्तु नः शं रात्रिः
प्रतिधीयताम् शमुषानो व्युच्छतु शमादित्य उदेतु नः । शिवा नः
शन्तमा भव सुमृडीका सरस्वति मा ते व्योम सन्दृशि इडायै वा-
स्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोच्छिस्मह्यवास्तु सभू-
याद्योस्मान्द्वेष्टि यं च वयं द्विष्मः । प्रतिष्ठासि प्रतिष्ठावन्तो भू-
यास्म मा प्रतिष्ठायाः छिथ्स्यह्यप्रतिष्ठः स भूयाद्योऽस्मान् द्वेष्टि यं
च वयं द्विष्मः । आ वात वाहि भेषजं विवात वाहि यद्रपः त्वं हि
विश्वभेषजो देवानां दूत ईयसे द्वा विमौ वातौ वात आसिन्धो-
रापरावतः दक्षं मे अन्य आवातु परान्यो वातु यद्रपः । यद्दो वात
तो गृहेऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे ततो नो धेहि
भेषजम् ततो नो मह आवह । वात आवातु भेषजं शं भूर्मयो
भूर्नो हृदे प्रण आयुंषि तारिषित् । इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये

सगुःसाश्वः । सह यन्मे अस्ति तेन । भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्ये ॐ प्रपद्ये । अन्तरिक्षं म ऊर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्तिमान्तया स्वस्त्या स्वस्तिमानसानि । प्राणापानौ मृत्योर्मा पातं प्राणापानौ मामाहासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु । द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः । कया नश्चित्र आभुवदूती सदावृधः सखा कया शचिष्ठयाऽऽवृता । कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः दृढाचिदारुजे वसु । अभीषुणः सखीनामविता जरितॄणाम् शतं भवास्यूतिभिः । वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः अपध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्यस्मान्निधयेऽवबद्धान् । शन्नो देवी रभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः । ईशानावार्याणां क्षयन्तीश्चर्षणीनाम् अपो याचामि भेषजम् । सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः । आपोहिष्ठा मयो भुवस्ता न ऊर्जे दधातन । महेरणाय चक्षसे । यो वः शिवतमो रसः तस्य भाजयतेह नः उशतीरिव मातरः । तस्मा अरं गमाम यो यस्य क्षयाय जिन्वथ आपो जनयथा च नः । पृथिवी शान्ता साग्निना शान्ता सामे शान्ता शुचं शमयतु । अन्तरिक्षं शान्तं तद्वायुना शान्तं तन्मेशान्तं शुचं शमयतु । द्यौः शान्ता साऽऽदित्येन शान्ता सा मे शान्ता शुचं शमयतु । पृथिवी शान्तिरन्तरिक्षं शान्तिः द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिराप: शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः । तयाऽहं शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि । शान्तिर्मेऽस्तु शान्तिः । एह श्रीश्च ह्रीश्चधृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं

धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा मां श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः । उदायुषा स्वायुषो दोषधीनां रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताँ अनु । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतं शृणवाम शरदः शतं प्रब्रवाम शरदः शतं अजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे । य उदगान्महतोऽर्णवात् विभ्राजमानः सरिरस्य मध्यात् स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु । ब्रह्मणश्चोतन्यसि ब्रह्मण आणीस्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधर पृथिवीँ सदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधिविस्रसत् । मेधा मनीषे माऽऽविशतां समीची भूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि । आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्द्धमानः यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम । ब्रह्म प्रावादिष्म तन्नो माहासीत् । ॐ शान्तिः शान्तिः शान्तिः । इति तैत्तिरीयघोषशान्तिः ।

अथ प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरामः ।

" पञ्चाभिषेककलशान् धान्यराशौ विनिक्षिपेत् ।
आपोहिष्ठादिभिर्मन्त्रै र्हिरण्येत्यादिभिस्त्रिभिः ॥

पवमानानुवाकेन शन्न इन्द्रानुवाकतः ।
शं नो वातानुवाकेन घोषयेच्छान्तिवाचनम् " ॥

इत्युक्तम् । अधुना तदनन्तरकृत्यमाह ।

" विधायकत्वे ब्रह्माणं चतुरोब्राह्मणान् जपे ।
अयुतेनामितैर्वारैरर्द्धेन चरणेन वा ॥

" देवतालिङ्गमन्त्राणां वृत्वा तैः परिचारिते ।
आग्नेय्यां दिशि कुण्डे वा स्थण्डिले वा हुताशनम् ॥

स्थापयित्वा स्वगृह्योक्तयुक्त्याऽर्कसमिधो हविः ।
तत्सम्पाद्य ततः पात्र्यामवसिच्याभिघार्य च ॥

चरुं तिलांश्च स्वाहान्तं मूलमन्त्रमुदाहरन् ।
वारान् सहस्रं वाऽष्टशतमष्टाविंशतिमेव वा ॥
हुत्वा पूर्णाहुतिं चान्ते प्रणीतामोक्षमाचरेत् ” ।

विधायकत्वे ब्रह्माणमित्यादि। विधायकत्वे ब्रह्माणं वृत्वा तथा देवतालिङ्गमन्त्राणां जपे चतुरो ब्राह्मणान् वृत्वेत्यन्वयः। विधायकत्वमुपद्रष्टृत्वम्। ब्रह्मा ह्युपद्रष्टा भवति। ब्रह्मवरणं न केवलं वक्ष्यमाणहोमकर्मार्थं अपितु विशिष्टसकलकर्मार्थमपि। देवतालिङ्गमन्त्राणामिति बहुवचनान्मन्त्राणां बहुत्वमवगम्यते। मूलमन्त्रश्च 'घृणिः सूर्य' इत्येक एव दर्शितः। तस्मादयमभिप्रायः। रोगप्रतिमादाने सर्वत्र सूर्य एवाधिदेवता। व्याधिदेवता च भिन्ना। व्याधीनां भिन्नत्वात्। अतश्च जलरोगादिषु वरुणादयो देवता भवन्तीति तदभिप्रायेण मन्त्राणामिति बहुत्वम्। किञ्च एकस्मिन्नपि कर्मणि आतङ्कसूर्यादिग्रहनक्षत्राणां पूज्यत्वात् तदभिप्रायेणापि मन्त्राणामिति बहुवचनम्। अत एव मूलमन्त्रजपे चतुरो ब्राह्मणान् वृणीत इतरमन्त्रजपे त्वेकमेकं यथासम्भवं वा। तत्र जपसंख्यामहायुतेनामितैरित्यादिना। अयुतेन वारैः—अयुतावृत्त्येत्यर्थः। अमितैर्वारैः—अयुताधिकैर्वेत्यर्थः अर्द्धेन—अयुतार्द्धेन। चरणेन—अयुतपादेन। इयं च संख्या प्रधानमन्त्रजपे। सूर्यव्यतिरिक्तेतरग्रहनक्षत्रमन्त्रजपे तु शक्त्यनुसारेण प्रधानमन्त्रजपसंख्यातो न्यूनसंख्या कल्प्या। तैः परिवारित इति। तैः—आचार्यब्रह्मप्रभृतिभिः। कुण्डे वा स्थण्डिले वा परिवारिते—परिकल्पिते। तत्र हुताशनं स्थापयित्वेत्यन्वयः। अर्कसमिधो हविः। तत्सम्पाद्येति। तस्मिन् होमेऽर्कसमिधो भवन्ति। हविश्च भवति। हविर्नामाज्यं चरुश्च। तत्सम्पाद्य। आज्यस्य संपादनं स्वगृह्योक्तप्रकारेण संस्कारः। चरोस्तु या देवता यष्टव्या तत्सम्बन्धित्वेन 'चतुरोमुष्टीन्निर्वपती' त्यादि विधिना निरुप्य श्रपणसम्पादनम्। ततः पात्र्यामवसिच्याभिघार्य च। ततः पाकानन्तरं पात्र्यां चरुस्थाल्यामवसिच्याभिघार्य तदनन्तरं चरुमुत्तरत उद्वास्यानिधार्य च प्रत्यभिघार्य समिधो हुत्वाऽऽज्यं च हुत्वा ततश्चरुं तिलांश्च जुहुयात्। स्वाहान्तं मूलमन्त्रमुदाहरन्, मूलमन्त्रः—वाय्वादिव्याधिप्रतिमादेवता-

भूतवायुवरुणादिदेवताप्रकाशको मन्त्रः। आरोग्यं भास्करादिच्छेदिति वचनादाधिदेवतारूपसूर्यप्रकाशकः प्रागभिहितो 'घृणिः सूर्य' इत्यष्टाक्षरमन्त्रोऽपि मूलमन्त्रः। होमसंख्यामाह-वारान् सहस्रं वाष्टशतमष्टाविंशतिमेववेति। अत्र प्रधानहोमः-व्याधिप्रतिमा देवतोद्देशेन होमः सूर्योद्देशेन होमश्च। अतः सूर्यव्यतिरिक्तग्रहहोमे नक्षत्रहोमे च प्रधानहोमापेक्षया न्यूनसंख्या परिकल्प्या। हुत्वा पूर्णाहुतिं चान्ते प्रणीतामोक्षमाचरेत्-एवं पूर्वोक्तप्रकारेण हुत्वाऽन्ते पूर्णाहुतिमपि वक्ष्यमाणमन्त्रैर्हुत्वा प्रणीतामोक्षं-पूर्णपात्रविमोकं कुर्यात्। अथ देवतालिङ्गमन्त्राणामित्येतेन पदेन सूचिता मन्त्राः प्रदर्श्यन्ते-तत्र 'मूले पूर्वादिपत्राणां शुक्राङ्गारबुधांस्तमः। गुरुमन्देन्दुकेतूंश्च नक्षत्राणि त्रिशः त्रिशः' इत्येतद्वचनोपात्तक्रमेण ग्रहमन्त्राः प्रदर्श्यन्ते। व्याधिप्रतिमादाने यत्र या देवता वायुवरुणादिरूपा तद्देवताप्रकाशको वैदिको मन्त्रो ग्राह्यः। अथवा सर्वत्र व्याधिप्रतिमादाने सौरमन्त्र एव ग्राह्यः। स च पूर्वोक्तो 'घृणिः सूर्य' इत्यष्टाक्षरो मन्त्रः। 'उद्यन्नद्ये' ति तृचो वा। उद्यन्नद्येति तृचस्य कण्वपुत्रः प्रस्कण्वः ऋषिः। सूर्यो देवता। अनुष्टुप् छन्दः। जपे विनियोगः। विनियोगस्य क्रियमाणजपहोमपूजाभेदेन पार्थक्यं भवति। "उद्यन्नद्य मित्रमहः आरोहन्नुत्तरां दिवम् हृद्रोगं मम सूर्य हरिमाणं च नाशय शुकेषु मे हरिमाणं रोपणाकासुदध्मसि अथो हारिद्रवेषु मे हरिमाणं निदध्मसि उदगादयमादित्यो विश्वेन सहसा सह द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम्"। इत्ययं तृचः सौरमन्त्रः। 'शुक्रं ते अन्यदिति शुक्रमन्त्रस्य भरद्वाजः ऋषिः। शुक्रो देवता। त्रिष्टुप् छन्दः। पूजादौ विनियोगः। एवमुत्रत्रापि विनियोगो ज्ञेयः। "शुक्रन्ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि। विश्वा हिमाया अवसि स्वधा वो भद्रा ते पूषन्निह रातिरस्तु"। [तै. सं. का. ४. प्र. १. अनु. ११] अग्निर्मूर्धेत्यङ्गारकमन्त्रस्य विरूपः[1] ऋषिः। अङ्गारको देवता। गायत्री छन्दः। "अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् अपां रेतांसि जिन्वति"। [तै. सं. का. ४. प्र. ४.

---

१. विश्वरूपः इति ग. पाठः

अनु. ४] उद्बुध्यस्वेति बुधमन्त्रस्य अग्निः ऋषिः। बुधो देवता। त्रिष्टुप् छन्दः। "उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सँसृजेथामयं च पुनः कृण्वँस्त्वा पितरं युवानमन्वाता सीत्त्वयि तन्तु मेतम्"। [तै. सं. का. ४. प्र. ७. अनु. १३] कया नश्चित्र इत्यस्य राहुमन्त्रस्य वामदेवः ऋषिः। राहुर्देवता। गायत्री छन्दः। "कया नश्चित्र आ भुवदूती सदा वृधः सखा कया शचिष्ठया वृता"। [तै. सं. का. ४. प्र. २. अनु. ११] बृहस्पते अतीत्यस्य बृहस्पतिमन्त्रस्य गृत्समद ऋषिः बृहस्पतिर्देवता। त्रिष्टुप् छन्दः। "बृहस्पते अतियदर्यो अर्हात् द्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवसा ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्"। [तै. सं. का. १. प्र. ८. अनु. २२] शन्नोदेवीति शनैश्चरमन्त्रस्य सिन्धुद्वीपः ऋषिः। शनिर्देवता। गायत्री छन्दः। "शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः"। [तै. ब्रा. अ. १. प्र. १ अनु. १] आप्यायस्वेति सोममन्त्रस्य गौतम ऋषिः। सोमो देवता। गायत्री छन्दः। "अप्यास्व समेतु ते विश्वतः सोम वृष्णियम् भवा वाजस्य सङ्गथे"। [तै. सं. का. ४. प्र. २. अनु. ७] केतुं कृण्वन्निति केतुमन्त्रस्य मधुछन्दाः ऋषिः। [1]केतवोर्देवता। गायत्री छन्दः। "केतुं कृण्वन्नकेतवे पेशोमर्या अपेशसे समुषद्भिरजायथाः"। [तै. सं. का. ७. प्र. ४. ४ अनु. २०] इति ग्रहमन्त्राः। अथ नक्षत्रमन्त्राः। तत्र तेषामार्षाद्यभिधीयते। अग्निर्नः पातु कृत्तिकेत्यादीनां नक्षत्रेष्टिपरिपठितानां विश्वदेवा ऋषयः। क्रमेण अग्निः, प्रजापतिः, सोमो, रुद्रः, अदितिः, बृहस्पतिः, सर्पाः, पितरो, ऽर्यमा, भगः, सविता, त्वष्टा, वायुः, इन्द्राग्नी, मित्रः, इन्द्रः, प्रजापति(त्व)गुणविशिष्टा निर्ऋतिः, आपो, विश्वे देवाः, ब्रह्मा, विष्णुः, वसवः, इन्द्रात्मको वरुणः, अजः, एकपात्, अहिर्बुध्नियः, पूषा, अश्विनौ, यम इति देवताः। त्रिष्टुप् छन्दः। आद्याऽनुष्टुप्। पुरन्दरायेति जगती। जपे विनियोगः। यत्र यद्यत्कर्म होमादि कर्तव्यं भवति तत्र तत्कर्मणि होमादौ विनियोगो वाच्यः। अथ मन्त्राः। "अग्निर्नः पातु कृत्तिकाः नक्षत्रं देवमिन्द्रियमिदमासां विवक्षणम् हविरासंजुहोतन। यस्य भान्ति रश्मयो यस्य केतवः यस्येमा विश्वा भुवनानि सर्वा। स

१. केतुर्देवता क. पाठः

कृत्तिकाभिरभिसंवसानः। अग्निर्नो देवः सुविते दधातु"। [तै. ब्रा. अ. ३. प्र. १. अनु. १] "प्रजापते रोहिणीवेतु पत्नी विश्वरूपा बृहती चित्रभानुः सा नो यज्ञस्य सुविते दधातु यथा जीवेम शरदः सवीराः। रोहिणी देव्युदगात्पुरस्ताद्विश्वारूपाणि प्रतिमोदमाना प्रजापतिं हविषा वर्द्धयन्ती प्रिया देवानामुपयातु यज्ञम्" [,,] सोमो राजा मृगशीर्षेण आगन् शिवं नक्षत्रं प्रियमस्य धाम अप्यायमानो बहुधा जनेषु रेतः प्रजां यजमाने दधातु। यत्ते नक्षत्रं मृगशीर्षमस्ति प्रियं राजन् प्रियतमं प्रियाणाम् तस्मै ते सोम हविषा विधेम शन्न एधि द्विपदे शं चतुष्पदे"। [,,] "आर्द्रया रुद्रः प्रथमान एति श्रेष्ठो देवानां परितिरघ्नियानाम् नक्षत्रमस्य हविषा विधेम मानः प्रजां रीरिषन्मोत वीरान्। हेतीरुद्रस्य परिणो वृणक्तु आर्द्रा नक्षत्रं जुषतां हविर्नः प्रमुञ्चमानौ दुरितानि विश्वा अपाघशं सं नुदतामरातिम्"। [,,] "पुनर्नो देव्यदितिस्स्पृणोतु पुनर्वसू नः पुनरेतां यज्ञम् पुनर्नो देवा अभियन्तु सर्वे पुनः पुनर्वो हविषा यजामः एवा नदेव्यदितिरनर्वा विश्वस्य भर्त्री जगतः प्रतिष्ठा पुनर्वसु हविषा वर्द्धयन्ती प्रियं देवानामप्येतु पाथः"। [,,] "बृहस्पतिः प्रथमं जायमानः तिष्यन्नक्षत्रमभिसम्बभूव श्रेष्ठो देवानां पृतनासु जिष्णुर्दिशो नु सर्वा अभयं न्नो अस्तु। तिष्यः पुरस्तादुत मध्यतो नः बृहस्पतिर्नः परिपातु पश्चात् बाधेतां द्वेषो अभयं कृणुतां सुवीर्यस्य पतयः स्याम"। ["] "इदं सर्पेभ्यो हविरस्तु जुष्ट माश्रेषा येषामनुयन्तिचेतः ये अन्तरिक्षं पृथिवीं क्षियन्ति ते नः सर्पासो हवमागमिष्ठाः। ये रोचने सूर्यस्यापि सर्पा ये दिवं देवीमनुसञ्चरन्ति येषामाश्रेषा अनुयन्ति कामं तेभ्यः सर्पेभ्यो मधुमज्जुहोति"। ["] "उपहूताः पितरो ये मघासु मनोजवसः सुकृतः सुकृत्याः तेनो नक्षत्रे हवमागमिष्ठाः स्वधाभिर्यज्ञं प्रयतं जुषन्ताम्। ये अग्निदग्धा येऽनग्निदग्धाः येऽमुंलोकं पितरः क्षियन्ति यांश्च विद्म योँ उच न प्रविद्म मघासु यज्ञं सुकृतं जुषन्ताम्"। ["] "गवां पतिः फल्गुनीनामसि त्वं तदर्यमन्वरुणमित्र चारु तं त्वा वयं सनितारं सनीनां जीवाजीवन्तमुपसंविशेम। येनेमा विश्वा भुवनानि संजिता यस्य देवा अनुसंयन्ति चेतः। अर्यमा राजाऽजरस्तुविष्मान् फल्गुनीमृषभो रोरवीति"। ["]

श्रेष्ठो देवानां भगवो भगासि तत्त्वा विदुः फल्गुनीस्तस्य वित्तात् अस्मभ्यं क्षत्रमजरं सुवीर्यं गोमदश्ववदुपसन्नु देह ॥ भगो ह दाता भगइत्प्रदाता भगो देवीः फल्गुनीराविवेश भगस्येत्तं प्रसवं गमेम यत्र देवैः सधमादं मदेम" ॥ [ " ] "आयातु देवः सवितोपयातु हिरण्मयेन सुवृता रथेन वहन् हस्तं सुभगं विद्मनापसं प्रयच्छन्तं पपुरिं पुण्यमच्छ ॥ हस्तः प्रयच्छत्वमृतं वसीयः दक्षिणेन प्रतिगृभ्णीम एनत् दातार मद्य सविता विदेययो नो हस्ताय प्रसुवातियज्ञम्" ॥ [ " ] "त्वष्टा नक्षत्रमभ्येति चित्रां सुभँससं युवतिं रोचमानाम् निवेशयन्नमृतान् मर्त्यांश्च रूपाणि पिंशन् भुवनानि विश्वा ॥ तन्नः त्वष्टा तदु चित्रा विचष्टां तन्नक्षत्रं भूरिदा अस्तु मह्यम् तन्नः प्रजां वीरवतीं सनोतुगोभिर्नो अश्वैः समनक्तु यज्ञम्" ॥ [ " ] "वायुर्नक्षत्रमभ्येति निष्ट्यां तिग्मशृङ्गो वृषभोरो रुवाणः समीरयन् भुवना मातरिश्वा अपद्वेषांसि नुदतामरातीः ॥ तन्नो वायुस्तदु निष्ट्या शृणोतु तन्नक्षत्रं भूरिदा अस्तु मह्यम् तन्नो देवासो अनुजानन्तु कामं यथा तरेम दुरितानि विश्वा"। [ " ] "दूरमस्मच्छत्रवो यन्तु भीता स्तदिन्द्राग्नी कृणुतां तद्विशाखे तन्नो देवा अनुमदन्तु यज्ञं पश्चात् पुरस्तादयं नो अस्तु नक्षत्राणामधिपत्नी विशाखे। श्रेष्ठा विन्द्राग्नी भुवनस्य गोपौ विषूचः शत्रूनपबाधमानौ अप क्षुधंनुदतामरातिम्" ॥ [ " ] "ऋध्यास्म हव्यैर्नमसोपसद्य। मित्रं देवं मित्रधेयन्नो अस्तु। अनुराधान् हविषा वर्द्धयन्तः शतं जीवेम शरदः सवीराः ॥ चित्रं नक्षत्रमुद्गात्पुरस्ता दनूराधास इति यद्वदन्ति तन्मित्र एति पथिभिर्देवयानैर्हिरण्ययैर्विततैरन्तरिक्षे" [ तै. ब्रा. अ. ३. प्र. १. अनु. २ ] "इन्द्रो ज्येष्ठामनु नक्षत्रमेति यस्मिन् वृत्रं वृत्रतूर्ये ततार तस्मिन्वयममृतं दुहानाः क्षुधं तरेम दुरितं दुरिष्टम् ॥ पुरन्दराय वृषभाय धृष्णवे अषाढाय सहमानाय मीढुषे इन्द्राय ज्येष्ठा मधुमद्दुहाना उरुं कृणोतु यजमानाय लोकम्" ॥ [ " ] "मूलं प्रजां वीरवतीं विदेय पराच्येतु निर्ऋतिः पराचा गोभिर्नक्षत्रं पशुभिः समक्तं अहर्भूयाद्यजमानाय मह्यम्। अहर्नो अद्य सुविते दधातु मूलं नक्षत्रमिति यद्वदन्ति पराचीं वाचा निर्ऋतिं नुदामि शिवं प्रजायै शिवमस्तु मह्यम्" ॥ [ " ] "या दिव्या आपः पयसा सम्बभूवुर्या

अन्तरिक्ष उत पार्थिवीर्याः यासामषाढा अनुयन्ति कामं ता न आपः शँस्योना भवन्तु ॥ याश्च कूप्या याश्च नाद्याः समुद्रियाः याश्च वैशन्तीरुत प्रासचीर्या यासामषाढा मधु भक्षयन्ति ता न आपः शँस्योना भवन्तु " ॥ [ " ] " तन्नो विश्वे उपशृण्वन्तु देवाः तदाषाढा अभिसँयन्तु यज्ञम् तन्नक्षत्रं प्रथतां पशुभ्यः कृषिवृष्टिर्यजमानाय कल्पतम् ॥ शुभ्राः कन्या युवतयः सुपेशसः कर्मकृतः सुकृतो वीर्यावतीः विश्वान्देवान् हविषा वर्द्धयन्ती अषाढाः काममुपयान्तु यज्ञम् " ॥ [ " ] " यस्मिन् ब्रह्माऽभ्यजयत्सर्वमेतत् अमुं च लोकमिदमूच सर्वम् तन्नो नक्षत्रमभिजिद्विजित्य श्रियं दधात्वहृणीयमानम् ॥ उभौ लोकौ ब्रह्मणा संजितेमौ तन्नो नक्षत्रमभिजिद्विचष्टाम् तस्मिन् वयं पृतनाः संजयेम तन्नो देवासो अनुजानन्तु कामम् " ॥ [ " ] "शृण्वन्तु श्रोणाममृतस्य गोपां पुण्यामस्या उपशृणोमि वाचम् महीं देवीं विष्णुपत्नीमजूर्यां प्रतीचीमेनां हविषा यजामः ॥ त्रेधा विष्णुरुरुगायो विचक्रमे महीं दिवं पृथिवीमन्तरिक्षम् तच्छ्रोणैति श्रव इच्छमाना । पुण्यं श्लोकं यजमानाय कृण्वती " ॥ [ " ] " अष्टौ देवा वसवः सोम्यास श्चतस्रो देवीरजराः श्रविष्ठाः ते यज्ञं पान्तु रजसः परस्तात् संवत्सरीणममृतं स्वस्ति " ॥ " यज्ञं नः पान्तु वसवः पुरस्ताद्दक्षिणतोऽभियन्तु श्रविष्ठाः पुण्यं नक्षत्रमभिसंविशाम मा नो अराति रघशँ साऽगन् " ॥ [ " ] " क्षत्रस्य राजा वरुणोधिराजः नक्षत्राणां शतभिषग्वसिष्ठः तौ देवेभ्यः कृणुतो दीर्घमायुः शतं सहस्रा भेषजानि धत्तः ॥ यज्ञं नो राजा वरुण उपयातु तन्नो विश्वे अभिसंयन्तु देवाः तन्नो नक्षत्रँ शतभिषग्जुषाणं दीर्घमायुः प्रतिरद्भेषजानि [ " ] " ॥ " अज एकपादुदगात्पुरस्तात् विश्वा भूतानि प्रतिमोदमानः तस्य देवाः प्रसवं यन्ति सर्वे प्रोष्ठपदासो अमृतस्य गोपाः ॥ विभ्राजमानः समिधा न उग्रः आन्तरिक्षमरुहदगन्द्यां तँ सूर्यं देवमजमेकपादं प्रोष्ठपदासो अनुयन्ति सर्वे " ॥ [ " ] " अहिर्बुध्निय: प्रथमान एति श्रेष्ठो देवानामुत मानुषाणाम् तं ब्राह्मणाः सोमपाः सोम्यासः प्रोष्ठपदासो अभिरक्षन्ति सर्वे ॥ चत्वार एकमभिकर्म देवाः प्रोष्ठपदास इति यान् वदन्ति तेबुध्नियं परिषद्यं स्तुवन्तः अहिँरक्षन्ति नमसोपसद्य " ॥ [ " ] " पूषा रेवत्यान्वेति पन्थां पुष्टिपती पशुपा वाज-

बस्त्यौ इमानि हव्या प्रयता जुषाणा सुगैर्नो यानैरुपयातां यज्ञम् ॥ क्षुद्रान् पशून् रक्षतु रेवती नः गावो नो अश्वाँ अन्वेतु पूषा अन्नं रक्षन्तौ बहुधा विरूपं वाजं सनुतां यजमानाय यज्ञम् ” ॥ [”] तदश्विनावश्वयुजोपयातां शुभंगमिष्ठौ सुयमेभिरश्वैः स्वं नक्षत्रं हविषा यजन्तौ मध्वा संपृक्तौ यजुषा समक्तौ॥ यौ देवानां भिषजौ हव्यवाहौ विश्वस्य दूतावमृतस्य गोपौ तौ नक्षत्रं जुजुषाणोपयातां नमोऽश्विभ्यां कृणुमोऽश्वयुग्भ्याम् ” ॥ [” ] “ अपपाप्मानं भरणीर्भरन्तु तद्यमो राजा भगवान् विचष्टां लोकस्य राजा महतो महान् हि सुगं नः पन्थामभयं कृणोतु ” ॥ यस्मिन्नक्षत्रेयम एति राजा यस्मिन्नेनमभ्यषिञ्चन्त देवाः तदस्य चित्रं हविषा यजाम अपपाप्मानं भरणीभरन्तु ” ॥ [ ” ] इति नक्षत्रमन्त्रा : ॥

अथ पूर्णाहुतिमन्त्रः॥ समुद्रादूर्मिरिति तृचो गौतमो वामदेवः ऋषिः॥ अग्निर्देवता॥ त्रिष्टुप् छन्दः॥ मूर्द्धानं दिव इत्यस्य बार्हस्पत्यो भरद्वाजः ऋषिः ॥ वैश्वानरो देवता ॥ त्रिष्टुप् छन्दः ॥ पुनस्त्वादित्येत्यस्याग्नि ऋषिः॥ वसुरुद्रादित्या देवता॥ त्रिष्टुप् छन्दः॥ पूर्णा दर्वीत्यस्य विश्वे देवाः ऋषयः ॥ शतक्रतुर्देवता ॥ अनुष्टुप् छन्दः ॥ सप्तते अग्न इत्यस्याग्निः ऋषिः॥ सप्तवानग्निर्देवता॥ जगती त्रिष्टुप् छन्दः॥ सर्वेषां मन्त्राणां पूर्णाहुतौ विनियोगः ॥ “ समुद्रादूर्मिर्मधुमाँउदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः उप ब्रह्माशृणवच्छस्यमानं चतुः शृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गात्रयो अस्य पादाः द्वे शीर्षे सप्तहस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ” [ तै. आ. प्र. ६. अनु. १० ] मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविँ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः ॥ [ तै. सं. का. १. प्र. ४. अनु. १३ ] पुनस्त्वादित्या रुद्रा वसवः समिन्धताम् पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः॥ [ तै. सं. का. ४. प्र. २. अनु. ३] पूर्णा दर्वि परापत सुपूर्णा पुनरापत वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ॥ [ तै. सं. का. १. प्र. ८. अनु. ४ ] सप्तते अग्ने

समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्वा घृतेन ॥ [तै. सं. का. ४. प्र. ६. अनु. ५] स्वाहा अग्नये वैश्वानराय वसुरुद्रादिरूपेभ्यः शतक्रतवे अग्नये सप्तवते च ॥ इति पूर्णाहुतिमन्त्राः ॥ एवं पूर्णाहुतेः प्रणीतामोक्षस्य चानन्तरं किं कुर्यादित्यत आह--

" अनुलोमाद्यथालिङ्गमक्षिभ्यामनुपादतः ।
प्राङ्मुखस्याज्यसम्पातैरभ्यज्याङ्गानि रोगिणः ॥
अछिन्नाग्रेण दर्भेण हेमगर्भेण मुष्टिना ।
त्रिः प्रमृज्य ततः शान्तिं वाचयन् ब्राह्मणैस्सह ॥
तैः स्नानकलशाम्भोभिरभिषिच्य स्वयं पुनः ।
मार्जयेच्च यथापूर्वं दर्भगर्भेण वाससा ॥
रुग्णावृत्प्रतिगृह्णीया त्सदक्षिणमथाऽतुरः ।
उत्तराभिमुखः श्वेत वस्त्रमाल्यानुलेपनः ॥
शान्तिं ग्रहाणां निर्वर्त्य बद्धानान्तु विमोचनम् ।
पूर्वाभिमुखमाचार्य मभ्यर्च्य प्रतिमां तु ताम् ॥
प्रदद्याद्दक्षिणां तस्मै मध्याह्ने समुपस्थिते " ।

अनुलोमाद्यथालिङ्गमित्यादि ॥ अनुलोमादानुलोम्येन ॥ अनुपादतः-पादपर्यन्तम् ॥ शिरःप्रभृति पादपर्यन्तमित्यर्थः ॥ यथालिङ्गं-तत्तदवयवस्थरोगनिराकरणद्योतकमन्त्रपदं लिङ्गम् ॥ तदनतिक्रमेण ॥ अक्षीभ्यां ते नासिकाभ्यामित्येतत्सूक्तं पठन् ॥ आज्यसंपातैः होमकाले हुत्वा प्रत्याहुत्येकस्मिन् पात्र आज्यबिन्दवः स्थापनीयाः ॥ तद्बिन्दव आज्यसम्पाता इत्युच्यन्ते ॥ अयमर्थः ॥ आज्यसम्पातैः प्राङ्मुखस्य रोगिणोऽङ्गान्यानुलोम्येनाभ्यज्य आचार्य अक्षीभ्यामित्येतत्सूक्तं पठन् अछिन्नाग्रेण दर्भाणां मुष्टिना सुवर्णशलाकागर्भेण शिरः प्रभृति पादपर्यन्तं रोगिणोऽङ्गानि यथालिङ्गं त्रिः प्रमृज्य शान्तिपाठं कुर्वन्नृत्विगादिभिर्ब्राह्मणैस्सहितः तैः पूर्वस्थापितकलशाम्भोभिरभिषिच्य स्वयम्-आचार्यः पुनर्यथापूर्वमानुलोम्येन अक्षीभ्यामित्येतत्सूक्तं पठेत् ॥ एवं दर्भगर्भेण वाससा परिमार्जयेदिति ॥ अत्राभिषेककाले पूर्वस्था-

पितकलशस्थितं मन्त्रपूतं पाथः परिशोषयेत् ॥ अग्रे मङ्गलस्नानार्थम् ॥ अतएव पात्रान्तरे मन्त्रपूतं पयोगृहीत्वा स्वशाखोक्तं शान्तिपाठं कुर्वद्भिरभिषेकः कार्यः ॥ रुग्णावृत्प्रतिगृह्णीयादित्यादि ॥ रुग्णस्य रोगिण आवृत् परिपाटी ॥ रोगशान्तिप्रतिक्रियेत्यर्थः ? ॥ अथ सदक्षिणं व्याधिप्रतिमादानं प्रतिग्रहीता आचार्यादिः प्रतिगृह्णीयात् ॥ आतुरो–रोगी ॥ श्वेतवस्त्रादिभिरलङ्कृत उत्तराभिमुखः सन् पूर्वाभिमुखमाचार्यमभ्यर्च्य तां प्रतिमां व्याधिप्रतिमां सूर्यप्रतिमां च दद्यात् ॥ ग्रहशान्ति काराग्रहबद्धानां च विमोचनं निर्वर्त्य। विमोचनं तु सति सम्भवे ॥ ग्रहशान्तिर्नवग्रहशान्तिः सा चाग्रे दर्शयिष्यते अत्रसूर्यप्रतिमाया आवरणपूजा रूपेण ग्रहपूजा प्रदर्शिता, न प्राधान्येन ॥ अतः समर्थश्चेत् पृथक् पृथक् ग्रहयज्ञं कुर्वीतेति मुख्यः पक्षः॥ असमर्थश्चेदावरणपूजयैव गृहपूजा निर्वर्त्त्येति गौणः पक्षः। तां प्रतिमां दद्यादित्युक्तम्। तत्रोभयत्र प्रतिमादाने मन्त्रमाह—

पद्मोद्भवः पद्मकरः सप्ताश्वरथवाहनः।
प्रतिमानेन दत्तेन तुष्येत् सर्वजगद्गुरुः ॥
इहजन्मनियत्पापमन्यजन्मनि वा कृतम्।
सप्रत्ययाप्रत्ययाभ्यां तत्सर्वं शमयत्वसौ ॥

प्रत्ययो ज्ञानम्।

मन्त्रेणानेन दत्वा तां प्रणिपत्यक्षमाप्य च।
आसीमान्तमनुव्रज्य तन्मुखं नावलोकयेत् ॥

तन्मुखं प्रतिगृहीतृमुखम्।

आचार्येणाभ्यनुज्ञातः प्रविष्टो भवनं निजम्। आचार्यस्याप्रतिगृहीतृत्वपक्षे तदनुज्ञातः

ऋत्विग्भ्यो दक्षिणां दत्वा कृत्वाराधनमश्विनोः।
धन्वन्तरेश्च सन्तर्प्य दीनानाथानुपस्थितान् ॥
मङ्गलध्वनिना तोयैः ससर्वौषधिपल्लवैः।
मन्त्राभिमन्त्रितैः स्नातः कृतकौतुकमङ्गलः।
प्रसन्नचेताः पुण्याहं वाचयित्वा शतं द्विजान्।

तदहं वा तदर्धं वा क्रियासाद्गुण्यसिद्धये ।
मिष्टान्नैर्योजयित्वाथ स्वयं भुञ्जीत बन्धुभिः ।
ये ये रोगाः प्रवाधन्ते राजयक्ष्मज्वरादयः ।
तेषां तेषां प्रतिच्छन्ददानैरिज्या प्रयत्नतः ।

इज्या–पूजा । 'अक्षिभ्यामि'त्येतत्सूक्तेन रोगिणोऽङ्गानिपरिमार्जये' दित्युक्तम् । तदिदानीं सूक्तं प्रदर्श्यते । अक्षीभ्यामित्यस्य षड़्चस्य सूक्तस्य काश्यपो विवृहा ऋषिः । यक्ष्मनाशिनी देवता । अनुष्टुप् छन्दः । यक्ष्मनिबर्हणे विनियोगः ।

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि ।
यक्ष्मँ शीर्षण्यं मस्तिष्काज्जिह्वायाविवृहामिते ॥
ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्योऽनूक्यात् ।
यक्ष्मँ दोषण्य मँसाभ्यां बाहुभ्यां विवृहामिते ॥
आन्त्रेभ्यस्ते गुदाभ्योवनिष्ठो हृदयादधि ।
यक्ष्मँ मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामिते ॥
ऊरुभ्यां तेऽष्ठीवभ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मँ श्रोणिभ्यां भासदाद्भ्वं ससो विवृहामिते ॥
मेहनाद्वलंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मँ सर्वस्मादात्मनस्तमिमं विवृहामिते ।
अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि ।
यक्ष्मँ सर्वस्मादात्मन स्तमिमं विवृहामिते ।

अस्य सूक्तस्याश्वलायनशाखानुसारेणायं पाठः, आर्षश्च । तैत्तरीयशाखानुसारेण तु अग्निकाण्डान्तः पातित्वादग्निर्ऋषिः । ऊरुभ्यामित्यस्यामृचि कश्च न स्वरवर्णयोर्भेदः । शिष्टं समानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नौघनिधिश्चतुर्थ
स्तुङ्गस्तरङ्गोयमगाधगाधः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे चतुर्थस्तरङ्गः

## पञ्चमस्तरङ्गः ।

रोगप्रतिमादान विधिरुक्तः। रोगाश्च त्रिविधाः। कर्मजा दोषजा उभयविधाश्चेति । तथाचायुर्वेदे—

कर्मप्रकोपेण कदाचिदेते-
दोषप्रकर्षेण भवन्ति चान्ये ।
तथाऽपरे प्राणिषु कर्मदोष-
प्रकर्षजाः कायमनोविकारात् । इति ।

एते–रोगाः । ये च रोगाः कर्मजा उभयजाश्च तत्र प्रथमतः प्रायश्चित्तं विधाय पश्चात् प्रतिकृतिदानादि कुर्वीत । तथा च कर्मविपाकसंग्रहे–

प्रायश्चित्तमकृत्वातु कुर्यात् कर्म न किश्चन ।
अनिस्तीर्णमघं नित्यं वर्धते द्विगुणं पुनः ।
दानैर्दयादिभिरपि द्विजदेवतागो-
वेदार्चनप्रणतिभिश्च जपैस्तपोभिः ।
इत्युक्तपुण्यनिचयै रपनीयमानाः
प्राक्पापजातमशुभं प्रशमं नयन्ति ॥

वेदार्चा–वेदविद्ब्राह्मणपूजा वेदपुस्तकार्चना च ।

प्रणतिभिः–देवतानमस्कारैः । विशेषतः सूर्यनमस्कारैः । 'आरोग्यं भास्करादिच्छे'दिति च, ' नमस्कारप्रियः सूर्यः ' इत्यपि च स्मरणात् । तथा प्रणति शब्देनाश्वत्थप्रदक्षिणक्रियाऽपि लक्ष्यते । जपैः–वेदपारायणमहासौर शतरुद्रपुरुषसूक्तसहस्रनामापामार्जन विष्णुहृदयादिजपैः । अशुभम्–रोगम् । तथा—

दृष्टापचारजः कश्चित् तथा पूर्वापचारजः ।
तत्सङ्करादुभवत्यन्यो व्याधिरेवंत्रिधामतः ।

दृष्टापचारजः–दोषोत्थः । पूर्वापचारजः–कर्मजः ।

सङ्करजः-उभयजः। एतेषां भेदज्ञाने उपायमाह—

यथानिदानं दोषोत्थः कर्मजो हेतुभिर्विना।
महारम्भोऽल्पके हेतावन्तको दोषकर्मजः॥

यथानिदानम्-निदानमनतिक्रम्य। समनन्तरदृश्यमानमाहारवैषम्यादिनिदानमनतिक्रम्य यज्जायते तद्दोषोत्थम्। हेतुभिर्विना-समनन्तरदृश्यमानहेतुभिर्विना यदा दोषस्य महारम्भः स कर्मजो दोषः। अल्पके हेतावन्तकः-स्वल्पनिमित्ते अधिकव्याधौ अन्तकः-अन्तिमस्तृतीयः पक्षो भवेत्। तमेवाह-दोषकर्मज इति। तथा—

निष्कृत्याऽदोषजन्मा तु दोषज स्त्वौषधेन हि।
उभयाज्जायमानस्तु निष्कृत्यौषधसेवया॥

अपगच्छेदित्यर्थः। अदोषजन्मा-कर्मोद्भव इत्यर्थः। यत्रापिकर्मदोषजत्वानिश्चयः तत्र प्रायश्चित्ताद्यप्यौषधं च कर्तव्यम्।

प्रणतिशब्देनाश्वत्थप्रदक्षिण क्रिया लक्ष्यते इत्युक्तम्। तत्राश्वत्थाभिमन्त्रणमन्त्रः। आरात्त इत्यस्य अग्निकाण्डान्तः पातित्वे न अग्निः ऋषिः वनस्पतिर्देवता अनुष्टुप् छन्दः वनस्पत्यभिमन्त्रणे विनियोगः।

'आरात्ते अग्निरस्त्वारात्परशुरस्तु ते।
निवातेत्वाऽभिवर्षतु स्वस्ति तेऽस्तुवनस्पते।
स्वस्तिमेऽस्तुवनस्पते'

तथा पौराणिकः श्लोकोऽपि स्मर्यते—

'अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तितम्।
शत्रूणां च समुत्पन्नमश्वत्थ शमयस्व मे॥' इति

शत्रूणां संबन्धित्वेन समुत्पन्नं उभयं च शमयस्वेत्यर्थः। शत्रूणां च समुत्थानमित्यपि पाठः। इत्यश्वत्थानुमन्त्रणप्रकारः।

अथवेदपारायणविधिः। स्थण्डिलं कल्पयित्वा अग्निमुपसमाधाय संपरिस्तीर्य ताभ्यो देवताभ्यो जुहोति। अग्नये सोमायेन्द्राय विश्वेभ्यो देवेभ्यः ऋषिभ्यो ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै प्रज्ञायै मेधायै धारणायै श्रियै ह्रियै सावित्र्यै सावित्रे प्रजापतये काण्डऋषये

सोमाय काण्डऋषये अग्नये काण्डऋर्षये विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः सांहितीभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहायविश्वेभ्योऽरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् पृथक् स्वाहाकारेणाहुतीर्हुत्वा व्याहृतिभिश्च पुनः, परिषिञ्चति। समाप्तेचैता यजुषा तर्पयति एवमृग्वेदस्य काण्डऋष्यादिवर्जमास्विष्टकृतस्तेषांस्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो: महानाम्नीभ्य इति। ततो वेदादिमारभ्य मन्त्रमधीयेतेत्याह भगवान् बौधयनः इति वेदपारायणोपक्रमविधिः।

अथ वेदपारायणेकलशप्रतिष्ठाविधिः—

तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते।
कलशं सुदृढं तत्र सुनिर्णिक्तं विभूषितम्॥
पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः।
मृत्तिकायवसंमिश्रवेदिमध्येन्यसेत्ततः॥
पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखः स्थितः।
पुरतः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः॥
वत्सजान्वाकृतिं वेदमुत्तराग्रैः कुशैः कृतम्।
ब्रह्मोपधानेदत्वा तं ततः स्वस्त्ययनं पठेत्॥
प्रतिष्ठांकारयेत्पश्चात्पूजाद्रव्यमथोच्यते।
यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुंकुमैः
स्रग्धूपदीपतांबूलैरक्षतैश्च पितामहम्।
ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूज्य च।
उपाध्यायं प्रपूज्याथ यथा यथं पठेन्ततः।

इति वेदपारायणेकलशप्रतिष्ठादिप्रकारः

अथानश्नत्पारायणविधिः। अथातोऽनश्नत्पारायणविधिं व्याख्यास्यामः। आसमाप्तेर्नाश्नीयात्। यथा शक्ति पयः फलान्योदनं वा हविष्यमात्रमल्पं भुक्त्वा तदाशेषमधीयीत। ग्रामात्प्राचीमुदीचीं वा

दिशमुपनिष्क्रम्याग्निमुपसमाधाय परिस्तीर्य इध्मं प्रादायाज्येनैताभ्यो देवताभ्यो जुहोति। अग्नये सोमायेन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्यो ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतयेऽनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्ड ऋषयेऽसोमाय काण्डऋषयेग्नये काण्ड ऋषये विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः सांहितीभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्य हव्यवाहाय विश्वेभ्यो अरुणेभ्योऽनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति ॥ समासौ चैता यजुषा तर्पयति। एवमृग्वेदिनां काण्डऋष्यादि वर्जमास्विष्टकृतः। तेषां स्थाने "शतर्चिभ्यो मध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य" इति। ततो वेदादिमारभ्य सततमधीयीत। नास्यान्तराऽनध्यायोनास्यान्तरा जननमरणे अशुची। नान्तरा व्याहरेत्। नान्तरा विरमेत्। यावदन्तमधीयीत। यदान्तरा विरमेत् त्रीन् प्राणायामानायम्य प्रणवं वा प्रविधाय यावत्कालमधीयीत। ततः सर्वा निशो निशान्तरं सङ्ग्रामारण्यसलिलं लोप्य परिदध्यात्। आदावन्ते च ब्राह्मणभोजनं दक्षिणादानं च दद्यात्। य एतेन विधिना वेदमधीयीत स ततः पूतो वेदो भवति। मनः शुद्धिश्च भवति। द्वाभ्यां पारायणाभ्यां ऋग्भिश्चाभोजन इहाधीते अनृतेभ्यः प्रमुच्यते। त्रिभि र्बहुभ्यः पतनीय पातकेभ्यः। शूद्रायां रेतः सिक्त्वा गङ्गाप्सु निमज्जंश्च भवति। चतुर्भ्यः शूद्रान्नभोजनात्तत्सेवनात् तत्स्त्रीसेवनात् च। पञ्चभिरयाज्ययाजनात् पूतो भवति। अग्राह्यग्रहणात् ग्राह्याग्रहणा दसभ्योपसनाच्च। षड्भिर्ब्राह्मणस्य लोहितकरणात् स्त्रीलोहितकरणात् पशुहननात् सुवर्णस्तेयात् पतित संप्रयोगाच्च। सप्तभिः प्राजापत्यानां हीनाचरणात् यज्ञोपवेधनाच्च। अष्टभिश्चान्द्रायणस्यानाचरणात् गुरुतल्पगमनात् रजस्वलागमना च। नवभिः सुरापानात्। दशभिः अश्रोत्रिय-

१. प्रगाथेभ्यः क्षुद्रसूक्तेभ्य इति. घ पाठः।

याजनात् असोमपानात् अन्यायतश्च । एकादशभिर्ब्राह्मणहननात् । गर्भहननात् । द्वादशभिः पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते । स्वर्गं लोकं गच्छति । पितृन् स्वर्लोकं गमयति । अग्निष्टोमादीन् क्रतून्यजति । तैः क्रतुभिरिष्टं भवति ।

" वेदाध्यायीसदैवस्या दपाप्मा सत्यवान् शुचिः ।
यं यं कामयते कामं तं तं वेदेन साधयेत् ॥
असाध्यं नास्तियत्किञ्चित् ब्रह्मणो हि फलं महत् ।
ब्रह्मणो हि फलं महत् " । इति ।

समाप्ते चैतादेवता यजुषा तर्पयतीति ॥ समाप्ते-वेदपारायणे समाप्ते एता देवताः-पूर्वोक्ता अग्निसोमाद्याः । यजुषा तर्पयति-यजुर्वेदेनसह तर्पयतीति । " यजुर्वेदपारायणे तस्य वेदस्य प्राधान्यमुच्यते । अथवा भूरादिव्याहृति चतुष्टयात्मकं यजुः शब्देन गृह्यते । तेनैतदुक्तं भवति-' भूर्देवाँ स्तर्पयामि भुवोदेवाँ स्तर्पयामि ' इत्यनेन प्रकारेण तर्पयित्वाऽग्निसोमादींस्तर्पयेदिति । नास्यान्तरा जननमरणे अशुचीति। नाशुचिहेतुभूते इत्यर्थः।नान्तरा व्याहरेदिति । उपक्रान्ते वेदपारायणमध्ये न व्याहरेत् नाध्यापयेत् तथा लौकिकवचनमपिन ब्रूयात् । विहितनित्यनैमित्तिककर्मानुपयुक्तामुक्तिं न कुर्यादित्यर्थः । निशो निशान्तरं सङ्ग्रामारण्यसलिलं लोप्य परिदध्यादिति । लोप्य-छित्वा-परिहाप्य ॥ वर्जयित्वेति यावत् । परिदध्यात्-परिसमापयेत् । निशान्तरंनिशीथः । सन्ध्या वा । सलिलं वृष्टिः ॥ उदक समीपे भूमिका वा । निशादिकालान्देशांश्च वर्जयित्वा समापयेदित्यर्थः । सततः पूतोवेदो भवतीति। वेदो भवति-वेदात्मको भवति। उत्कृष्टज्ञानवान् भवेदित्यर्थः द्वाभ्यां पारायणाभ्यां ऋग्भिश्चेति-ऋग्भिः पावमानीभिः पारायणद्वयं पावमान्यश्च मिलित्वोक्तफलाय कल्पन्ते इत्यर्थः । एवमुत्ररत्रापि । पारायणत्रयं गङ्गास्नानं च मिलित्वा साधनम् । निमज्जंश्च भवति-पूतो भवतीत्यर्थः । प्राजापत्यहीनाचरणं-प्रक्रान्तप्राजापत्याननुष्ठानम् । एवं चान्द्रायणस्यानाचरणम् । यज्ञोपवेधनं-यज्ञविनाशः । इत्यनश्नत्पारायणविधिः ।

अथ महासौरमन्त्राणामृष्याद्यभिधीयते । अथ सौर्याणां मन्त्राणां ऋक्संख्यामृषीन्देवताः छन्दांसि च वक्ष्यामः पूर्वाचार्यक्रमेण । उदुत्यं जातवेदसमिति त्रयोदशर्चं सूक्तं काण्वेन प्रस्कण्वेन दृष्टं गायत्रम् । अन्त्याश्चतस्रोऽनुष्टुभः । तत्रैव उद्यन्नद्येति त्यृचो रोगघ्नः । उपनिषदन्त्या द्विषन्नाशिनी । चित्रं देवानामुद्गादिति षडर्चं सूक्तमाङ्गिरसेन कुत्सेन दृष्टं त्रैष्टुभम् । इन्द्रं मित्रं वरुणमिति द्व्यर्चमौचथ्येन दीर्घतमसा दृष्टस्त्रैष्टुभः । हंसः शुचिषदित्येषा गौतमपुत्रेण वामदेवेन दृष्टा जगती । यत्वा. सूर्येत्येषा भूमिपुत्रेणात्रिणा दृष्टाऽनुष्टुप् । यदद्य सूर्येत्येकाउत्सूर्य इति तिस्रः । उद्वेतीति चतस्रः अर्धश्च उदुत्यद्दर्शतमिति तिस्रः एता मैत्रावरुणेन वसिष्ठेन दृष्टाः । त्रिष्टुप् छन्दः । उदुत्यद्दर्शतमिति बृहती । शीर्ष्णः शीर्ष्ण इति सतो बृहती । तच्चक्षुरिति पुर उष्णिक् । बण्महाँ असीति द्वृचो भृगुपुत्रेण जमदग्निना दृष्टः । पूर्वा बृहत्युत्तरा सतो बृहती । नमो मित्रस्येत्येतद्द्वादशर्चं सूर्यपुत्रेणाभितपसा दृष्टं जागतम् । शंनो भवेति त्रिष्टुप् । सूर्यो नो दिवस्येत्येतत्पञ्चर्चं सूक्तं सूर्यपुत्रेण चक्षुषा दृष्टं गायत्रम् । विभ्राट् बृहदिति चतूर्ऋचं सूक्तं सूर्यपुत्रेणाविभ्राजा दृष्टं जागतं, विभ्राजं ज्योतिषेत्यास्तारपङ्क्तिः । आयंगौरिति न्तृचं सूक्तम् । सार्पराज्ञं गायत्रम् । सर्वत्र सूर्यो देवता । आद्यन्तं सूक्तं केचिदात्मस्तवं मन्यन्ते । य ऋषिः सोहमिति ध्यातव्यः । य एतेन सौर्येण सूरमहरहरुपतिष्ठन्तेत आयुष्मन्त आरोग्यवन्तो भवन्ति । सर्वकामवन्तो भवन्ति । अन्ते सूर्यसायुज्यं गच्छन्ति इति महासौरमन्त्राणामृष्याद्यभिधानम् ।

॥ अथ सौरमन्त्राः ॥

"उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्यम्" ॥ १ ॥ "अपत्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षुषे" ॥ २ ॥ "अदृश्यमस्य केतवा विरश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा" ॥ ३ ॥ "तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम्" ॥ ४ ॥ "प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषिमानुषान् । प्रत्यङ् विश्वं स्वर्दृशे" ॥ ५ ॥ "येनापावक-

चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ” ॥ ६ ॥ “ विद्या-मेषि रज स्पृथ्वहा मिमानो अक्तुभिः। पश्यन् जन्मानि सूर्य ” ॥७॥ ससत्वा हरितो रथे वहन्ति देव सूर्य। शोचिष्केशं विचक्षण ” ॥८॥ “ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्ति-भिः ” ॥ ९ ॥ “ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रासूर्यमगन्म जोतिरुत्तमम् ” ॥१०॥ “ उद्यन्नद्य मित्रमहः-आरोह-न्नुत्तरां दिवम् । हृद्रोगं मम सूर्य । हरिमाणं च नाशय ॥ ११ ॥ शुकेषु मे हरिमाणं । रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि ॥ १२ ॥ उदगादयमादित्यः । विश्वेन सहसा सह । द्विषन्तं मह्यं रन्धयन्मो अहं द्विषते रधम् ॥१३॥ इदमेकं त्रयोदशर्चं सूक्तम् । “ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुण-स्याग्नेः आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च [ तै. सं. का. १. प्र. ४. अ. ४३ ] ” ॥ १ ॥ “ सूर्यो देवीमुषसं रोचमानांम-र्योनयोषामभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ” ॥ २ ॥ “ भद्रा अश्वा हरितः सूर्यस्य चित्रा एदग्वा अनुमाद्यासः नमस्यन्तो दिव आपृष्ठमस्थुः परि द्यावापृथि-वी यन्ति सद्यः ” ॥ ३ ॥ “ तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं संजभार यदेदयुक्त हरितः सधस्थादाद्रात्रीवास-स्तनुतेसिमस्मै ” ॥ ४ ॥ “ तन् मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे अनन्तमन्य द्रुशदस्यपाजः कृष्णमन्यद्ध-रितः सम्भरन्ति ” ॥ ५ ॥ “ अद्या देवा उदिता सूर्यस्य निरँहसः पिपृ-तान्निरवद्यात् तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ६ ॥ इदं परं षडर्चं सूक्तम् ” ॥ “ इदं मित्रं वरुणमग्नि-माहुरथो दिव्यः स सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान माहुः ॥ १ ॥ कृष्णन्ति यानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति त आववृत्तत्सदनादतस्यादिद्धृतेन पृथिवी व्युद्यते ” ॥ २ ॥ अयंद्वृचः ॥ “ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषदवरसदृतसद्व्योमसदब्जगोजा ऋतजा अद्रिजा ऋतम् ” । इयमेका ऋक् ॥ “ यत्वा सूर्य—स्वर्भानुस्तमसा-विध्यदासुरः अक्षेत्रविद्यथामुग्धो भुवनान्यदीधयुः ” । इयमप्येका

ऋक् । " यदद्यसूर्यं ब्रवोऽनागा उद्यन्मित्राय वरुणाय सत्यम् वयं देवत्रादिते स्याम तव प्रियासो अर्यमन् गृणन्तः " ॥ एषाप्येका ऋक् । " उत्सूर्यो बृहदर्चींष्यश्रेत् पुरू विश्वाजनिम मानुषाणाम् समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥ १ ॥ स सूर्य प्रतिपुरो न उद्गा एभिस्तोमेभिरेतशेभि रेवैः, प्रणो मित्राय वरुणाय वोचोऽनागसो अर्यम्णे अग्नये च " ॥ २ ॥ " विनः सहस्रं शुरुधो रदन्त्वृतावानो वरुणो मित्रो अग्निः । यच्छन्तु चन्द्राउपमंनो अर्कं मानः कामं पूपुनन्तु स्तवानाः ॥ ३ ॥ " इति तिस्र ऋचः ॥ " उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणां । चक्षुः मित्रस्य वरुणस्य देव श्चर्मेव यः समविव्यक्तमांसि ॥ १ ॥ उद्वेति प्रसविता जनानां महान् केतुरर्णवः सूर्यस्य समानं चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षुयुक्तः ॥ २ ॥ विभ्राजमान उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः । एष मे देवः सविता च छन्द यः समानं न प्रमिनाति धाम ॥ ३ ॥ दिवो रुक्म उरुवक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूता अयं नर्थानि कृणवन्नपांसि ॥ ४ ॥ यत्रा चक्रुरमृता गातुमस्मै श्येनो नदीयन्नन्वन्वेति पाथः " । ऋक्चतुष्टयमेकोर्द्धर्चश्च । " उदुत्यद्दर्शतं वपुर्दिवएति प्रतिह्वरे । यदीमासुर्वहति देव एतशो विश्वस्मै चक्षसे अरम् " ॥ १ ॥ " शीर्ष्णः शीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमारजः सप्तस्वसारः सुविताय सूर्यं वहन्ति हरितो रथे ॥ २ ॥ तच्चक्षुर्देवहितं शुक्रमुच्चरत् पश्येम शरदः शतं जीवेम् शरदः शतम् " ॥ ३ ॥ अयंत्र्यृचः ॥ " बण्महाँ असि सूर्य बलादित्यमहाँ असि महस्ते सतो महिमापनस्यतेऽद्धादेवमहाँ असि ॥ १ ॥ बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि देवानामह्वा देवानाम सुर्यः पुरोहितो विभुर्ज्योतिरदाभ्याम् " ॥ २ ॥ अयं द्व्यृचः ॥ " नमो मित्रस्य वरुणस्य चक्षसे महोदेवाय तदृतं सपर्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥ १ ॥ सामा सत्योक्तिः परिपातु विश्वतो द्यावा च यत्रततनन्नहानि च । विश्वमन्यन्निविशते यदेजति विश्वाहापो विश्वाहोदेति सूर्यः ॥ २ ॥ न ते अदेवः प्रदिवो निवासते यदेतशेभिः पतरैरथर्यसि । प्राचीनमन्यदनुवर्तते रज उदन्येन ज्योतिषा यासि सूर्य ॥ ३ ॥ येन सूर्य ज्योतिषा

बाधसे तमो जगच्च विश्वमुदियर्षि भानुना। तेनास्मद्विश्वामनिरामनाहुतिमपामीवामपदुष्वप्न्यं सुव ॥ ४ ॥ विश्वस्य हि प्रेषितो रक्षसि व्रतमहेलयन्नुचरसि स्वधा अनु यदद्य त्वा सूर्योपब्रवामहै तन्नो देवा अनुमंसीरत क्रतुम् ॥ ५ ॥ तन्नो द्यावापृथिवी तन्न आप इन्द्रः शृण्वन्तु मरुतो हवं वचः। माशूनेभूम सूर्यस्य सन्दृशि भद्रं जीवन्तो जरणामशी महि ॥ ६ ॥ विश्वाहात्वा सुमनः सुचक्षसः प्रजावन्तो अनमीवा अनागसः। उद्यन्तं त्वा मित्रमहो दिवे दिवे ज्योग्जीवाः प्रतिपश्येम सूर्य ॥ ७ ॥ महिज्योतिर्बिभ्रतं त्वा विचक्षण भास्वन्तं चक्षुषे चक्षुषे मयः। आरोहन्तं बृहतः पाजसस्पपरिवयं जीवाः प्रतिपश्येम सूर्य ॥ ८ ॥ यस्य ते विश्वा भुवनानि केतुना प्रचेरते निचविशन्ते अक्तुभिः। अनागास्त्वेन हरिकेश सूर्याह्वाह्वामो वस्यसा वस्यसोदिहि ॥ शन्नो भव चक्षसा शन्नो अह्वा शं भानुना शं हिमा शं–
–घृणेन। यथा शमध्वं शमसद्दुरोणे तत्सूर्य द्रविणं धेहि चित्रम् ॥१०॥ अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे चतुष्पदे अदत् पिबदूर्जयमानमासितं तदस्मे शंयोररपो दधातन ॥ ११ ॥ यद्वो देवाश्च-कृम जिह्वया गुरुमनसो वा प्रयुती देवहेलनम्। अरा वायो नो अभि दुच्छुनायते तस्मिंतदेनो वसवो निधेतन ॥ १२ ॥” इदं द्वादशर्चं सूक्तम् ॥ “ सूर्यो नो दिवस्पांतुवातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः ॥ १ ॥ जोषा सवितर्यस्यते हरः शतं सर्वां अर्हति। पाहि नो दिद्युतः पतन्त्याः ॥ २ ॥ चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः। चक्षुर्धाता दधातु नः ॥ ३ ॥ चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः। सं चेदं विचपश्येम ॥ ४ ॥ सुसंदृशं त्वा वयं प्रतिपश्येम सूर्य। विपश्येम नृचक्षसः ॥ ५ ॥ इदं पञ्चर्चं सूक्तम् ॥ “ विभ्राट् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविन्हुतम् वातं जूतो यो अभिरक्षति तं त्मना प्रजाः पुपोष पुरुधा विराजति ॥ १ ॥ विभ्राट् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम्। अमित्रहा वृत्रहादस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २ ॥ इदं श्रेष्ठ ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजि दुच्यते बृहत्। विश्वभ्राट् भ्राजोमहि सूर्यो दृशा उरु पप्रथे सह ओजो अच्युतम् ॥ ३ ॥ विभ्राजं ज्योतिषा स्वरगच्छो रोच दिवः। येनेमा विश्वा भुवनान्याभृता

विश्वकर्मणा विश्वदेव्यावता ॥ ४ ॥" इदं चतुष्वर्चं सूक्तम् ॥ " आयं गौः पृश्निरक्रमीदसदसनन्मातरं पुरः। पितरं च प्रयं त्स्वः॥ १ ॥ अन्तश्च-रति रोचनास्य प्राणादपानती व्यख्यन्महिषो दिवम् ॥ २ ॥ त्रिंशद्धाम विराजति वाक्पतं गाय धीयते । प्रतिवस्तोरहद्युभिः " ॥ ३ ॥ इदं त्र्यृ चं सूक्तम् । इति महासौरमन्त्राः ॥

[1]महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्ममाणिक्यगणेन पूर्णः
पूर्णस्तरंगः खलु पंचमोऽत्र ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे पंचमस्तरंगः ।

१ माता पुण्यचरित्रकीर्तिविभवा यस्यांबिका नामतः
शाकल्यापरमूर्तिरार्यचरितः श्रीपेद्दिभट्टः पिता ॥
सोऽयं कौशिकवंशभूषणमणिः श्रीभट्टविश्वेश्वरः
वेदे स्मार्तमते नये च सपदे वाक्ये कृती वर्धते ॥ २ ॥

मतिर्येषां शास्त्रे प्रकृतिरमणीया व्यवहृतिः
परं शीलं श्लाघ्यं जगति ऋजवस्ते कतिपये ।
चिरं चित्तेतेषां मुकुरतल भूतेस्थितिमियात्
इयंव्यासारण्यप्रवरमणिशिष्यस्य भणितिः ॥ ३ ॥

इति श्रीपण्डित पारिजातकघरमछेत्यादि बिरुदराजि विराजमान श्रीमदनपाल पुत्रस्य मान्धातु र्निबन्धे महार्णवाभिधाने कर्मविपाके पंचमस्तरंगः ॥

ग. पाठः

# षष्ठस्तरङ्गः ।

अथ, श्रीरुद्रविधिः ॥ तत्र तावदुपयुक्तत्वेन विनियोगादिकं चिन्त्यते ॥ विनियोगो नाम सम्बन्धः । सचाङ्गाङ्गीभावविषयः । एकस्यैव मन्त्रस्य विधिबलादनेकेषु सजातीयेषु कर्मस्वङ्गत्वमस्ति । अतो यस्मिन् कर्मणि यदाङ्गभाक्त्वं भजते तदा तस्मिन् कर्मणि विनियोगो ज्ञेयः । एवं च यद्यपि 'चरमायामिष्टकायां शतरुद्रीयं जुहोति' इत्यादिब्राह्मणवाक्यैरग्निचयने चरमेष्टकायामेकादशभी-रुद्रानुवाकैर्होमो विहित इति होमाख्ये कर्मण्यङ्गत्वं रुद्रानुवाकानाम्, तथाऽपि जाबालश्रुतौ । 'किंजप्येनामृतत्वं नो ब्रूहि, शतरुद्रीय केनेति । तथा'रुद्राध्यायी–मुच्यते सर्वपापै'रिति । तथा'रुद्राणां जपहोमार्चनाविधिं व्याख्यास्याम' इत्यादिश्रुतिस्मृतिवाक्यैर्जपहोमाभिषेकेषु विनियोगात् जपादिष्वङ्गत्वमस्ति । अतो जपे साध्ये जपे विनियोगः, होमे साध्ये होमे विनियोगः, अभिषेके ( साध्य अभिषेके ) विनियोगो ज्ञेयः । इति विनियोगः अथ रुद्र मन्त्रविभागः । तत्र–'मन्त्रान्तैः कर्मादीन् संनिपातयेदि'त्यापस्तम्बः । मन्त्रान्तैः–मंत्रसमाप्तिभिः, कर्मादीन्–कर्मोपक्रमान् सन्निपातयेत्-योजयेत् । समग्रं मन्त्रं पठित्वा कर्म कुर्यादित्यर्थः । तद्यथा । "नमस्ते रुद्र मन्यव उतोत इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः । स्वाहा" । इति स्वाहाकारान्ते हविरग्नौ प्रक्षिप्य रुद्रायेत्युद्देशत्यागः कार्य इति । मन्त्रविभागश्च रुद्रानुवाकेषु नानाविधः । तत्र श्रौतकर्मणि 'चरमायामिष्टकायां जुहोती' त्युक्त्वा 'त्रेधा विभक्तं जुहोति त्रय इमे लोका' इति त्रिधा रुद्रानुवाकानामेकादशानां विभाग उक्तः । तथा–'तिस्र उत्तरा आहुतीर्जुहोति षट् सम्पद्यन्ते षड्वा ऋतव' इति षोढा विभागोपि दर्शितः । "नमस्ते रुद्र मन्यव" इत्येताननुवाकांस्त्रेधा विभज्यापितान् प्रथमादुपक्रम्य 'नमस्तक्षभ्य' इति जानुदघ्ने धारयमाणो 'रथकारेभ्यश्चव' इत्युपक्रम्य 'नमः स्वायुधाये' ति नाभिदघ्ने, शेषेण प्रागभ्यातानेभ्य आस्यदघ्ने हुत्वा सहस्राणि 'सहस्रश' इति दशाभ्यातानान् हुत्वाऽन्वारोहान् जुहोति । 'नमो रुद्रेभ्यो ये पृथिव्या'मिति जानुदघ्ने धारयमाणो–'नमो रुद्रेभ्यो येऽन्तरिक्ष' इति

नाभिदघ्ने, 'नमो रुद्रेभ्यो ये दिवी' त्यास्यदघ्ने हुत्वेति त्रेधा षोढा षोडशधा च विभागो दर्शितः। बोधायनेनापरः प्रकारः। तत्र प्रथमानुवाके पञ्चदशर्चे पञ्चदश मन्त्राः। द्वितीये त्रयोदश यजूंषीति त्रयोदश। तृतीयचतुर्थयोः प्रत्येकं सप्तदश यजूंषि। एषु त्रिष्वनुवाकेषूभयतो नमस्कारमन्त्राः। पञ्चमषष्ठानुवाकयोः प्रत्येकं पञ्चदश यजूंषि। सप्तमे षोडश। अष्टमे सप्तदश। नवमे एकोनविंशतिः। एषु पञ्चस्वनुवाकेष्वेकतो–नमस्कारमन्त्राः। तत्रापि पुरस्तान्नमस्कारः। नवमानुवाके 'नमो वः किरिकेभ्यो' देवानाँ हृदयेभ्य इत्येतदुत्तरमन्त्रचतुष्टयेऽप्यनुषजति। तद्यथा–"नमो विक्षीणकेभ्यो देवानां हृदयेभ्यो नमो विचिन्वत्केभ्यो देवानां हृदयेभ्यो नम आनिर्हतेभ्यो देवानाँ हृदयेभ्यो नम आमीवत्केभ्यो देवानाँ हृदयेभ्य' इति॥ अयं चानुषङ्गो यत्र होमादिष्वेतेषां मन्त्राणां पृथक् पृथक् विभज्य प्रयोगस्तत्रैव। यत्र तु जपादावपृथक्करणं न तत्र, अपि तु यथाध्ययनमेव पाठः। एवं सर्वत्राप्यनुषङ्गस्थलेषु ज्ञेयम्। अत्र च द्वितीयादिनवमान्तेष्वनुवाकेषु नमस्कारादिनमस्कारान्तमेकं यजुरिति शाकपूर्णिः। नमस्काराद्येकं यजुरिति यास्कः। अष्टावनुवाका अष्टौ यजूंषीति काशकृत्स्नः। तत्र शाकपूर्णिपक्षे उभयतोनमस्कारेषु सुकरो मन्त्रविभागः। अन्यतरतोनमस्कारेष्वेवमूह्यः। तद्यथा–'नमो भवाय च रुद्राय च नमः शर्वाय पशुपतये चे' त्यत्र द्वितीयो यो नमः शब्दः स पूर्वमन्त्रस्यान्तत्वेनोत्तरमन्त्रस्य चादित्वेनेत्युभयार्थमाम्नातः। काकाक्षिवदुभयत्र सम्बध्यते। तथाच। "नमो भवाय च रुद्राय नम" इत्येकोमन्त्रः॥ पुनरपि तमेव नमः शब्दमुपादाय "नमः शर्वाय च पशुपतये च नम" इत्यपरो मन्त्रः॥ एवमुत्तरत्रापि विज्ञेयम्। अथवा 'नमो भवाय च रुद्राय चे' त्येवमादिषु च शब्देन प्रथमो नमः शब्द अनुकृष्यते। एवमुभयतोनमस्कार मन्त्रा भवन्ति। यास्कपक्षे त्वन्यतरतोनमस्कारेषु स्फुटो मन्त्रविभागः। उभयतो नमस्कारेषूह्यः। तद्यथा–"नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नम" इत्यत्र नमो हिरण्यबाहवे सेनाये दिशां च पतय इत्येको मन्त्रः। पुरस्तादेवैकेन नमस्कारेण युक्तः। नमो नमो वृक्षेभ्यो

हरिकेशेभ्यः पशूनां पतय इति प्रथमत एव द्विनमस्कारको द्वितीय-मन्त्रः। एवमुत्तरत्रापि। चतुर्थानुवाके चरममन्त्रवर्जं। चरमत्वादौ द्विनमस्कारः। अन्ते एकतरनमस्कारक इत्युभयतो नमस्कारः स्वीकार्यः। एवं विधाश्च विभागा बहुभिर्भाष्यकारैरनुपात्ता इति बहुसंमतः पूर्वोक्त एव विभागो ग्राह्यः। तथा च शाकपूर्ण्यादिभिरपि न विरोधः। तथाहि। द्वितीयतृतीयचतुर्थानुवाकाभिप्रायेण नमस्कारादि नमस्कारान्तिमं एकं यजुरिति शाकपूर्णिः। इहापंचमादिनवमानुवाकाभिप्रायेण नमस्काराद्येकं यजुरिति यास्कः। काशकृत्स्नस्त्वष्टानुवाका अष्टौ यजूंषीति अवान्तरमहावाक्याभिप्रायेणाह। अन्यान्यप्यवान्तरवाक्यानि वेदभाष्ये भट्टभास्करादिभिः प्रदर्शितानि। तान्यग्रे प्रदर्श्यन्ते। तस्मात् पूर्वोक्तन्यायेनादित आरभ्य नवस्वनुवाकेषु च चतुश्चत्वारिंशदधिकं शतं मन्त्राः। दशमेऽनुवाके द्वादशर्चे द्वादशमन्त्राः। एकादशेऽनुवाकेऽन्ते त्रियजजुष्के दशर्चे त्रयोदश मन्त्राः। एवमेकादशस्वप्यनुवाकेषु मन्त्रा एकोनसप्तत्युत्तरं शतं भवन्ति। इति रुद्रानुवेकेषु मन्त्रविभागः। अथ चमकानुवाकेषु केवलेषु तथा चमकनमकयोर्विशिष्टप्रयोगे च मन्त्रविभागः तत्र 'अग्ना विष्णू स जोषसेति चतुर्गृहीतं हुत्वे' त्युपक्रम्य 'वाजश्च मे प्रसवश्च म' इति संततां ? वसोर्द्धारां जुहोत्यामन्त्रसमापनादिति। बोधायनेन प्रथमामृचमपास्यावशिष्टस्य चमकस्यैकमन्त्रत्वं वसोर्द्धारायामभिहितम्। तेनैव न्यायेन यदैकवारं नमकानुवाकावृत्याऽऽज्येन प्रतिमन्त्रं यत्र होमः क्रियते तदा तत्र चमके प्रथमामृचं पठित्वा चतुर्गृहीतेन हुत्वाऽवशिष्टेन चमकेन सन्ततां धारां जुहुयात्। यदा तु तिलादिभिर्होमो नमकेन तदाभिरुद्रं तिलादिभिरद्रव द्रव्यैः संततधारया अनिष्यभेर ?। यज्ञसंयुक्ते कर्मणि जपादौत्वनुवाकभेदस्य पृथङ् मन्त्रत्वेनानुष्ठानात्। प्रथमाऋगेको मन्त्रः। वाजश्च मइत्यारभ्यानुवाकान्तमपरो मन्त्रः। अवशिष्टा दशाऽनुवाका दश मन्त्रा इत्येवं द्वादशभिर्मन्त्रैर्जुहुयात्। अन्ते वसुधारामपि कुर्वीत॥ वसोर्द्धाराया अभिलषितार्थ प्राप्तिहेतुत्वात्। यत्रापि रुद्रानुवाकानामेकादशावृत्या प्रतिमन्त्रं होम–स्तत्रापि 'नमस्ते रुद्र' इत्येकादशानामनुवाकानामेकमेकं जपेदिति बोधायनेन एकवारं ? एकादशानु-

वाक पाठान्त एकं प्रथमानुवाकं पठेत् । पुनरपि समग्र नमकानुवाकावृत्तिं कृत्वा द्वितीयं चमकानुवाकमावर्तयेत् एवमेव समग्रनमकानुवाकानां प्रत्यावृत्ति चमकानुवाकेषु क्रमेणैकैकोऽनुवाक आवर्त्तनीय इत्यभिधानात् । प्रतिमन्त्रं रुद्रानुवाकहोमान्ते एकं प्रथमचमकानुवाकमेकमन्त्रात्मकं पठित्वा, हुत्वा, पुनरपि पूर्वोक्तन्यायेन रुद्रानुवाकैर्हुत्वा द्वितीयेन चमकानुवाकेन जुहुयात् । इति ?। एवमेकादश रुद्रानुवाकाना मेकादशावृत्या होमे प्रत्यावृत्ति चमकानामेकमेकमनुवाकं क्रमेण हुत्वाऽन्ते वसोर्द्धारां जुहुयात् । अयं च होमप्रकारो द्रवाद्रवद्रव्यसाधारणः । सर्वत्र वसुधारा त्वाज्येन । एवमेव रुद्रैकादशिन्यां महारुद्रेऽतिरुद्रे च द्रष्टव्यम् । एतल्लक्षणानि चाह शातातपः

"षडङ्गैकादशीरुद्रो रुद्रैकादशरुद्रतः ।
एकादशभिरेताभिर्महारुद्रश्च कथ्यते ॥
एकादशमहारुद्रै रतिरुद्रइतीरित" इति ॥

तत् यथा "विधितो नमकावृत्ती रुद्र एकादशात्मिका ।
रुद्रस्यैकादशावृत्या रुद्रैकादशिनीस्मृता ॥
एकादशभिरेताभि र्महारुद्रस्तु कथ्यते ।
एकादशमहरुद्रैरतिरुद्र इतीष्यत" इति ॥

अनयोरर्थः—वक्ष्यमाणषडङ्गन्यासादिपूर्वकं एकादशानां नमकानुवाकानां जपानन्तरमेकं चमक प्रथमानुवाकं जपेत् । पुनः पूर्ववत् नमकजपानन्तरं द्वितीयं चमकानुवाकं पठेत् । एवमेवैकादशवारान्नमकान् पठन् क्रमेणैकमेकं अनुवाकमुदीरयेत् । अनेन चप्रकारेण नमकैकादशानुवाकानामेकादशधा आवृत्तिः षडङ्गैकादशीत्युच्यते । एषैव रुद्र इति संज्ञां लभते । एकादशरुद्रतः पूर्वोक्तरुद्रस्यैकादशावृत्त्येत्यर्थः । एकादशरुद्रतो रुद्रीत्यन्वयः । इयं च रुद्रस्यैकादशावृत्तिरेव–रुद्रीति–रुद्रैकादशिनी चेति व्यपदेशद्वयभाग्भवति । एकादशभिरेताभिः–रुद्रैकादशिनीति पर्यायनाम्नीभिरेकादशसंख्याकाभिर्महारुद्रः कथ्यते । महारुद्रस्यैकादशावृत्तिरतिरुद्र इति । इति चमकनमकयोर्मन्त्रविभागः॥

अथ मन्त्रविभागप्रकाराणां अनेकेषां दर्शितत्वात् कस्मिन् विभागे कतिमन्त्रसंख्या ? तथा कृतमन्त्रविच्छेद इत्येतत्प्रदर्शित-

त्वात् एतया दशांशहोमादिषु कत्याहुतयइत्येतदपि अभिधास्यति। तत्र श्रुत्या त्रिधा षोढा च विभागो दर्शितः। श्रौतंत्रेधाविभागं मनसि निधाय बौधायनोप्याह।—“नमस्ते रुद्र मन्यव” इत्येताननुवाकांस्त्रिधा विभज्येति। अत्रैवाविच्छिन्नानामनुवाकानां त्रेधाकरणपक्षे आद्याश्चत्वारोनुवाका एकोंऽशः ततः चत्वारोऽनुवाका अपरोंशः। एवं अष्टानुवका गताः। अवशिष्टानुवाकत्रयं तृतीयोंऽशः। एवं च अनुवाकमध्ये विच्छेदमन्तरेण त्रैविध्यं घटते।

यथा गवां शतं दक्षिणेत्यत्र षोडशर्त्विजां दक्षिणाविभागः॥ तथा प्रधानभूतर्त्विक्चतुष्टयस्यार्द्धिन इति संज्ञा। तदनन्तरर्त्विक्चतुष्टयस्यद्व यर्द्धिन इत्येव संज्ञा। तदनन्तराणां चतुर्णामृत्विजां तृतीयार्धिन इति। ततोऽवशिष्टानां चतुर्णां पादिन इति। एषां शतं गावो विभज्य दातव्याः तत्राप्ययं नियमः। अर्द्धिनामर्द्धं द्वयर्धिनां द्वितीयोंऽशः तृतीयिनां तृतीयोंशः। पादिनां चतुर्थांश इति। अर्द्धिनां द्वौ समुदायौ। तत्र प्रथमार्द्धिनां गोशतार्द्धं पश्चाशद्गावो भवन्ति एवं च क्रियमाणे द्वितीयार्द्धिनां पश्चाशदर्द्धं पश्चविंशतिः। तृतीयिनां पश्चाशत्तृतीयांशे क्रियमाणे षोडश षोडश भवन्ति। गोद्वयमवशिष्यते। तच्च त्रिषुस्थलेषु विभज्य स्थापितुमशक्यम्। द्रव्य–द्वारा च विभागो निषिद्धः। तस्मादर्द्धिनामष्टाचत्वारिंशत्। द्वितीयार्द्धिनां चतुर्विंशतिः। तृतीयिनां षोडश। पादिनां द्वादश। इति गवां स्वरूपाविच्छेदाय ( परिच्छेदाय ? ) शतं गावो विभक्ताः। अनेनन्यायेन प्रकृते एकादशानाम् अनुवाकानमनुवाकस्वरूपाविच्छेदाय पूर्वोक्तरीत्या चरमानुवाकत्रयस्यैकमन्त्रत्वमङ्गीकार्यम्। एवं चरमानुवाकानामेकावृत्या जपान्ते यदि होमं कर्तुं चिकीर्षतितदा होममात्रमेव। तदाऽस्मिन् पक्षे त्रयो मन्त्रा इति तिस्र आहुतयो भवन्ति। एवं चमकानुवाकानामेव जपान्ते होमचिकीर्षायां केवल होममात्रेच्छायां वा चमकेषु प्रथमा ऋगेको मन्त्रः। शिष्टा एकादशानुवाकाः एकादशमन्त्रा इति द्वादशभिर्मन्त्रैस्तावत्य आहुतयः। वसुधारा तु पूर्वोक्तरीत्यैव॥ इत्येकः प्रकारः॥ अथापरस्त्रेधा विभागो नमकेषु। अत्र च मूलं त्रेधा विभक्तं जुहोती त्येतदेव श्रुतिवाक्यम्। तत्र च ‘नमस्ते रुद्र मन्यव’ इत्यारभ्य सभापतिभ्य श्च वो नम’ इत्यन्त

एको भागः। 'नमो अश्वेभ्य' इत्यारभ्य 'अवार्याय चे' त्यन्तो द्वितीयः। 'नमः प्रतरणायचे' त्यारभ्य आसमाप्ते स्तृतीयः॥ एवं त्रयो मन्त्रा इति। जपाङ्गहोमे। अनङ्गभूतस्वतन्त्रहोमे च तिस्र आहुतयः। इति द्वितीयः प्रकारः। अथान्यः प्रकारः षोढाविभागात्मकः। तत्र समनन्तरपूर्वोक्तविभागप्रकारेणैव प्रथमद्वितीयौ ग्राह्यौ। तृतीये विभागे 'नमः प्रतरणाय चे' त्यारभ्य 'य एतावन्त' इत्यृचा सहित एको मन्त्रः। एवं त्रयो मन्त्राः। 'नमो रुद्रेभ्यो ये पृथिव्या' मित्यारभ्य त्रीणि यजूंषि। अत्र च नमो रुद्रेभ्य इति चैषामित्येतत्पदं च 'इषवस्तेभ्य' इत्यारभ्यासमाप्तेर्यो वाक्यशेषः स चेत्येतत्त्रितयं त्रिष्वपि यजुष्ष्वनुषजति॥ तथा च नमो 'रुद्रेभ्यो येषामन्नमिषवस्तेभ्य इत्युपक्रम्य समाप्तिपर्यन्तमेको मन्त्रः। 'नमो रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्य' इत्यादि द्वितीयः॥ 'नमो रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्य' इत्यादि तृतीयो मन्त्रः। एवं पूर्वोक्तैस्त्रिभिर्मन्त्रैः सह षण्मन्त्राः। अस्मिंश्च त्रेधाविभक्तं जुहोतीयुपक्रम्य षट्संपद्यन्ते इत्यन्ता श्रुतिः प्रमाणत्वेन पूर्वं प्रदर्शिता। अधुना विनियोगसङ्ग्रहवाक्यं प्रमाणीक्रियते॥

"प्रश्ने तु पञ्चमे प्रोक्तः शतरुद्रीयहोमकः।<br>
सभापतिभ्य इत्यन्त एको मन्त्रः प्रकीर्तितः॥<br>
अवार्याय चेत्यन्त एक स्तन्मसीत्यन्त उत्तरः।<br>
नमो रुद्रेभ्य इत्येषः पृथिव्यादि विभेदतः।<br>
त्रेधा भिन्नस्ततो होमे षण्मन्त्रा इह कीर्तिताः॥"

इति। अस्मिन् पक्षे षडाहुतयो भवन्ति। जपाङ्गहोमे षडङ्गहोमे वा। इति तृतीयः प्रकारः॥ अथ षोडशधा विभागवा[नन्यतरः प्रकारः]॥ तत्र 'नमस्ते रुद्र' इत्यारभ्य 'नमस्तक्षभ्य' इत्यन्तः प्रथमविभागः। 'रथकारेभ्य' इत्युपक्रम्य 'नमः स्वायुधाय' इत्यन्तो द्वितीयो विभागः। 'सुधन्वने चे' त्यारभ्य 'सहस्राणि सहस्रधा' इत्येतदृक्पर्यन्तं तृतीयो विभागः। इति त्रयो मन्त्राः। सहस्राणि सहस्रश इत्यारभ्य यएतावन्तश्चेत्यन्ताः दशर्चो दश मन्त्राः। एते च पूर्वैः सह त्रयोदश। 'नमो रुद्रेभ्यो ये पृथिव्यामित्यवशिष्टवाक्यं पूर्वोक्तरीत्या त्रीणि यजूंषि त्रयो मन्त्राः। एवं पूर्वोक्तैः सह षोडश।

अत्र विभागे बौधायनवचनं प्रमाणम्। तच्च ‘ अपिवा प्रथमादुपक्रम्य नमस्तक्षभ्य ’ इत्यादि प्रथममेव दर्शितम्॥ इत्येवं जपाङ्ग होमे स्वतन्त्र होमे वा षोडशाहुतयो भवन्ति॥ इति चतुर्थः प्रकारः।

अथाष्टाचत्वारिंशन्मन्त्रविभागात्मकः प्रकारः। तत्र प्रथमानुवाके पञ्चदशर्चे. पञ्चदश मन्त्राः। ततोष्टावनुवाकाः। अष्टौ यजूंषि। काशकृत्स्न मतेनेति आदितः आरभ्य नवस्वनुवाकेषु त्रयोविंशतिः। दशमेऽनुवाके द्वादशर्चे द्वादश एते च पूर्वैः सह पंचत्रिंशत् एकादशानुवाके दशर्चः। त्रीणि यजूंषि। इति त्रयोदश। द्वादशर्चे द्वादश। एते च पूर्वैः सह पञ्चत्रिंशत् निवृत्तः एकादशेऽनुवाक ऋचो दश त्रीणि यजूंषि। इति त्रयोदश। एवं पूर्वैः सहाष्टाचत्वारिंशत्। अतो जपाङ्गहोमे स्वतन्त्रहोमे च तावत्य एवाहुतयः। इति पञ्चमप्रकारः।

अथैकोनसप्तत्युत्तरशतमन्त्रविभागयुक्तोऽन्यतमः प्रकारः। स च विनियोगप्रकरणानन्तरमेव तत्र प्रथमानुवाके पञ्चदशर्चे इत्यादिना ग्रन्थेन दर्शितः। अतश्च जपाङ्गहोमे स्वतन्त्रहोमेऽप्येकोनसप्तत्युत्तरं शतमाहुतयः इति षष्ठः प्रकारः॥ इत्येकवारं नमकावृत्तौ मन्त्रभागभेदेन षट् पक्षाः प्रदर्शिताः। अथ रुद्रैकादशिन्यादिषु पूर्वोक्तपक्षसंख्यानामावृत्तिभेदात् संख्याभेदः प्रदर्श्यते। नमकानामेकवारमावृत्तौ दशांश होम प्राप्तिरेवनास्ति॥ एकादशधाऽऽवृत्यात्मके रुद्राख्ये विद्यते। तत्र दशांशहोमे कर्तव्ये त्रेधाविभागपक्षद्वयाश्रयणेन तिस्र आहुतयः। चमकानुवाकेन एकैका आहुतिरिति एकादश, पूर्वाभिस्सह चतुर्दशाहुतयः; ततो वसोर्धारा सम्पूर्ण होमपक्षे प्रतिरूपकं तिस्रस्तिस्र आहुतय इति त्रयस्त्रिंशत्। रूपकान्ते चमकानुवाकेनैकैका आहुतिरिति एता एकादश, पूर्णाभिः सह चतुश्चत्वारिंशत्। अन्तेच वसोर्धारा। षोढा विभाग पक्षाश्रयणे तु दशांशहोमे षडाहुतयः चमकानुवाकानां एकादशेति, पूर्वाभिः सह सप्तदश। ततो वसोर्धारा। समग्रहोमे तु प्रतिरूपकं षट्षडिति षडुत्तरा षष्टिः। पूर्वोक्तरीत्या चमकानुवाकाहुतय एकादशेति सप्तसप्ततिराहुतयः। अन्ते वसोर्धारा॥ षोडशधा विभागपक्षाङ्गीकारे दशांशहोमे षोडशाहुतयः

पूर्वोक्तरीत्या चमकानुवाकाहुतयः एकादशेति सप्तविंशतिराहुतयः वसोर्धारा च सम्पूर्णहोमे तु प्रतिवारं षोडश षोडशेति षट्सप्तत्युत्तरं शतमाहुतयः। पूर्ववच्चमकस्यैकादशेति पूर्वाभिः सह सप्ताशीत्युत्तरं शतं आहुतयो भवन्ति। ततो वसोर्धारा। समग्रहोमे प्रतिरूपकमष्टाचत्वारिंशन्मन्त्रविभागपक्षाङ्गीकारे दशांशहोमेऽष्टाचत्वारिंशदेव चमकानामेकादशेति पूर्वाभिस्सह एकोनषष्ट्याहुतयो भवन्ति। तदनन्तरं वसोर्धारा। समग्रहोमे प्रतिरूपकमष्टाचत्वारिंशत्। तदष्टाचत्वारिंशत्युत्तरा पञ्चशती भवत्याहुतीनाम्। पूर्ववच्चमकानुवाकानामेकादशेति मिलित्वैकोनचत्वारिंशदुत्तराणि पञ्चशतानि। ततो वसुधारा च। एकोनसप्त[त्युत्तरशतमन्त्र]विभागपक्षाश्रयणे तु दशांशहोम एकोनसप्तत्युत्तरं शतमाहुतयः चमकानामेकादशेति-मिलित्वा अशीत्युत्तरशतमाहुतयो भवन्ति ततो वसोर्धारा। समग्रहोमे तु प्रतिरूपकमेकोनसप्तत्युत्तरं शतं एकोनसप्तत्युत्तरं शतमित्येकसहस्रमष्टौ शतान्येकोनषष्टिश्चेति आहुतयो भवन्ति॥ पूर्ववच्चमकानुवाकानामेकादशेति मिलित्वैकसहस्रमष्टौ शतानि सप्ततिश्च। ततो वसोर्धारा। इति रुद्र आहुतिसंख्या॥

अथ रुद्रैकादशिन्यामाहुतिसंख्या। अत्रैकविंशत्युत्तरं (शतं) रूपका भवन्ति। अतः शतांशहोमोऽप्यत्रावतिष्ठतेऽवकाशसम्भवात् ?। यदा च शतांशहोमस्तदा शतरूपकाणामेकरूपकावृत्त्या होमः॥ तत्रापि त्रेधा षोढेत्यादिमन्त्रविभागभेदेनानेके पक्षाः सम्भवेयुः॥ तत्र त्रेधाविभागे शतरूपकाणां एकरूपकावृत्त्या तिस्र आहुतयः। रूपकाणामेकविंशतिरवशिष्यते॥ तदर्थं 'नमस्ते रुद्र मन्यव' इत्यनया प्रथमया ऋचा एका आहुतिः॥ 'नमो रुद्रेभ्यो येदिवि येषां वर्षमिषवस्तेभ्य' इत्यन्त्ययजुषा परा आहुतिः॥ चमकानुवाकैरेकादशेति षोडश आहुतयः॥ अन्ते वसोर्धारा च॥ शतांशहोमपक्ष एव षोढाविभागाश्रयणे शतरूपकाणामेकरूपका(वृत्त्या)षडाहुतयः। अवशिष्टैकविंशतिरूपकाणां कृते 'नमस्ते रुद्र' इत्यादिभिस्तिसृभि ऋग्भिः प्रत्येकमेकैकाहुतिरिति तिस्रः। 'नमो रुद्रेभ्यो ये पृथिव्या' मित्यादिभिः पूर्वोक्तप्रकारयुक्तैस्त्रिभिर्यजुर्भिस्तिस्र आहु-

तयः । इति पूर्वोक्ताभिः सह द्वादश । चमकानुवाकैरेकादशेति मिलित्वा त्रयोविंशतिः । अन्ते वसो र्धारा च ॥ शतांशहोमपक्ष एव षोडशधाविभागाङ्गीकारे रूपकशतस्यैकरूपकावृत्या षोडशाहुतयः । अवशिष्टानां रूपकाणां मेकविंशतेः? कृते प्रथमयचैंकाऽऽहुतिः । पूर्वोक्तरीत्याऽन्त्ययजुषाचैकाऽऽहुतिः । पुनः प्रथमाभिस्तिसृभी ऋग्भिः प्रत्येकमेकैकेति तिस्रः । अन्त्यैःत्रिभिः पूर्वोक्तप्रकारयुक्तैर्यजुर्भिः प्रत्येकमेकैकेति तिस्रः । इति मिलित्वा चतुर्विंशतिः । चमकानुवाकैरेकादश । इति पूर्वोक्ताभिः सह पञ्चविंशतिः । ततो वसुधारा । शतांशहोमपक्ष एवाष्टाचत्वारिंशद्रूपमन्त्रविभागाश्रयणे शतस्य रूपकाणामेकरूपकावृत्याऽष्टाचत्वारिंशदाहुतयः । त्रेधा विभागमाश्रित्य पुनरेकरूपकावृत्या तिस्र आहुतयः । अवशिष्टरूपकाणां कृते प्रथमयचैंका आहुतिः । अन्त्ययजुषा पूर्वोक्तप्रकारयुक्तेन चैकाऽऽहुतिरित्येवं त्रिपञ्चाशत् । चमकानुवाकैरेकादश । इति मिलित्वा चतुःषष्टिः । अन्ते वसुधारा च ॥ शतांशहोमपक्ष एवैकोनसप्तत्युत्तर (शत) मन्त्रविभागाश्रयणे शतरूपकाणामेकरूपकावृत्यैकोनसप्तत्युत्तरं शतमाहुतयः । त्रेधा विभागमाश्रित्य पुनरेकरूपकावृत्या तिस्र आहुतयः । अवशिष्टरूपकाणां कृते प्रथमाभिस्तिसृभि ऋग्भिः प्रत्येकमेकैकेति तिस्रः । अन्त्यैः पूर्वोक्तप्रकारयुक्तैः त्रिभिर्यजुर्भिः प्रत्येकमेकैकेति तिस्रः । एवं पूर्वोक्ताभिः सहाष्टाधिकसप्तत्युत्तरं शतमाहुतयः । चमकानुवाकैरेकादश । इति मिलित्वैकोननवत्युत्तरं शतम् ॥ अन्तेवसोर्धारा ॥ अथ रुद्रैकादशिन्यामेव दशांशहोमपक्षाश्रयणे तत्रापि त्रेधामन्त्रविभागाङ्गीकार एकविंशत्युत्तरशतरूपकाणां द्वादश रूपका दशमो भागः । द्वादशस्वपि प्रत्येकं तिस्रास्तिस्र इति षट्त्रिंशदाहुतयः । प्रथमयचैंकाऽन्त्ययजुषा चैकेति मिलित्वाऽष्टत्रिंशत् । चमकानुवाकैरेकादशेति पूर्वाभिः सहैकोनपञ्चाशत् ॥ अन्ते वसोर्धारा च ॥ दशांशहोम एव षोढा मन्त्रविभागे दशमांशो द्वादश रूपकाः । तेषु प्रत्यावृत्ति षट् षडिति द्विसप्ततिराहुत्यः । प्रथमचैंकाऽन्त्ययजुषा चैकेति चतुः सप्ततिः । चमकानुवाकैरेकादश । इति मिलित्वा पञ्चाशीतिः ॥ ततो वसोर्धारा ॥ दशांशहोम एव षोडशधा मन्त्रविभागे द्वादशरूपकाणां प्रत्यावृत्ति षोडश षोडशेति अधिक-

नवत्युत्तरं शतमाहुतयः। प्रथमचैकाऽन्त्ययजुषा चापरा। चमकानुवाकैरेकादशं। इति मिलित्वा पञ्चोत्तरं शतद्वयमाहुतयः। अन्ते वसुधारा च॥ दशांशहोम एवाष्टाचत्वारिंशन्मन्त्रविभागे द्वादशरूपकाणां प्रत्यावृत्ति षट्चत्वारिंशदिति षट्सप्तत्युत्तरा पञ्चशती भवत्याहुतीनाम्। प्रथमयचैकाऽन्त्ययजुषा चापरा। चमकानुवाकैरेकादश। इति मिलित्वैकोननवत्युत्तरा पञ्चशती अन्तेवसुधारा। दशांशहोम एवैकोनसप्तत्युत्तरशतमन्त्रविभागे द्वादशरूपकाणां प्रत्यावृत्त्येकोनसप्तत्युत्तरं शतमिति द्वे सहस्रे अष्टाविंशतिश्चाहुतयः। प्रथमयचैकाऽन्त्ययजुषा चापरा। चमकानुवाकैरेकादश। इति पूर्वाभिःसह द्वे सहस्र एकचत्वारिंशच्च अन्तेवसोर्धाराच॥ अथ रुद्रैकादशिन्यामेव समग्रहोमपक्षे तत्रापि त्रेधा मन्त्रविभागे एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकं तिस्रस्तिस्र इति त्रीणि शतानि त्रिषष्टिश्चाहुतयो भवन्ति। समग्रहोमपक्ष एव षोढा मन्त्रविभागे एकविंशत्युत्तरशतरूपाकाणां प्रतिरूपकं। षट् षडिति सप्तशतानि षड्विंशतिश्चाहुतयोभवन्ति। संपूर्णहोमपक्षे एव षोडशधामंत्र विभागे एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकं षोडश षोडशेति एकसहस्रं नवशतानि षट्त्रिंशचाहुतयः। सम्पूर्ण होमपक्षे एवाष्टाचत्वारिंशन्मन्त्रविभागे एकविंशत्युत्तरशतरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदिति पञ्चसहस्राण्यष्टौ शतानि अष्टौचाहुतयः। समग्रहोमपक्ष एवैकोनसप्तत्युत्तरशतमन्त्रविभागे एकविंशत्युत्तरशतरूपकाणामेकोनसप्तत्युत्तरं शतं मन्त्रा इति विंशति सहस्राणि ( चत्वारि शतान्येकोनपञ्चा ) शदाहुतयः। समग्रहोमपक्षेषु सर्वेष्वप्येकादश रूपकाश्चमकस्य भवन्ति। तत्र प्रतिरूपकमेकादशानुवाकैरेकादशैकादशाहुतय इति चमकाहुतय एकविंशत्युत्तरं शतं भवति। सर्वत्र चान्ते वसोर्द्धारा चेति रुद्रैकादशिन्यामाहुतिसंख्या॥ अथ महारुद्राहुतिसंख्या॥ तत्र चैकविंशत्युत्तरशतस्यैकादशभिर्गणनात् एकसहस्रं त्रीणि शतान्येकत्रिंशच्च रूपका भवन्ति। सर्वत्र चान्ते वसोर्द्धारा॥ अत्र शतांशस्त्रयोदश रूपकाः। रूपकाणामेकत्रिंशदवशिष्यते। एवं च शतांशहोमपक्षाङ्गीकारे त्रेधा मन्त्रविभागे शतांशस्य त्रयोदशरूपकाणां प्रतिरूपकं तिस्रस्तिस्र इत्येकोनचत्वा-

रिंशदाहुतयः ॥ अवशिष्टानामेकत्रिंशद्रूपकाणां कृते आद्याभिस्तिसृभिर्ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अन्तैः पूर्वोक्तप्रकारयुक्तैस्त्रिभिर्यजुर्भिः प्रत्येकमेकैकेति तिस्रः। इति मिलित्वा पञ्चचत्वारिंशदाहुतयः। चमकानुवाकैरेकादशभिः प्रत्येकमेकैकेत्येकादशेति पूर्वोक्ताभिः सह षट्पञ्चाशत्। अन्ते वसोर्धारा च। शतांशहोमपक्ष एव षोढा मन्त्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं षट् षडित्यष्टसप्ततिराहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते आद्याभिस्तिसृभी ऋग्भिः प्रत्येकमेकैकेति तिस्रः। अन्त्यैस्त्रिभिर्यजुर्भिः प्रत्येकमेकैकेति तिस्रः। एवं मिलित्वा चतुरशीतिः। पूर्ववच्चमकानुवाकैरेकादशेति पूर्वोक्ताभिः सह पञ्चनवतिः। ततो वसोर्धारा। शतांशहोमपक्ष एव षोडशधा मन्त्रविभागे त्रयोदशरूपकाणां प्रतिरूपकं षोडशेति द्वे शते अष्टाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते पूर्ववत्प्रथमर्ग्भिस्तिस्रः अन्त्ययजुर्भिस्तिस्र इति षट्। पूर्ववदेव चमकानुवाकैरेकादश। इति मिलित्वा द्वे शते पञ्चविंशतिश्च। अन्ते वसोर्धारा च। शतांशहोमपक्ष एवाष्टाचत्वारिंशन्मन्त्रविभागे त्रयोदशरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशदिति षट् शतानि चतुर्विंशति श्चाहुतयो भवन्ति। अवशिष्टैकत्रिंशद्रूपकाणां कृते प्रथमाभिस्तिसृभी ऋग्भिः प्रत्येकमेकैकेति तिस्रः। पूर्वोक्तप्रकारयुक्तैरन्त्ययजुर्भिस्तिस्रः पूर्ववच्चमकानुवाकैरेकादश। इति पूर्वोक्ताभिः सहैकचत्वारिंशदुत्तरं षट्शत माहुतीनाम्। ततो वसोर्धारा च॥ शतांशहोमपक्ष एवैकोनसप्तत्युत्तरशतमन्त्रविभागे त्रयोदशरूपकाणां प्रतिरूपकमेकोनसप्तत्युत्तरं शतमिति द्वे सहस्रे एकशतं सप्तनवतिश्चाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते पूर्ववत्प्रथमाभी र्ऋग्भिस्तिस्रेऽन्त्ययजुर्भिस्त्रिभिः पूर्ववत् तिस्रः। पूर्ववदेवचमकानुवाकैरेकादश। इति मिलित्वा द्वे सहस्रे द्वे शते चतुर्दश च, अन्ते वसोधारा। अथ महारुद्र एव दशांशहोमपक्षे एकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां दशमोंऽश एकशतं त्रयस्त्रिंशच्चे ति भवति। एक एव रूपकोऽवशिष्यते॥ अत्र च त्रेधा मन्त्रविभागे त्रयस्त्रिंशदधिकस्यैकशतस्य रूपकाणां प्रतिरूपकं तिस्रस्तिस्र आहुतय इत्येकोन चतुः शत्याहुतीनाम्। अत्र चमकानां दशांशो द्वादश रूपका भवन्ति। तत्र प्रतिरूपकमेकादशानुवाकैरे-

कादशैकादशेति मिलित्वा द्वात्रिंशदुत्तरमेकशतमाहुतयः । एताश्च पूर्वाभिः सहपंचशतानि एकत्रिंशच्चाहुतयः ॥ ततो वसोर्द्धारा ॥ दशांशहोमपक्षे एव षोढामंत्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं षट्षडिति सप्तशतानि अष्टनवति आहुतयः । चमकद्वादशरूपकाणां पूर्ववत् प्रतिरूपकं एकादशैकादशेति द्वात्रिंशदुत्तरं एकशतं एताश्च पूर्वाभि स्सह नवशतानि त्रिंशच्चाहुतयः ततो वसोर्धारा ॥ दशांशहोमपक्ष एव षोडशधा मन्त्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं षोडश षोडशेति द्वे सहस्रे एकशतमष्टाविंशतिश्चाहुतयः । पूर्ववच्चमकद्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेत्येकशतं द्वात्रिंशच्च । पूर्वाभिः सहैताः द्वे सहस्रे द्वे शते षष्टिश्चाहुतयः ॥ अन्ते वसोर्द्धारा च ॥ दशांशहोमपक्ष एवाष्टाचत्वारिंशन्मन्त्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकमष्टाचत्वारिंशादिति षट् सहस्राणि त्रीणि शतानि चतुर शीतिश्चेत्याहुतयः । पूर्ववच्चमकद्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेति द्वात्रिंशदधिकमेकशतम् । एताश्च पूर्वाहुतिभिः षट् सहस्राणि पञ्च शतानि षोडश च भवन्ति ॥ अन्ते वसोर्द्धारा च ॥ दशांशहोमपक्ष एवैकोनसप्तत्युत्तरशतमन्त्रविभागे त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपकं शतमेकोनसप्ततिः शतमेकोनसप्ततिश्चेति मिलित्वा द्वाविंशतिसहस्राणि चत्वारिशतानि सप्तसप्तति श्चाहुतयः । पूर्ववच्चमकद्वादशरूपकाणां प्रतिरूपकमेकादशैकादशेत्येकशतं द्वात्रिंशच्च । पूर्वाभिः सहैताः द्वाविंशतिसहस्राणि षट् शतानि नव च भवन्ति । अन्ते वसोर्द्धारा च ॥ अथ महारुद्र एव समग्रहोमपक्षे तत्रापि त्रेधा मन्त्रविभागे एकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकं तिस्रस्तिस्र आहुतय इति त्रीणि सहस्राणि नव शतानि त्रिनवतिश्चाहुतयो भवन्ति । चमकस्यैकविंशत्युत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वैकसहस्रं त्रीणि शतान्येकत्रिंशच्चाहुतयः । एताश्च पूर्वाभिः सह पञ्चसहस्राणि त्रीणि शतानि चतुर्विंशति श्चाहुतयः ॥ ततो वसोर्द्धारा च ॥ अत्रैव समग्रहोमपक्षे तत्रापि षोढा मन्त्रविभागे एकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकं षट् षडाहुतय इति सप्त सहस्राणि नव

शतानि षडशीतिश्चाहुतयो भवन्ति। चमकस्यैकविंशत्युत्तरैकशत-रूपकाणां प्रतिरूपकमेकादशैकादशेत्येकसहस्रं त्रीणि शतान्येक-त्रिंशच्च आहुतयः। इति पूर्वाभिः सह नव सहस्राणि त्रीणि शतानि सप्तदश चाहुतयः॥ अन्ते वसोर्द्धारा च। अत्रैव समग्रहोमपक्षे षोडशधामन्त्रविभाग एकसहस्रं त्रीणि शतान्येकत्रिंशच्चेतिरूपकाणां प्रतिरूपकं षोडश षोडशेत्येकविंशति सहस्राणि द्वे शते षण्णवति-श्चाहुतयः। चमकस्यैकविंशत्युत्तरशतरूपकाणां प्रतिरूपकमेकादशै-कादशेति मिलित्वैकसहस्रं त्रीणि शतान्येकत्रिंश च। पूर्वोक्ताभिः सहैता द्वाविंशतिसहस्राणि षट् शतानि सप्तविंशतिश्चाहुतयः॥ ततो वसोर्द्धारा। अत्रैव समग्रहोमपक्षे तत्राप्यष्टाचत्वारिंशन्मन्त्र-विभागे एकसहस्रं त्रीणि शतान्येकात्रिंशच्चेति रूपकाणां प्रतिरूपक-मष्टाचत्वारिंशदष्टाचत्वारिंशदिति त्रिषष्टिसहस्राण्यष्टौशतान्यष्टा-शीतिश्चाहुतयः। चमकस्यैकविंशत्युत्तरशतरूपकाणां प्रतिरूपकमेका-दशैकादशेत्येकसहस्रं त्रीणि शतान्येकत्रिंशच्चाहुतयः। एताश्च पूर्वो-क्ताभिर्मिलित्वा पञ्चषष्टिसहस्राणि द्वे शते एकोनविंशतिश्चाहुतयः॥ अन्ते वसोर्द्धारा च। अत्रैव समग्रहोमपक्ष एकोनसप्तत्युत्तरशतम-न्त्रविभागे एकसहस्रं त्रीणि शतान्येकत्रिंश चेति रूपकाणां प्रतिरूपकमेकोनसप्तत्युत्तरं शतमिति द्वे लक्षे चतुर्विंशति सहस्राणि नवशतान्येकोनचत्वारिंशच्चाहुतयः। चमकस्यैकविंशत्युत्तरशतरू-पकाणां प्रतिरूपकमेकादशैकादशेत्येकसहस्रं त्रीणि शतान्येकात्रिं-शच्चाहुतयः। पूर्वोक्ताभिः सहैता द्वे लक्षे षड्विंशति सहस्राणि द्वे शते सप्तति श्चाहुतयः अन्ते वसोर्धारा च। इति महारुद्रे आहुति-संख्या॥

अथातिरुद्र आहुतिसंख्या॥ तत्र चतुर्दश सहस्राणि षट् शतान्येकचत्वारिंशच रूपकाभवन्ति। अत्र शतांश एकशतं षट् चत्वारिंशचरूपकाः। एकचत्वारिंशद्रूपका अवशिष्यन्ते। अतिरुद्रे चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशचरूपका भवन्ति। अत्र शतांशस्त्रयोदशरूपकाः। एकत्रिंशद्रूपका अवशिष्यन्ते। एवं स्थिते शतांशपक्षे त्रेधा मन्त्रविभागे षट्चत्वारिंशदुत्तरशतरूपकाणां प्रतिरूपकं तिस्रास्तिस्र आहुतय इत्यष्टत्रिंशदुत्तरा चतुःशत्याहुतीनाम्।

अवशिष्टैकचत्वारिंशद्रूपकाणां कृते आद्याभिस्तिसृभि ऋग्भिः प्रत्येकमेकैकेति तिस्रः अन्त्ययजुर्भिः पूर्वोक्तप्रकारयुक्तैस्त्रिभिः प्रत्येकमेकैकेति तिस्रः । चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदुत्तरमेकशतमाहुतयः। अवशिष्टैकत्रिंशद्रूपकाणां कृते " अग्नाविष्णू सजोषसे " त्यनयचैंकाऽऽहुतिः । इत्येवं मिलित्वाऽष्टाशीत्युत्तरा पञ्चशत्याहुतीनाम् । अन्ते वसोर्द्धारा। शतांशपक्ष एव षोढा मन्त्रविभागे षट्चत्वारिंशदधिकैकशतरूपकाणां प्रतिरूपकं षट्षडित्यष्टौ शतानि षट्सप्ततिश्चाहुतयः । अवशिष्टैकचत्वारिंशद्रूपकाणां कृते पूर्ववदाद्याभिस्तिसृभि ऋग्भिस्तिस्रः पूर्ववदेवान्त्ययजुर्भिस्तिस्र इति षडाहुतयः । चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदुत्तरमेकशतम् । अवशिष्टैकत्रिंशद्रूपकाणां कृते " अग्नाविष्णू सजोषसे " त्यनयचैंकाऽऽहुतिः । इति पूर्वाभिः सहैता एकसहस्रं षड्विंशतिश्चाहुतयः॥ अन्ते वसोर्द्धारा च। शतांशहोमपक्ष एव षोडशधा मन्त्रविभागे षट्चत्वारिंशदधिकैकशतरूपकाणां प्रतिरूपकं षोडश षोडशेति द्वे सहस्रे त्रीणि शतानि षट् त्रिंशच्चाहुतयः । अवशिष्टैकचत्वारिंशद्रूपकाणां कृते पूर्ववदाद्याभिस्तिसृभि ऋग्भिस्तिस्रः पूर्ववदेवान्त्ययजुर्भिस्तिस्र इति षडाहुतयः । चमकस्य त्रयोदशरूपकाणां कृते प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदुत्तरमेकशतम् । अवशिष्टैकत्रिंशद्रूपकाणां कृते 'अग्नाविष्णू सजोषसे' त्यनयचैंकाऽऽहुतिः । इति पूर्वाभिः-सहैता द्वे सहस्रे चत्वारि शतानि षडशीतिश्चाहुतयः। अन्ते वसोर्द्धारा च। शतांशहोमपक्ष एवाष्टाचत्वारिंशन्मन्त्रविभागे षट् चत्वारिंशदधिकैकशतरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदिति सप्तसहस्राण्यष्ट चाहुतयः । अवशिष्टैकचत्वारिंशद्रूपकाणां कृते पूर्ववदाद्याभिस्तिसृभि ऋग्भिस्तिस्रः पूर्ववदन्त्ययजुर्भिस्तिस्र इति षडाहुतयः । चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमेकादशैकादशेति त्रिचत्वारिंशदुत्तरमेकशतम् आहुतयः । अवशिष्टैकत्रिंशद्रूपकाणां कृते 'अग्नाविष्णू सजोषसे' त्यनयचैंका हुतिः । इति पूर्वाभिः सहैताः सप्त सहस्राण्येकशतमष्टपञ्चाशचाहुतयः । अन्ते वसोर्द्धारा । शतांशहोमपक्ष एवैकोनसप्तत्युत्तरशतमन्त्रविभागे षट्चत्वारिंशदधिकैक-

शतरूपकाणां प्रतिरूपकमेकोनसप्तत्युत्तरशतमिति चतुर्विंशतिसह-स्राणि षट्शतानि चतुः सप्ततिश्चाहुतयः। अवशिष्टैकचत्वारिंशद्रू-पकाणां कृते पूर्ववदाद्याभिस्तिसृभि ऋग्भिस्तिस्रः पूर्ववदन्त्ययजुर्भि-स्तिस्र इति षडाहुतयः। चमकस्य त्रयोदशरूपकाणां प्रतिरूपकमे-कादशैकादशेति त्रिचत्वारिंशदुत्तरमेकशतम् आहुतयः। अवशि-ष्टैकत्रिंशद्रूपकाणां कृते 'अग्ना विष्णू सजोषसे' त्यनयर्चैका आहुतिः। इति पूर्वाभिः सहैताः चतुर्विंशतिसहस्राण्यष्टौशतानि चतुर्विंशति श्चाहुतयः। अन्ते वसोर्द्धारा च॥ अथातिरुद्र एव दशांशहोमपक्षे चतुर्दश सहस्राणि षट् शतान्येकचत्वारिंशच्चेति रूपकाणां दशमोंऽश एकसहस्रं चत्वारिशतानि चतुः षष्टिश्चेति भवति। एक एव रूपकोऽवशिष्यते॥ तथा चमकस्यैक सहस्रं त्रीणि शतानि एक-त्रिंशच्चेति रूपकाणां दशमोंऽशः एकशतं त्रयस्त्रिंशत् रूपका भवन्ति। एक एव रूपकोऽवशिष्यते अत्र च त्रेधा मन्त्र विभागे एकसहस्रं चत्वारिशतानि चतुःषष्टिश्चेति रूपकाणां प्रतिरूपकं तिस्रस्तिस्र आहुतय इति॥ मिलित्वा चत्वारि सहस्राणि त्रीणि शतानि द्विन-वतिश्चाहुतयः॥ अत्र चमकानां दशांशे एकशतं त्रयस्त्रिंशच रूपकाभवन्ति॥ एक एव रूपकोऽवशिष्यते। तत्र प्रतिरूपकमेका-दशानुवाकैरेकादशैकादशेति मिलित्वैकसहस्रं चत्वारिशतानि त्रि-षष्टिश्चाहुतयः। एताश्चपूर्वाभिःसह पंचसहस्राण्यष्टौ शतानि पञ्चपञ्चाशच्चाहुतयः। ततो वसोर्द्धारा॥ दशांशहोमपक्ष एव षोढा मन्त्रविभागे एकसहस्रं चत्वारि शतानि चतुः षष्टिश्चेति रूपकाणां प्रतिरूपकं षट्षडिति मिलित्वाऽष्टौ सहस्राणि सप्तशतानि चतुरशीति श्चाहुतयः। चमकस्य त्रयस्त्रिंशदुत्तरैकशतरूपकाणां प्रतिरूपकमे-कादशैकादशेतिमिलित्वैकसहस्रं चत्वारि शतानि त्रिषष्टिश्चाहुतयः। एताश्च पूर्वोक्ताभिः सह दशसहस्राणि द्वे शते सप्तचत्वारिंशच्चाहु-तयः॥ अन्ते वसोर्द्धारा च। दशांशहोमपक्ष एव षोडशधा मन्त्र-विभाग एकसहस्रं चत्वारि शतानि चतुः षष्टिश्चेति रूपकाणां प्रतिरूपकं षोडश षोडशेति मिलित्वा त्रयोविंशतिसहस्राणि च-त्वारि शतानि चतुर्विंशतिश्चाहुतयः॥ चमकस्य त्रयस्त्रिंशदुत्तरैकश-तरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वैकसहस्रं चत्वारि

शतानि त्रिषष्टिश्चाहुतयः ॥ एताश्च पूर्वोक्ताभिःसह चतुर्विंशति सहस्राण्यष्टौ शतानि सप्ताशीति श्चाहुतयः। ततो वसोर्द्धारा। दशांश-होमपक्ष एवाष्टाचत्वारिंशन्मन्त्रविभाग एकसहस्रं चत्वारि शतानि चतुः षष्टि श्चेतिरूपकाणां प्रतिरूपकमष्टाचत्वारिंशदष्टाचत्वारिंशादिति मिलित्वा सहस्राणि द्वे शते द्विसप्ततिश्चाहुतयः॥ चमकस्य त्रयस्त्रिं-शदुत्तरैकशतरूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वैकसहस्रं चत्वारि शतानि त्रिषष्टिश्चाहुतयः। पूर्वोक्ताभिः सहैता एकसप्त-तिसहस्राणि सप्तशतानि पञ्चत्रिंशचाहुतयः। ततो वसोर्द्धारा च। दशांशहोमपक्ष एवैकोनसप्तत्युत्तरशतमन्त्रविभागे एकसहस्रं चत्वा-रि शतानि चतुःषष्टिश्चेति रूपकाणां प्रतिरूपकमेकोनसप्तत्युत्तरशत-मिति मिलित्वा द्वे लक्षे सप्तचत्वारिंशत्सहस्राणि चत्वारि शतानि षोडश चाहुतयः। चमकस्य त्रयस्त्रिंशदुत्तरशतरूपकाणां प्रतिरूपक-मेकादशैकादशेति मिलित्वैकसहस्रं चत्वारि शतानि त्रिषष्टि श्चाहु-तयः। पूर्वोक्ताभिः सहैता द्वे लक्षे अष्टाचत्वारिंशत्सहस्राण्यष्टौ शतान्येकोनाशीति श्चाहुतयः। अन्ते वसोर्द्धारा च॥

अथातिरुद्र एव समग्रहोमपक्षे चतुर्दशसहस्राणि षट् शतान्ये-कचत्वारिंशचेति रूपकाणां त्रेधा मन्त्रविभागे प्रतिरूपकं तिस्रस्तिस्र आहुतय इति मिलित्वा त्रिचत्वारिंशत्सहस्राणि नव शतानि त्रयोविंशतिश्चाहुतयः॥ चमकस्यैक सहस्रं त्रीणि शतान्ये-कत्रिंशचेतिरूपकाणां प्रतिरूपकमेकादशभिरनुवाकैरेकादशाहुतय इति मिलित्वा चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशचाहुतयः। पूर्वोक्ताभिः सहैता अष्टपञ्चाशत्सहस्राणि पञ्च शतानि चतुःषष्टि-श्चाहुतयः। अन्ते वसोर्द्धारा च। समग्रहोमपक्ष एव षोढा मन्त्रविभागे चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशचेति रूपकाणां प्रतिरूपकं (षट्) षडिति मिलित्वा सप्ताशीति सहस्राण्यष्टौ शतानि षट् चत्वारिंशचाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशचेति रूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा चतुर्दश सहस्राणि षट् शतान्येक चत्वारिंशचाहुतयः। एताश्चपूर्वोक्ताभिःसहैकलक्षं द्वे सहस्रे चत्वारि शतानि सप्ताशीतिश्चाहुतयः। अन्ते वसोर्द्धारा च। समग्रहोमपक्ष एव षोडशधा मन्त्रविभागे चतुर्दशसहस्राणि षट्

शतान्येकचत्वारिंशच्चेति रूपकाणां प्रतिरूपकं( षोडश )षोडशेति मिलित्वा द्वे लक्षे चतुस्त्रिंशत्सहस्राणि द्वे शते षट् पञ्चाशच्चाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति[ रूपकाणां प्रति]रूपकमेकादशैकादशेति मिलित्वा चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्चाहुतयः॥ पूर्वोक्ताभिः सहैता द्वे लक्षेऽष्टाचत्वारिंशत्सहस्राण्यष्टौ शतानि सप्त नवतिश्चाहुतयः। ततश्च वसोर्द्धारा। समग्रहोमपक्ष एवाष्टाचत्वारिंशन्मन्त्रविभागे चतुर्दश सहस्राणि षट् शतान्येकचत्वारिंशच्चेति रूपकाणां प्रतिरूपकमष्टाचत्वारिंशदिति मिलित्वा सप्त लक्षाणि द्वे सहस्रे सप्त शतान्यष्टषष्टिश्चाहुतयः॥ चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्चाहुतयः। पूर्वोक्ताभिः सह सप्त लक्षाणि सप्तदश सहस्राणि चत्वारि शतानि नव चाहुतयः॥ अन्ते वसोर्द्धारा च। समग्रहोमपक्षएवैकोनसप्तत्युत्तरशतमन्त्रविभागे चतुर्दश सहस्राणि षट् शतान्येकचत्वारिंशच्चेति रूपकाणां प्रतिरूपकमेकोनसप्तत्युत्तरं शतमेकोनसप्तत्युत्तरं शतमिति मिलित्वा चतुर्विंशति लक्षाणि चतुःसप्तति सहस्राणि त्रीणि शतान्येकोनत्रिंशच्चाहुतयः। चमकस्यैकसहस्रं त्रीणि शतान्येकत्रिंशच्चेति रूपकाणां प्रतिरूपकमेकादशैकादशेति मिलित्वा चतुर्दशसहस्राणि षट् शतान्येकचत्वारिंशच्चाहुतयः। पूर्वोक्ताभिःसहैताश्चतुर्विंशतिलक्षाण्यष्टाशीति सहस्राणि नव शतानि सप्ततिश्चाहुतयः। ततश्च वसोर्द्धारा। इत्यतिरुद्राहुति संख्या।

अथ " नमकादिविभेदेन जपहोमविधौ विधिः।
गुरुर्लघुश्चद्दृष्टाऽयं योज्यः शक्त्याद्यपेक्षया"॥

इति नमक रुद्ररुद्रैकादशिनीमहारुद्राऽतिरुद्रेषु मन्त्रविच्छेदप्रकार आहुतिविशेषश्च दर्शितौ।

अथ दशांश होमे स्थण्डिलकुण्डनिर्माणविधिः। तत्र स्वल्पसंख्याकहोमे स्थण्डिलम्। समन्ततो हस्तमात्रं द्विहस्तपरिमितं वा

होमानुसारेण कल्पयेत्। अधिकसंख्याकहोमे तु कुण्डं प्रकल्पयेत्। तच्च नवग्रहमखोक्तप्रकारेण ॥ स्कान्दपुराणे ॥

"नवग्रहमखे कुण्डं हस्तमात्रं समं भवेत्।
चतुरश्रमधोहस्तं योनिवक्त्रं समेखलम् ॥
चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता।"

हस्तमात्रं समं-चतसृष्वपि दिक्षु हस्तप्रमाणम् ॥ चतुरश्रं-चतुष्कोणम्। अधोहस्तं-अधःखातमपि हस्तपरिमितं यस्य तत्तथोक्तम्। योनिवक्त्रं-वक्ष्यमाणलक्षणलक्षितयोनिर्यस्य वक्त्रं, तत्तादृक् ॥ मेखलाप्रमाणमाह ॥ चतुरङ्गुलविस्तारेत्यादिना। तद्वदुच्छ्रिता चतुरङ्गुलोन्नता। एतच्च कुण्डमयुतहोमानुसारि। योनिलक्षणं तु चिन्तामणौ।

"वितस्तिमात्रा योनिःस्यात् षट्सप्ताङ्गुलविस्तृता।
कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रिता ॥
गजोष्ठसदृशी तद्वदायता छिद्रसंयुता।
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ॥
मेखलोपरि सर्वत्र अश्वत्थदलसन्निभा"।

वितस्तिमात्रेति। एतच्च योनिदैर्घ्यम्। षट्सप्ताङ्गुलविस्तृतेति। षडङ्गुलिविस्तृता सप्ताङ्गुलिविस्तृता वे(त्या)यामे विकल्पः। तद्वदायतेत्यनेन दैर्घ्ये प्रमाणान्तरमाह। उक्तलक्षणलक्षिता-गजोष्ठसदृश्यश्वत्थपत्रसदृशी वा योनिर्भवतीत्यर्थः। इयं च योनिः कुण्डस्य पश्चिमदिग्भागे मेखलोपरि कार्या ॥

मण्डपलक्षणं स्कान्दपुराणे।
"गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः।
रुद्रायतन भूमौ वा चतुरश्रमुदक्प्लवम् ॥
दश हस्तमथाष्टौ वा हस्तान् कुर्याद्विधानतः।
तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः ॥
प्रागुदक्प्रवणां भूमिं कारयेद्यत्नतो नरः।

प्रागुत्तरं समासाद्य प्रदेशं मण्डपस्य तु ॥
शोभनं कारयेत्कुण्डं यथावल्लक्षणान्वितम् " ।

अथ प्रकारान्तरेण कुण्ड निर्माणविधिस्तत्रैव—

" द्विहस्तं विस्तृतं तद्वच्चतुर्हस्तायतं पुनः ।
लक्षहोमे भवेत्कुण्डं योनिवक्त्रं त्रिमेखलम् " ॥

पूर्वपश्चिमयोर्हस्तद्वयविस्तृतं –दक्षिणोत्तरयोश्चतुर्हस्तायतं – चतुर्हस्तखातं चतुरश्रकुण्डं विधेयमित्यर्थः। योनिलक्षणं तु प्रागुक्तम् ॥

" द्विरङ्गुलोच्छ्रिता कार्या प्रथमा मेखला बुधैः ।
त्रिरङ्गुलोन्नता तद्व द्वितीया समुदाहृता ॥
उच्छ्रायविस्तराभ्यां च तृतीया चतुरङ्गुला ।
द्व्यङ्गुलस्तत्र विस्तारः पूर्वयोरपि शस्यते " ॥

(पूर्वयोर्द्वितीयातृतीययोः) मेखलयोः । चतुर्हस्तकुण्डे मण्डपप्रमाणमाह—

" तथा षोडशहस्तः स्या न्मण्डप(श्च) चतुर्मुखः । "

मत्स्यपुराणे

" नदीनां सङ्गमे चैव सुराणामग्रतस्तथा ।
सुसमे भूमिभागे च देवताधिष्ठि(तो ? ते) नृपः ॥
ऋत्विग्भिर्गुरुणा चैव सार्द्धं भूमिं प्रतीक्षयेत् ।
खनेद्वै तत्र कुण्डं च सुसमं हस्तमात्रकम् ॥
द्विगुणं लक्षहोमे च कोटिहोमे चतुर्गुणम् ।
युग्मशो ऋत्विजः प्रोक्ता अष्टौ ते वेदपारगाः ॥
कन्दमूलफलाहारा दधिक्षीराशिनोऽपिवा " ।

अष्टावृत्विज इत्युपलक्षणम् । अतो यत्र शान्तिकर्मादि वेगेन निर्वाह्यं भवति तत्र यावद्भिर्ऋत्विग्भिः कर्म वेगेन निर्वहति तावत ऋत्विजो वृणीत । यद्यपि स्वत्वत्यागो यजमानेनैव कार्यस्तथापि बहुकर्तृके होमे त्यागस्य विभिन्नकालत्वेन त्यागकालस्य ज्ञातुमशक्यत्वाद्धोमोपक्रम एव यष्टव्यदेवताः स्मृत्वा यजनीयद्रव्यं च मनसि निधाय ' इदं यथादेवतमस्त्वि'ति स्व(त्व) त्यागः कार्यो यजमानेन । अथ

वसुधारा प्रकारः। चिन्तामणौ ॥

" घृतकुम्भं वसोर्द्धारां पातयेद(नि ? न)लोपरि ।
औदुम्बरीं अथार्द्रां च ऋज्वीं कोटर वर्जितां-
बाहुमात्रां स्रुवं कृत्वा ततस्तंभद्वयोपरि ॥
" घृतधारां तथा सम्यगग्नेरुपरि पातयेत् " ॥

अत्र वसुधारायां मन्त्र श्चमकानुवाकाः—मन्त्रान्तराण्यपि श्रूयन्ते ।

" श्रावयेत्सूक्तमाग्नेयं वैष्णवं रौद्र मैन्दवम् ।
महावैश्वानरं सम्यक् ज्येष्ठसाम च पाठयेत् " ॥

इति स्थण्डिलकुण्डनिर्माणविधिः ।

अथ बौधायनप्रोक्तः पञ्चाङ्गन्यासविधिः । पञ्चाङ्गरुद्रशब्दस्य षडङ्गरुद्रशब्दस्यायमर्थः-(पञ्चप्रकाराङ्गन्यासा: यस्मिन् सः) पञ्चाङ्गरुद्रः। एवं षडङ्गरुद्रोपि । तत्र पञ्चाङ्गन्यासेषु शिखाद्यस्त्रान्तमेकत्रिंशदङ्गन्यासः प्रथमः । मूर्द्धादिपादान्तं दशन्यासो द्वितीयः । पादादिमूर्द्धान्तं पञ्चन्यासः तृतीयः । गुह्यादिमस्तकान्तं षडङ्गन्यासश्चतुर्थः । हृदयाद्यस्त्रान्तं पञ्चन्यासः ? पञ्चमः । एवं पञ्चाङ्गन्यासः । प्रजननादि सर्वांगपर्यन्तं षोडशाङ्गन्यासोऽपरः ॥ अयं च षष्ठोङ्गन्यासः ॥ पूर्वोक्तपञ्चप्रकारन्याससहितः पञ्चाङ्गरुद्रः ॥ षट् प्रकारन्याससहितः षडङ्गरुद्रः ॥ अथ महान्यासविधिः ।

ततः पञ्चाङ्गरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्यामः-' याते रुद्रे 'ति शिखायाम्-' अस्मिन्महत्यर्णवे ' इति शिरसि-' सहस्राणी 'ति ललाटे-' हंसः शुचिष 'दिति भ्रुवोर्मध्ये-' त्रियम्बकं यजामह ' इति नेत्रयोः-' नमः श्रुत्यायचे 'ति कर्णयोः ' मानःस्तोक ' इति नासिकायाम्-' अवतत्ये 'ति मुखे ' (नीलग्रीवेति द्वौ) ' कण्ठे-' नमस्ते अस्त्वायुधाये ' ति बाह्वोः-' याते हेतिरि 'त्युपबाह्वोः, ' परिणोरुद्रस्ये 'ति मणिबन्धनयोः, ' ये तीर्थानी 'ति हस्तयोः-' सद्योजात 'मिति पञ्चानुवाकान् पञ्चस्वङ्गुलीषु, ' नमो

वः किरिकेभ्य' इति हृदये, 'नमो गणेभ्य' इति पृष्ठे–'नमो हिरण्यबाहव' इति पार्श्वयोः, 'विज्यंधनु रिति जठरे, हिरण्यगर्भ' इति नाभौ, 'मीढुष्टमे'ति कट्याम्–'ये भूतानामधिपतय' इति गुह्ये, येअन्नेष्वि'ति अण्डयोः, 'सशिराजातवेदा' इत्यपाने–'मानो महान्त' मित्यूर्वोः, 'एष त इति जान्वोः ये संसृष्टजिदिति जङ्घयोः, विश्वं भूतमिति गुल्फयोः–'ये पथा'मिति पादयोः, 'अध्य वोच'दिति कवचम्, 'नमो बिल्मिन' इत्युपकवचम्, 'नमो अस्तु नीलग्रीवाये'ति तृतीयम् 'नेत्रं, प्रमुञ्च धन्वन' इत्यस्त्रम्। य एता-वन्ता श्चे ति दिग्बन्धः। 'ओं नमो भगवते रुद्राये'ति नमस्कारं न्यसेत् ॥

"ओंकारं मूर्ध्नि विन्यस्य नकारं नासिकाग्रतः।
मोकारान्तु ललाटे वै भकारं मुखमध्यतः॥
गकारं कण्ठदेशे तु वकारं हृदि विन्यसेत्।
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत्॥
द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्।
सव्यं च पादयोर्न्यस्य वामं न्यस्योरुमध्यतः
अघोरं हृदि विन्यस्य मुखे तत्पुरुषं न्यसेत्।
ईशानं मूर्ध्नि विन्यस्य हंसो नाम सदाशिवः॥
हंसहंसेति यो ब्रूयात् हंसो नाम सदाशिवः"।

ईशानं मूर्ध्नि विन्यस्येत्यस्यायं अर्थः ईशानं मूर्ध्नि विन्यस्य हंस हंसेति ब्रूयात्। एवं कृते सति हंसो नाम–हंस इति प्रसिद्धः सदाशिवो भवेत्। अमुमेवार्थमनुवदति 'हंस हंसेति यो ब्रूयाद्धंसो नाम सदाशिव इति॥ "एवं न्यासविधिं कृत्वा ततः सम्पुटमारभेत्"॥ "त्रातारमिन्द्रं, त्वन्नो अग्ने सुगन्नः पन्थाम, सुन्वन्तं, तत्वाया, म्या नोनियुद्भि, वयँ सोम, तमीशान, मस्मे रुद्रा, स्योना पृथिवि।" इत्येतत्सम्पुटम्। इन्द्रादीन् दिक्षु विन्यस्यैवमेवात्मनिरौद्रीकरणं कृत्वा।

वियूरसित्यनुवाकेनसानुषंगेण त्वगस्थिगतैः पापैः प्रमुच्यते । सर्वभू-तेष्वपराजितो भवति । यक्षगन्धर्व भूतप्रेतपिशाचब्रह्मराक्षसयमदूत-शाकिनीडाकिनीसर्पश्वापदतस्कराद्युपद्रवाः सर्वे ज्वलन्तं पश्यन्तु मां रक्षन्तु । मनोज्योति, रबोध्यग्निर्मूर्द्धानं, मर्माणिते जातवेदा, इति गुह्याद्याभिमन्त्र्यात्मरक्षा कर्तव्या ब्रह्मात्मन्वदसृजतेत्यनुवाकेन शिव-सङ्कल्पं हृदयं पुरुषसूक्तं शिरः – उत्तरनारायणं शिखा – अप्रतिरथं कवचं – प्रतिपूरुषद्वयं नेत्रम्, शतरुद्रीयमस्त्रं, पञ्चाङ्गं सकृज्जपेत् अष्टाङ्गं प्रणम्याथात्मानं रुद्ररूपं ध्यायेत् ॥

" शुद्धस्फटिकसङ्काशं त्रिनेत्रंपञ्चवक्त्रकम् ।
गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥
नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् ।
व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥
कमण्डल्वक्षसूत्राभ्या मन्वितं शूलपाणिनम् ।
ज्वलन्तं पिङ्गलजटाशिखमुद्योतकारिणम् ॥
अमृतेनाप्लुतं हृष्टमुमादेहार्द्धधारिणम् ।
दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥
दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् ।
नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥
सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ।
एवं ध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् " ॥ इति

इति पञ्चाङ्गन्यासविधिः ॥

## अथ रुद्राभिषेकविधिः ॥

अभिषेके पूर्वोक्तन्यासा अपि समुच्चीयन्ते । अथातो रुद्रस्ना-नार्चनविधिं व्याख्यास्यामः । आदित एव तीर्थे स्नात्वा शुचिः प्रयतो ब्रह्मचारी शुक्लवासाः ईशानस्यप्रतिकृतिंकृत्वा तस्य दक्षिणाप्रत्यग्देशे तन्मुखःस्थित्वाऽत्मनि देवताः स्थापयेत् ॥ प्रजनने ब्रह्मा तिष्ठतु ॥ पादयो र्विष्णु स्तिष्ठतु। हस्तयोः हरि स्तिष्ठतु। बाहुवोरिन्द्र

स्तिष्ठतु। जठरे अग्नि स्तिष्ठतु। हृदये शिवस्तिष्ठतु। कण्ठे वसव स्तिष्ठन्तु। वक्त्रे सरस्वती तिष्ठतु। नासिकयोर्वायुस्तिष्ठतु। नयनयोः सूर्याचन्द्रमसौ (तिष्ठताम्)॥ कर्णयोरश्विनौ तिष्ठेतां। ललाटे रुद्रास्तिष्ठन्तु। मूर्द्धन्यादित्यास्तिष्ठन्तु॥ शिरसि महादेवः तिष्ठतु,। शिखायां वामदेव स्तिष्ठतु। पृष्ठे पिनाकी तिष्ठतु॥ पुरतः शूली तिष्ठतु॥ पार्श्वयोः शिवाशङ्करौ (तिष्ठताम्)॥ सर्वतो वायुस्तिष्ठतु। ततो बहिः सर्वतोग्निज्वालापरिमालावृतस्तिष्ठतु। सर्वेष्वङ्गेषु सर्वादेवास्तिष्ठन्तु। मां रक्षन्तु। अग्निर्मेवाचिश्रित इति यथा लिङ्गमङ्गानि संसृज्य अथैनं गन्धाक्षतपुष्पधूपदीपैरात्मानं प्रत्याराधयेत्। आराधितो मनुष्यै स्त्वं सर्वैर्देवैः रसादिभिः–। आवाहयामिभक्त्या त्वां मां गृहाण महेश्वर॥ त्र्यंबकं यजामहे इत्यथैन माराधयेत्। अग्निर्मेवाचिश्रितः इत्यादेरयमर्थः। अग्निर्मे इत्यादिभिः वक्ष्यमाणमन्त्रैः यथालिंगं अंगानि संस्पृशेत्। तत्र मन्त्राः। अग्निर्मेवाचिश्रितः। वाग्घृदये। हृदयं मयि। अहममृतो। अमृतं ब्रह्मणि॥ इति वाचं स्पृशेत्। वायुर्मेप्राणेश्रितः। प्राणो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति प्राणस्थानं हृदयं। सूर्यो मे चक्षुषि श्रितः। चक्षुर्हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति चक्षुषी। चन्द्रमामे मनसि श्रितः। मनो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि। इति मनस्थानं वक्षः। दिशो मे श्रोते श्रिताः। श्रोत्रꣳहृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति श्रोतं। आपो मे रेतसि श्रिताः। रेतो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति गुह्यस्थानं। पृथिवीमे शरीरेस्श्रिता। शरीरꣳहृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति शरीरं। ओषधिवनस्पतयो मे लोमसु श्रिताः। लोमानि हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति रोमकूपान्॥ इन्द्रो मे बले श्रितः। बलꣳहृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति सर्वाङ्गं। पर्जन्यो मे मूर्ध्नि श्रितः। मूर्धाहृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति मस्तकं। ईशानो मे मन्यौ श्रितः। मन्युर्हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति क्रोधस्थानं हृदयं।

आत्माम आत्मनि श्रितः। आत्मा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि॥ इति चित्तस्थानं वक्षः। पुन र्मे आत्मा पुनरायुरागात्। पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभिर्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः॥ इति सर्वं शरीरं स्पृशेत्। एवं अङ्गानि संमृज्य।

रुद्ररूपिणं जीवात्मानं स्वशरीरे पूजयेदित्यर्थः॥ तत्रावाहनमन्त्रः। आराधित इत्यादि। आवाहनव्यतिरिक्तेतरोपचारेषु पञ्चसु षट्सु वा 'त्र्यम्बकं यजामहे' इत्ययं मन्त्रः। अत्रनैवेद्यमपि मानसं परिकल्पयेत्। एवमात्मपूजानन्तरं शिवपूजाप्रकारमाह। "आ त्वा वहन्तु हरयः सचेतसः श्वेतै रश्वै सह केतुमद्भिः। वाताजवैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय। शर्वो?" मित्यावाहयामीत्यावाह्य संस्थापयेदित्यावाहनम् "सद्यो जातं प्रपद्यामी" त्यावाहनं ददाति॥ "सद्यो जाताय वै नमोनम" इत्यासनं ददाति॥ "भवे भवे नातिभवे भजस्व मा" मिति पाद्यं ददाति॥ "भवोद्भवाय नम" इत्यब्लिङ्गाभिः स्नानं ददाति॥ अब्लिङ्गा आपोहिष्ठेत्याद्याः॥ अथाद्भिस्तर्पयति॥ "भवं देवं" तर्पयामि॥ शर्वं देवं तर्पयामि–ईशानं देवं तर्पयामि–"पशुपतिं देवं" तर्पयामि। "रुद्रं देवं" तर्पयामि॥ "उग्रं देवं" तर्पयामि। "भीमं देवं" तर्पयामि। "महान्तं देवं" तर्पयामि। इति तर्पयित्वा "ज्येष्ठाय नम" इत्याचमनीयं ददाति। "श्रेष्ठाय नम" इति मधुपर्कं ददाति। "कालाय नम" इति गन्धं ददाति। "कलविकरणाय नम" इति पुष्पं ददाति। "सर्वभूतदमनाय नम" इति धूपं ददाति। "मनोन्मनाय नम" इति दीपं ददाति "भवोद्भवाय नम" इति काले नैवेद्यं ददाति॥ अथाष्टभिर्मन्त्रैरष्टौ पुष्पाणि ददाति। "भवाय देवाय नम"। "शर्वाय देवाय नमः"। "ईशानाय देवाय नमः"। "पशुपतये देवाय नमः"। "रुद्राय देवाय नमः"। उग्राय देवाय नमः। भीमाय देवाय नमः। महते देवाय नमः॥ अथास्याघोरतनूरघोरेभ्य इत्युपतिष्ठते। अथास्याघोरतनूरित्यस्यायमर्थः। अथ पूर्वोक्तपूजानन्तरमस्यरुद्रस्याघोरतनूरघोरादिशरीराण्युपतिष्ठते। केन?। अघोरेभ्य

इत्याद्यनुवाका अग्रे दर्शयिष्यमाणा अपि सौकर्यार्थमत्र लिख्यन्ते। "अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः सर्वतश्शर्वसर्वेभ्यो ? नमस्ते ? अस्तु रूद्ररूपेभ्यः। तत्पुरुषायविद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माऽधिपतिः ब्रह्मणेधिपतिः ब्रह्मा शिवो मे अस्तु सदाशिवों ॥" अथास्याघोरतनूरघोरेभ्य इत्युपतिष्ठत इत्युक्तम्। तदनन्तरकृत्यमाह। अथैतस्य हिरण्येन मूर्ध्नि कलशेन सन्ततधारां निषिञ्चेन्मधुना सर्पिषा पयसा चेक्षुरसेन नालिकेरेण वाऽऽम्ररसेन वा॥ तदलाभे उदकेन वा॥ 'नमस्तेरुद्र मन्यव' इत्येकादशानामनुवाकानाम् अन्ते अग्नाविष्णूसजोषसेत्यनुवाकान् एकैकं जपेत्। सर्वेषां पारे पुनराराधयेत्। उत्तमाराधनेन तदेतद्विधानं प्रोक्तम्। सन्ततधारामिति सन्ततधारापदं सहस्रकलशस्याप्युपलक्षणम्। एतदेव घटीस्नानमित्युच्यते। अतः स्नानविधावपि पूर्वोक्त पञ्चाङ्गन्यासादि कार्यम्। सर्वेषां पार इत्यादि। सर्वेषामभिलक्षितनमकावृत्तिविशेषाणां पारे समाप्तौ। उत्तमाराधनेन पुनराराधयेत्। अभिषेकानन्तरं पूर्ववदेव पुनः पूजयेदित्यर्थः॥ पुनराराधये दुत्तमाराधनमिति पाठादुत्तमाराधनमभिषेकानन्तरपूजां पुनः पश्चात् ? आराधयेत् कुर्वीतेत्यर्थः॥ पुनः शब्दः प्रथमपूजापेक्षया, नत्वभिषेकान्ते द्विः पूजापेक्षया तदेतद्विधानं प्रोक्तमिति। आदावेव पूजाविधानं प्रोक्तमित्यर्थः। अथवा तदेतद्विधानमभिषेकादिषु प्रोक्तमित्युपसंहारः। उत्तमाराधनं तदेतत्प्रोक्तमित्युक्तम्। अधुना व्याधिविमोकार्थेऽभिषेककर्मणि विशेषं दर्शयन्नधिकारभेदात् भिन्नानि फलानि दर्शयति। तेनाभिषिक्तेनोदकेनाक्षीभ्यामित्यनुवाकेनाब् लिङ्गाभि श्चापदात्संसृज्य पापक्षयार्थी व्याधिविमोचनार्थी श्रीकामः शान्तिकामः पुष्टिकामस्तुष्टिकामो मोक्षार्थी च कुर्यात्। एवं कुर्वन्सिद्धिमवाप्नोति। आचार्याय दक्षिणां ददाति। दश गाः सवत्साः सुवर्णभूषिताः वृषभैकादशाः, तदलाभे एकां गां दद्यात्, इत्याह भगवान् बौधायनः। अक्षीभ्यामित्यनुवाको रोगप्रतिमादानविधेरन्ते प्रदर्शितः। आपोहिष्ठेत्याद्य श्चाब्लिङ्गा ऋचश्च आश्वलायनघोषशान्तेः प्राग्दर्शिताः। इति रुद्राभिषेकविधिः॥

अथाङ्गमन्त्राणामृष्यादि । अथ नमकाङ्गन्यासमन्त्राणामृषिदेवताछन्दांसि । तत्रार्षम् । याते रुद्र, नमः सुत्याय, नमो वः किरिकेभ्यो, ऽसुन्वन्तमयजमानं, मनो ज्योति, र्यमाय स्वाहेत्येषामग्निः । अस्मिन् महत्यर्णवे । सहस्राणि सहस्रशो । नीलग्रीवा इति द्वयोः नमो गणेभ्य इति, एषां मन्त्राणां ऋषिः दुर्वासाः । हंसः शुचिषत्त्वं नो अग्न, इत्यनयोर्वामदेवः । त्र्यम्बकं यजामहे, आनो नियुद्भिरित्यनयोर्वसिष्ठो। मानस्तोके नमस्ते अस्त्वायुधाय, याते हेतिर्नमोबिल्मिने, नमो अस्तु नीलग्रीवाये त्येषां भगवान्, अवतत्य धनुः, प्रमुञ्च धन्वनः, इत्यनयोर्नारदः, ये तीर्थानि, ये भूतानां, ये पथां य एतावन्तेश्चेत्येषां देवलः। सद्योजातादि पञ्चानुवाकानामग्निः, तामग्निवर्णां पृतनाजितमिति द्वयोश्च सांहितीर्देवता उपनिषदः । नमोहिरण्यबाहवइत्यस्य मण्डूकः, हिरण्यगर्भो यः प्राणत इत्यनयोर्हिरण्यगर्भः। मीढुष्टम शिवतमेत्यस्या वैराजः। जातवेदस इत्यस्याः काश्यपः । अग्ने त्वं पारयाग्ने नयेत्यनयोरगस्त्यः । विश्वानिनइत्यस्या वसुश्रुतः, मानो महान्तमित्यस्या देवराट् ।एष ते रुद्र भागः सुगन्नः पन्थामित्यनयो रुद्रयस्सम्भूतइत्यनुवाकस्य ब्रह्म जज्ञानं या ते अग्न इत्यनयो श्चविश्वे देवाः, अध्यवोचदित्यस्याः कण्वः, त्रातारमिन्द्रमुर्गः। पश्वासयेत्यनयोर्गौतमः। तत्वायामीत्यस्याः शुनः शेफः। वयं सोमेत्यस्या बन्धुः सुबन्धुः श्रुतबन्धु श्च। तमीशानमित्यस्य राहुगणः। अस्मे रुद्रेत्यस्याः प्रगाथः। स्योना पृथिवी मही द्यौः पृथिवी च न इत्यनयोर्मेधातिथिः । अबोध्यग्निरित्यस्या बुध गविष्ठिरो, मूर्द्धानमित्यस्या विश्वरूपो, मर्माणि त इत्यस्याः वायुः । जातवेदा इत्यस्याः स्वयम्भूः ब्रह्मा, यज्जाग्रत इति सूक्तस्य, शिवसङ्कल्पस्य, सहस्रशीर्षेत्यष्टादशर्चस्य, सूक्तस्य, प्रजापतिः । षोडशर्चस्य चेत्यस्य नारायणः । आशुःशिशान इत्यनुवाकस्याप्रतिरथः । त्वमग्ने रुद्र इत्यनुवाकस्य हव्यवाहः । इत्यार्षम् । अथ दैवतम् । हंसः शुचिषदित्यस्याः सूर्यः, मानस्तोके नमस्ते, अस्त्वायुधाय, या ते हेति, रित्यस्य भगवान् हिरण्यगर्भः।यःप्राणत इति प्रजापतिः। जातवेदसे, तामग्निवर्णां, मग्ने त्वं पारय विश्वानि पृतनाजित, मिति जातवेदाः।

अग्निः । अध्यवोचन्नमोबिल्मिने, नमो अस्तु नीलग्रीवायेति शम्भुः । त्रातारमित्यस्या आशुः शिशान इत्यस्यानुवाकस्य चेन्द्रः । चतुर्थ्या बृहस्पतिः । त्रयोदश्या बाणाः । त्वन्नो अग्न अबोध्यग्ने नय, या ते अग्न, इत्यग्निः । सुगन्नः पन्थां यमायस्वाहेतियमः । असुन्वन्तमिति निर्ऋतिः । तत्वायमीति वरुणः । आनो नियुद्भिरिति वायुः । वयं सोमेति सोमः । तमीशानमितीशानः ।

अस्मे रुद्राब्रजज्ञानमिति ब्रह्मा । स्योना पृथिवीत्यनन्तः पृथिवी वा, मनो ज्योतिरित्युषः । निमृचो मूर्द्धानं जातवेदा इति वैश्वानरः । मर्माणि त इति वर्मादयो लिङ्गोक्ताः । यज्जाग्रत इति सूक्तस्य मनः । सहस्रशीर्षेति सूक्तस्य जगद्बीजं, पुरुषो नारायणः । अद्भ्यः सम्भूत इत्यनुवाकस्य नारायणः । मही द्यौरिति द्यावापृथिव्यौ । उपश्वासयेतिरथो दुन्दुभयश्च अवशिष्टानां रुद्रः । त्र्यम्बकमिति मृत्युञ्जयरुद्रः । त्वमग्ने रुद्र इत्यनुवाकस्याग्नियात्मको रुद्रः इति दैवतम् ।

अथ छन्दः । हंसः शुचिषदिति तैत्तिरीयकेऽतिजगती । बह्वृचानाम् जगती । मानस्तोके, मानो महान्तं, तमीशानं, त्वमग्ने, रुद्र इति जगत्यः । सद्यो जातमिति बृहती हिरण्यगर्भो जातवेदसे तामग्निवर्णाम् अग्नेत्वं पारय विश्वानि नः पृतनाजितं त्रातारमिन्द्रं त्वन्नः सुगन्नः, असुन्वन्तं तत्वायामि, आनो नियुद्भिः अस्मे रुद्रा मनो ज्योतिरबोधि मूर्द्धानं मर्माणि जातवेदा यज्जाग्रात इति सूक्तम् । सहस्रशीर्षेत्यश्वालायनानामन्त्यैव । आपस्तम्बानामन्त्यास्तिस्रः । अद्भ्यः सम्भूत इति द्वे । आशुः शिशान इति सूक्तमाश्वलायनपाठे त्या ? मपास्या त्या ? ऽऽपस्तम्बपाठे द्वादशां ? द्वे त्यां ? च वर्जयित्वा ब्रह्म जज्ञानमुपश्वासयाग्ने नय इत्येता त्रिष्टुभः । मीढुष्टमेति पञ्चपदा त्रिष्टुप् । जगती वा । ईशानः सर्वविद्यानामित्यनुवाकः वयं सोम स्योना पृथिवी महीद्यौरिति गायत्र्यौ । या ते अग्न इत्यतिशक्वरी अवशिष्टा ऋचोऽनुष्टुभः । याते रुद्राघोरेभ्य इति च स्वराडनुष्टुप् । शिष्टानां यजूंषि । इति छन्दः ॥ इति नमकाङ्गन्यासमन्त्राणांमृषिदैवत छन्दांसि ॥

नमकाङ्गन्यासमन्त्राः प्रदर्श्यन्ते । "या ते रुद्र शिवा तनूरघोरा पापकाशिनी। तया नस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि" ॥ इति शिखायाम् ॥ "अस्मिन्महत्यर्णवेऽन्तरिक्षे भावा अधि तेषाꣳसहस्रयोजनेऽवधन्वानि तन्मसि" ॥ इति शिरसि ॥ "इदं प्रामादिकं" ॥ इति प्रतिभाति ॥ "सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्। तेषाꣳसहस्रयोजनेऽवधन्वानि तन्मसि" ॥ इति शिरसि ? ॥ "सहस्राणि सहस्रशो ये रुद्रा अधि-भूम्याम् तेषां सहस्रयोजनेऽवधन्वानि तन्मसि [”] ॥ इति ललाटे ॥ "हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वर-सदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजाऋतं बृहत्" ॥ इति भ्रुवोर्मध्ये ॥ "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्" ॥ इति नेत्रयोः ॥ "नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय? च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च" ॥ इति कर्णयोः ॥ "मा-नस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषुरीरिषः। वीरोन्मा नो रुद्र भामितोर्वधीर्हविष्मन्तो नमसा विधेम ते" ॥ इति नासिकायाम् ॥ "अवतत्य धनुस्त्वꣳसहस्राक्ष शतेषुधे। निशीर्य शल्यांनामुखा शिवो नः सुमना भव" ॥ इति मुखे ॥ "नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषां सहस्रयो-जनेऽवधन्वानि तन्मसि" ॥ "नीलग्रीवाः क्षितिकण्ठा दिवꣳरुद्रा उप-श्रिताः। तेषां सहस्रयोजनेवधन्वानि तन्मसि [तै. सं. का. ४. प्र. ५. अ. ११.]" ॥ इति द्वाभ्यां कण्ठे ॥ "नमस्ते अस्त्वायुधायानातताय धृष्णवे। उभाभ्यामुतते? नमो बाहुभ्यां तव धन्वने"। इति बाह्वोः [तै. सं. का. ४. प्र. ५ अ. १.]। "या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः तयास्मान् विश्वतस्त्वमयक्ष्मया परि ब्धु ज [”] इत्युपबाह्वोः। उपबाहुः-मणि-बन्धोपरि भागः। "ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि [तै. सं. का. ४. प्र. ५. अ. ११.]" ॥ इति हस्तयोः ॥ "सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नाति भवे भजस्व माम् भवोद्भवाय नमः

[ तै. आ. प्र. ६. अ. ४३. ] " ॥ इत्यङ्गुष्ठयोः ॥ " वाम देवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः [ तै. आ. प्र. ६. अ. ४४. ] " ॥ इति तर्जन्योः ॥ " अघोरेभ्यो थघोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः शर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः [ तै. आ. प्र. ६. अ. ४५. ] " ॥ इति मध्यमयोः ॥ " तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् [ तै. आ. प्र. ६. अ. ४६. ] " ॥ इत्यनामिकयोः ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों ["] ॥ इति कनिष्ठिकयोः ॥ " नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यो नमोविक्षीणकेभ्यो देवानाँ हृदयेभ्यो नमो विचिन्वत्केभ्यो देवानाँ हृदयेभ्यो नम अनिर्हतेभ्यो देवानाँ हृदयेभ्यो नम आमीवत्केभ्यो देवानाँ हृदयेभ्यः [ तै. सं. का. ४. प्र. ५. अ. ९. ] " ॥ इति हृदये ॥ " नमो गणेभ्यो गणपतिभ्य श्च वो नमः [ तै. सं. का. ४. प्र. ५. अ. ४. ] " ॥ इति पृष्ठे ॥ " नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमः [ तै. सं. का. ४. प्र. ५. अ. २. ] " ॥ इति पार्श्वयोः ॥ विज्यंधनुः कपर्दिनो विशल्यो बाणवाँ उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥ इति जठरे। [ तै. सं. का. ४. प्र. ५. अ. १. ] " हिरण्यगर्भः समवर्तताग्रे भूतस्यजातः पतिरेक आसीत्। सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम [ तै. सं. का. ४. प्र. १. अ. ८. ] " ॥ इति नाभौ ॥ मीढुष्टम शिवतम शिवो नःसुमना भव परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं विभ्रदागहि [ तै. सं. का. ४. प्र ५. अ. १०. ] " ॥ इति कट्याम् ॥ " ये भूतानामधिपतयो विशिखासः कपर्दिनस्तेषाँ सहस्रयोजनेऽवधन्वानि तन्मसि [ तै. सं. का. ४. प्र. ५. अ. ११. ] " ॥ इति गुह्ये ॥ " जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। सनः पर्षदतिदुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः [ तै. आ. प्र. ६. अ. १ ] ॥ अग्रे वक्ष्यमाणं पूर्वमन्त्रस्य शिर इत्युच्यते ? ॥ तद्यथा ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः॥ अग्रे ?

त्वं पारयानव्यो अस्मान् स्वस्तिभिरतिदुर्गाणि विश्वा। पूश्च पृथिवी बहुला न उर्वी भवा तोकाय तनयाय शं योः। विश्वानि नो दुर्गहा जातवेदः सिन्धुन्ननावा दुरितातिपर्षि। अग्ने अत्रिवन्मनसा-गृणानोऽस्माकं बोध्यविता तनूनां। पृतनाजितं सहमानं उग्रमग्निं हुवेम परमात्सधस्थात्। स नः पर्षदति दुर्गाणि विश्वा क्षाम देवो अतिदुरितात्यग्निः [तै. आ. प्र. ६. अ. २]" ॥ इत्यपाने ॥ "मानो महान्तमुत मानो अर्भकं मान उक्षन्तमुतमान उक्षितम्। मानो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्ररीरिषः [तै. सं. का. ४. प्र. ५. अ. १०.]" ॥ इत्यूर्वोः ॥ "एष ते रुद्र भागस्तं जुषस्वतेनावसेनपरो मूजवतोतीह्यवततधन्वापिनाकहस्तःकृत्तिवासाः [तै. सं. का. ८. प्र. ८. अ. ६.]" ॥ इति जान्वोः। "संसृष्टजित् सोमपा-बाहुशर्ध्यूर्ध्वधन्वा प्रति हिताभिरस्ता ॥ बृहस्पते परिदीयारथेनर-क्षोहाऽमित्राँ अपबाधमानः ॥ [तै. सं. का. ४. प्र. ६. अ. ४.] " ॥ इति जंघयोः ॥ "विश्वं भूतं भुवनं चित्रंबहुधाजातं जायमानं च यत्। सर्वोह्येष रुद्रस्तस्मै रुद्रायनमो अस्तु ॥ इति पादयोः ॥ " अध्यवोचदधिवक्ता प्रथमो दैव्योभिषक्। अहीँश्च सर्वान् जम्भयन्त्सर्वाश्च यातुधान्यः [तै. सं. का. ४. प्र. ५. अ. १.]" ॥ इति कवचम् ॥ "नमो बिल्मिने च कवचिने च [तै. सं. का. ४. प्र. ५. अ. ६.]" ॥ इत्युपकवचम् ॥ "नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे अथो ये अस्य सत्वानोहं तेभ्यो करं नमः [तै. सं. का. ४. प्र. ५. अ. १.]" ॥ इति तृतीयनेत्रे ॥ "प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियो-र्ज्याम्। याश्च ते हस्त इषवः परा ता भग गवो वप [''] ॥ इत्यस्त्रम् ॥ "य एतावन्तश्च भूयाँसश्च दिशो रुद्रावितस्तिरे-तेषाँसहस्रयोजनेवधन्वानि तन्मसि [तै. सं. का. ४. प्र. ५. अ. ११.]" ॥ इति दिग्बन्धसहित एको न्यासः ॥ अथापरो न्यासः ॥ तत्र "ओं नमो भगवते रुद्राये" ति नमस्कारं न्यस्येदिति श्रूयते ॥ अस्याय-कोर्थः ॥ नमस्कारं–नमस्कारमन्त्रं पूर्वोक्तं पठित्वा नमस्कारं कुर्या-दिति ॥ अथान्योर्थः ॥ नमस्कारं न्यसेत् पूर्वोक्तमेव मन्त्रं वक्ष्यमाण-प्रकारेण नमोन्तं न्यसेदिति ॥ तद्यथा ॥ 'ओं मूर्ध्ने नम' इति मूर्ध्नि ॥ 'नं नासिकायै नम' इति नासिकायाम् ॥ मों ? 'ललाटाय

नम' इति ललाटे ॥ 'ओं भं मुखाय नम' इति मुखे॥ 'ओं गं कण्ठाय नम' इति कण्ठे ॥ 'ओं वं हृदयाय नम' इति हृदये ॥ 'ओं तें दक्षिणहस्ताय नम' इति दक्षिणहस्ते। 'ओं रुं वामहस्ताय नम' इति वामहस्ते ॥ 'ओं द्रां नाभिदेशाय नम' इति नाभिदेशे ॥ 'ओं यं पद्भ्यां नम' इति पादयोर्न्यासः ॥ अथापरः प्रकारः ॥ ओं नं भं गं वं तें रुं द्रां यं इत्येभिरक्षरैः क्रमेण मूर्धादिपादान्तप्रदेशान् स्पृशेदिति ॥ अत्र चायं क्रमः॥ पूर्वोक्तदिग्बन्धसहितं न्यासं विधाय तत ओं नमो भगवते रुद्रायेत्युच्चार्य प्रणम्य ततश्च ओं मूर्ध्ने नम इत्यादि न्यासं वा ओमित्यादि न्यासं कुर्यादिति॥ अयं च द्वितीयो न्यासः ॥ अथान्यो न्यासः॥ "सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमोनमः भवे भवे नाति भवे भज स्वमां भवोद्भवाय नमः [तै. आ. प्र. ६. अ. ४३]" ॥ इति पादयोः॥ "वामदेवाय नमो ज्येष्ठाय नम श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कालविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्व भूत दमनाय नमो मनोन्मनाय नमः [" ] ॥ इत्यूरुमध्ये ॥ "अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः शर्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ["]. ॥ इति हृदये॥ "तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात् ["] ॥ इति मुखे॥ "ईशानः सर्वद्याना मीश्वरः सर्वभूतानाम् ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों ["] हंस हंस" ॥ इति मूर्ध्नि॥ इति तृतीयो न्यासः॥ अथ सम्पुटीं कुर्वीत॥ मुद्रिताञ्जलिप्रदर्शनं सम्पुटीकरणम्॥ तच्च क्रमेणेन्द्रादिदिक्षु वक्ष्यमाणमन्त्रैः कुर्यात्॥ "त्रातारमिन्द्रमवितारमिन्द्रा॰हवे हवे॰सुहव॰शूरमिन्द्रम्। हुवे नु शक्रं पुरुहूतमिन्द्र॰स्वस्तिनो मघवा धात्विन्द्रः [तै. सं. का. १. प्र. ६. अ. १२.]॥ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् [तै. सं. का. २. प्र. ५. अ. १२.]॥ सुगन्नः पन्थामभयं कृणोतु यस्मिन् नक्षत्रे यम एति राजा। यस्मिन्नेनमभ्यषिञ्चत देवाः। तदस्य चित्रं हविषा यजाम [तै. ब्रा. अ. ३. प्र. १. अ. २.] ॥ असुन्वन्तमयजमान मिच्छस्तेनस्येत्यांतस्करस्यान्वेषि। अन्यमस्मदिच्छसात इत्या नमो

देवि निर्ऋते तुभ्यमस्तु [तै. सं. का. ४. प्र. २. अ. ५.] ॥ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश॑ंसमानः आयु प्रमोषीः [तै. सं. का. २. प्र. १. अ. ११.] ॥ आनो नियुद्भिः शतिनीभिरध्वरं। सहस्राणीभिरुपयाहि यज्ञम्। वायो अस्मिन् हविषि मादयस्व। यूयं पात स्वस्तिभिः सदानः [तै. ब्रा. अ. २. प्र. ८. अ. १.] ॥ वयं सोम व्रते तव। मनस्तनूषु विभ्रतः। प्रजावन्तो अशीमहि ॥ तमीशानं जगतस्तस्थुषस्पतिं। धियं जिन्व॑मवसे हूमहे वयम्। पूषानो यथा वेदसाम सदृधे रक्षिता पायुरदब्धस्स्वस्तये ॥ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः यः शंसते स्तुवते धायि यज्ञ इन्द्रज्येष्ठा अस्मां अवन्तु देवाः ॥ स्योना पृथिवी थवा नृक्षरा निवेशनी यच्छानः शर्मसप्रथाः" ॥ इति सम्पुटीकरणम् ॥ अथेन्द्रादि नमस्कारः ॥ अत्रापि पूर्वोक्ताएव मन्त्रा ग्राह्याः ॥ सम्पुटीकरणे नमस्कारे चेन्द्रप्रकाशग्राह्या इति नियमो पूर्वोक्ता एव मन्त्रा ग्राह्या इति नियमः ॥ अथ गुह्याद्यभिमन्त्रणम् ॥ अयमेव चतुर्थो न्यासः ॥ "मनोज्योतिर्जुषातामाज्यं विच्छिन्नं यज्ञ॑ंसमिमं दधातु। या इष्टा उषसो निम्रुचश्चताः सन्दधामि हविषा घृतेन [तै. सं. का. १. प्र. ५. अ. १०.]" ॥ इति गुह्ये ॥ "अबोध्यग्निः समिधा जनानां प्रतिधेनुमिवायतीमुषासम् यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ [तै. सं. का. ४. प्र. ४. अ. ४.]" ॥ इत्युदरे ॥ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् कविं सम्राजमतिथिं जनाना मासन्नापात्रं जनयन्त देवाः [तै. सं. का. १. प्र. ४. अ. १३.]" ॥ इति हृदये ॥ "मर्माणि ते वर्मभिश्छादयामि, सोमस्त्वाराजाऽमृतेनाभिवस्तां। उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वां अनुमदन्तु देवाः ॥ [तै. सं. का. ४. प्र. ६. अ. ४.] इयमृक्च पुस्तके अस्ति ॥ "मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजा मृतेनानुवस्ताम् उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु" ॥ इति मुखे ॥ "जातवेदा यदि वा पावकोसि। वैश्वानरोयदिवा वैद्युतोसि। शं प्रजाभ्यो यजमानाय लोक मूर्ज्जं ? पुष्टिं दददभ्यावृत्स्व [तै. ब्रा. अ. ३. प्र. १०. अ. ५.]" ॥ इति शिरसि ॥ इति चतुर्थो न्यासः ॥

अयमेव गुह्याद्यभिमन्त्रणमितिचात्मरक्षा चेति व्यपदिश्यते ॥ अथ शिवसङ्कल्पादिन्यासः ॥

तत्र शिवसङ्कल्पसूक्तम् ॥ "यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैति। दूरं गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ यत्प्रज्ञानमुतचेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु। यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्। येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ सुषारथिरश्वानिवयन्मनुष्या न्नेनीयतेऽभीशुभि र्वाजिन इव। हृत्प्रतिष्ठम् यादजिरं यविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु॥ इत्येतत्सूक्तं पठित्वा 'हृदयाय नमः' इति हृदये, सहस्रशीर्षेति पठित्वा 'शिरसे स्वाहे' ति शिरसि॥ एतच्च गणहोमे प्रदर्शितम् ॥ तच्चाष्टादशार्चम् ॥ षोडशार्चन्तु पुरस्तात् पुरुषसूक्ते प्रदर्शितम् ॥ अथोत्तरनारायणम् ॥ " अद्भ्यः सम्भूताः पृथिव्यै रसाच्च। विश्वकर्मणः समवर्तताधि तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे [ तै. आ म. ३ अ. १३ ] वेदाहमं तं पुरुषं महान्त मादित्य वर्णं तमसः परस्तात्। तमेवं विद्वानमृते इह भवति। नान्यः पन्था विद्यतेऽयनाय ["]॥ प्रजापतिश्चरति गर्भे अन्तः अजायमानो बहु धा विजायते। तस्य धीराः परिजानन्ति योनिं। मरीचीनां पदमिच्छन्ति वेधसः ["] ॥ यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः न मोरू चाय ब्रह्मये ["]। रुचं ब्राह्मं जनयन्ताः देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा असन्वशे ["]॥ ह्रीश्चते लक्ष्मीश्च पन्त्यौ। अहोरात्रे पर्श्वे। नक्षत्राणि रूपम् अश्विनौ व्यात्तं। इष्टं मनिषाण। अमुं मनिषाण। सर्वं न निषाण ["] ॥ इत्यनेन शिखायै वषडिति। शिखायाम् ॥ अथ। अप्रतिरथम् ॥ ऋग्वेदे, मं. १०. सू. १०३, "आशुः शिशानो वृषभो न भीमो

घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः । सङ्क्रन्दनेना निमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषु-हस्तेन वृष्णा । स इषुहस्तैः सनिषङ्गिभिः वशीसंस्रष्टा सयुध इन्द्रो गणेन । संसृष्टजित्सोमपा बाहुशर्धी उग्रधन्वा प्रतिहिता-भिरस्ता । बृहस्पते परिदीया रथेन रक्षोहाऽमित्राँ अपबाधमानः । प्रभञ्जत्सेनाः प्रमृणो युधाजयन्न स्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा-तिष्ठ गोवित् । गोत्रभिदं गोविदं वज्रबाहुं जयन्त मज्म प्रमृणातमोजसा । इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनुसंरभध्वम् ॥ अभि गोत्राणि सहसा गाहमानो दयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाळयुध्योस्माकं सेना अवतु-प्रयुत्सु । इन्द्र आसां नेता बृहस्पति दक्षिणा यज्ञः पुर एतु सोमः। देव सेनानामभि भञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् । इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् । अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु। अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवताहवेषु । उद्धर्षय मघवन्नायुधान्युत्सत्वानां मामकानां मनांसि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तुघोषाः प्रेता जयता नर इन्द्रो वः शर्म यच्छतु । उग्रा वः सन्तु बाहवो नाधृष्या यथासथ । अवसृष्टा परापराशरव्ये ब्रह्मशंसिते गच्छामित्रान् प्रपद्यस्व मामीषां कञ्चनो च्छिषः। मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजामृतेनानुवस्ताम्। उरोः वरीयो वरुणस्ते कृपणोंरुजयन्ते त्वानु देवा मदन्तु । यत्र बाणाः सम्पतन्ति कुमारवि-शिखा इव । इन्द्रो न स्तत्र वृत्रहा विश्वाहा शर्म यच्छतु " ॥ इत्य-प्रतिरथेन कवचाय हुम् ॥ इति कवचम् ॥ अथ शतरुद्रीयम् ॥ "त्वमग्ने रुद्रो असुरो महोदिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे। त्वं वातै रुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासिनुत्मना । देवा देवेषु श्रयध्वम् ॥ प्रथमा-

द्वितीयेषु अयध्वम् । द्वितीयास्तृतीयेषु अयध्वम् ॥ तृतीयास्चतुर्थेषु अयध्वम् ॥ चतुर्थाः पञ्चमेषु अयध्वम् ॥ पञ्चमाषषष्ठेषु अयध्वम् ॥ षष्ठाः सप्तमेषु अयध्वम् ॥ सप्तमा अष्टमेषु अयध्वम् ॥ अष्टमानवमेषु अयध्वम् ॥ नवमादशमेषु अयध्वम् ॥ दशमा एकादशेषु अयध्वम् ॥ एकादशद्वादशेषु अयध्वम् ॥ द्वादशास्त्रयोदशेषु अयध्वम् ॥ त्रयोदशाश्चतुर्दशेषु अयध्वम् ॥ चतुर्दशाः पञ्चदशेषु अयध्वम् ॥ पञ्चदशाः षोडशेषु अयध्वम् ॥ षोडशाः सप्तदशेषु अध्वम् ॥ सप्तदशा अष्टादशेषु अयध्वम् ॥ अष्टादशा एकान्नविंशेषु अयध्वम् ॥ एकान्नविंशा विंशेषु अयध्वम् ॥ विंशा एकविंशेषु अयध्वम् ॥ एकविंशा द्वाविंशेषु अयध्वम् ॥ द्वाविंशास्त्रयोविंशेषु अयध्वम् ॥ त्रयोविंशाश्चतुर्विंशेषु अयध्वम् ॥ चतुर्विंशा पञ्चविंशेषु अयध्वम् ॥ पञ्चविंशाः षड्विंशेषु अयध्वम् ॥ षड्विंशाः सप्तविंशेषु अयध्वम् ॥ सप्तविंशा अष्टाविंशेषु अयध्वम् ॥ अष्टाविंशा एकान्नत्रिंशेषु अयध्वम् ॥ एकान्नत्रिंशास्त्रिंशेषु अयध्वम् ॥ त्रिंश एकत्रिंशेषु अयध्वम् ॥ एकत्रिंशाद्वात्रिंशेषु अयध्वम् ॥ द्वात्रिंशास्त्रयस्त्रिंशेषु अयध्वम् ॥ देवास्त्रिरेकादशास्त्रियस्त्रिंशाः । उत्तरे भवत । उत्तरवर्त्मान उत्तरसत्वानः ॥ यत्कामइदं जुहोमि । तन्मे समृध्यतां । वयं स्याम पतयो रयीणाम् ॥ भूर्भुवः स्वः स्वाहा [ तै. ब्रा. अ. ३ प्र. ११ अ. २ ] ॥ इत्यनेनाम्नाय फाडित्यस्त्रम् ॥ इति शिवसङ्कल्पादि न्यासः ॥ ( घ ) पुस्तके अथ पंचपंचमोन्यासः अथ वक्ष्यमाणैर्मन्त्रैरष्टाङ्गप्रणामः ॥ स च मन्त्रपाठमात्रेणैव निर्वर्त्यः ॥ तत्र मन्त्राः ॥ " हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम [ तै. सं. का. ४ प्र. १ अ. ८ ] ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ["] ॥ ब्रह्म जज्ञानं प्रथमं पुरस्ता द्विसीमतः सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः [ तै. सं. का. ४. प्र. २. अ. ८. ] मही द्यौः पृथिवी चन इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः [ तै. सं. का. ४ प्र. २ अ. ७ ] । उपश्वासय पृथिवीमुत द्यां पुरुत्रातो मनुतां विष्ठितं जगत् । सदुन्दुभे

सजू रिन्द्रेण देवैर्दूराद्दवीय्यो अपसेध शत्रून् [तै. स. का. ४ प्र. ६ अ. ६] अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम [तै. स. का. १ प्र. ४ अ. ४३] ॥ याते अग्ने यज्ञिया तनू स्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञमासिदस्वांयोनिं। जातवेदो भुव आजायमानः सक्षय एहि [तै. ब्रा. अ. २. प्र. ५ अ. ८] ॥ अथावस्वाग्नये दाशेम परीलाभिर्घृतवद्भिश्च हव्यैः। तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्निपाहि ॥ इत्यङ्गप्रणामः ॥ अथाभिषेकषष्ठो न्यासः ॥ स चाभिषेकविधान एव प्राक् प्रपञ्चितः। एवं न्यासविधिं कृत्वा ततो यजनं जपः पूजा होमाश्च ॥ इति नमकाङ्गन्यासमन्त्राः १। अथ नमकस्यार्षाद्यभिधीयते। तत्र पूर्वममुकदेशेऽमुककालेऽमुककामो नमकजपं रुद्रैकादशिनीजपं महारुद्रजपमतिरुद्रजपं वा करिष्ये तथा नमकादिष्वन्यतमेन होममभिषेकं वा करिष्य इति सङ्कल्पयेत्। परप्रेषितश्चेत् करिष्यामीत्यभिलपेत्। ततश्चाङ्गन्यासानन्तरमार्षादि जानीयात्। तद्यथा। नमकानुवाकानामृषिदैवतछन्दांस्यनुक्रमिष्यामो नमस्ते रुद्र। या ते रुद्र। इत्यनयोः कश्यपः। यात इषुरित्यस्या। आत्रेयः। यामिषुमिति द्वयोर्गौतमो गोधूम्रो वा। अध्यवोचदित्यस्याः कण्वः। असौ यस्ताम्र इत्यस्या द्वयोः कशो मरुत्वान्। नमो अस्तु नीलग्रीवाय याते हेतिरिति तिस्र स्तृतीय पञ्चमषष्ठाष्टमानुवाका नवमानुवाके॥ नमोवः किरिकेभ्य इति यावन्मानस्तोके परिणो रुद्रस्येत्येतेषां भगवान् तृतीयानुवाकस्य देवो वा नवमानुवाकेऽवशिष्टस्याग्निः। प्रमुञ्च धन्वन इति तिस्रः। सहस्राणि सहस्रधेत्यासां नारदः। द्वितीयानुवाकस्य मण्डूकः। चतुर्थानुवाकस्य सहस्राणि सहस्रश इति चतसृणां च दुर्वासाः। सप्तमानुवाकस्य रोमशः ॥ द्रापे अन्धसस्पते विकिरिदेत्यनयोः पुलहो या ते रुद्र शिवेत्यस्या स्कंदः, इमा रुद्रायेति द्वयोर्माण्डव्यः। मानो महान्तमित्यस्य दैवराडाराक्त इत्यस्यात्रिः, स्तुहि श्रुतमित्यस्य वैय्याघ्रः। मीढुष्टमेत्यस्य वैराजः ये वृक्षेष्वित्यारभ्यासमाप्तेर्देवलः इति ऋषयः। अथ देवता ॥ असौ यस्ताम्र इति द्वयोरादित्यात्मा रुद्रः। या ते रुद्रेत्यस्या स्कन्दारूपी रुद्रः। मानो महान्तमित्यस्या

नन्दीश्वरात्मको रुद्रः। या त इषु रध्यवोचन्नमो अस्तु नीलग्रीवा-येत्यासां, चतुर्थपञ्चमषष्ठानुवाकानां, आरात्ते मीढुष्टमेति द्वयोश्च, शम्भुः। या ते हेतिरिति तिस्रः श्चाष्टमानुवाके नवमानुवाके नमो वः किरिकेभ्य इत्यतः प्राक् मानस्तोके परिणो इत्येषां भगवान् वसिष्ठः। अवशिष्टानां रुद्र इति देवताः। अथ छन्दांसि॥ असौ यस्ताम्रो द्रापे अन्धसस्पत इत्यनयो रास्तारपङ्क्तिर्वा राद्या पञ्च-पदापङ्क्तिर्वा असौयोऽवसर्पतीति षट्पदा जगती। इमा रुद्रायेति चतस्रो जगत्यः (घ) पुस्तके आरात्ते इतितिस्रः त्रिष्टुभः मीढुष्टमेति पंचपदा त्रिष्टुप् महाबृहती। याश्शिष्टाऋचः अनुष्टभः। याते रुद्र इति स्वाराडनुष्टुप्। यामिति निचृदनुष्टुप् अध्यवचोदित्यनुष्टुप् त्रिंबृद्धा-शिष्टानि यजूंषि। तत्रापरो विशेषो द्वितीयाद्यष्टानुवाकेषु। अत्र प्रथमाद्वितीयातृतीयेषु क्रमेण महागायत्री बृहत्युष्णिगिति ततो द्वयो महाविराडथ महापङ्क्तिरंत्ययोर्महानुष्टुप्॥ इति छन्दांसि॥ इति विशेषतो नमकस्यार्षादि।

अथ सामान्यतः सकलस्यापि नमकसमुदायस्याग्निकाण्डान्तः पातित्वादग्निर्ऋषिः रुद्रोदेवता। महाविराट् छन्दः। अथ भगवानृषिः। शम्भुर्देवता। छन्दो महाविराडिति। अथ चमकस्य चमकानुवाका-नामग्निः काण्डर्ऋषिः। आद्या गायत्री अग्नाविष्णवी शिष्टं यजुः। वाजादयोऽन्नादिविशेषा देवताः। जपे विनियोगः। होमे क्रियमाणे होमे विनियोगः इति वाच्यम्।

अथ तैत्तिरीयशाखानुसारेण नमकानुवाकाः प्रदर्श्यन्ते। तत्र प्रथ-मोनुवाकः॥ नमो मृत्युञ्जयाय। इडादेवहू मनुर्यज्ञनी बृहस्पतिरुक्था मदानिशंसिषद्विश्वेदेवाः सूक्तवाचः पृथिवि मातर्मामाहिंसीः मधुमं-निष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोनुमदन्तु॥ ओं शान्तिः शान्तिः शान्तिः"॥ इडादेवहूरिति पठनानन्तरं सामूलं ? रुद्रजपः अयं (घ) पुस्तकेन दृश्यते॥ "नमस्ते रुद्रमन्यव उतोत इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुतते

नमः [ तै. सं. का. ४ प्र. ५ ] ॥ यात इषुः शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या यातवतयानो रुद्र मृडय। या ते रुद्र शिवातनू रघोरा पापकाशिनी। तया नस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि यामिषुं गिरिशन्तहस्ते विभर्ष्यस्तवे। शिवां गिरित्रतां कुरु मा हिꣳसीः पुरुषं जगत्। शिवेन वचसा त्वा गिरिशाछावदामसि। यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत्। अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहींश्च सर्वान् जंभयन् त्सर्वाश्च यातुधान्यः। असौ यस्ताम्रो अरुण उत बभ्रूः सुमङ्गलः। ये चमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशो वैषाꣳहेड ईमहे। असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं विश्वाभूतानि सदृष्टो मृडयाति नः। नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः। प्रमुञ्च धन्वनस्त्वमुभयो-रान्नीयोर्ज्याम्। या श्चते हस्त इषवः परा ता भगवो वप। अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव। विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳउत। अने-शन्नस्येषव आभुरस्य निषङ्गथिः। या ते हेति र्मीढुष्टमहस्ते बभूव ते धनुः। तयास्मान्विस्वतस्त्वमयक्ष्मया परिꣳभुज। नमस्ते अस्त्वा-युधायानातताय धृष्णवे। उभाभ्यामुतते नमो बाहुभ्यां तव धन्वने। परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥ नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय सर्वेश्वराय सदाशिवाय श्रीमहादेवाय नमः। हस्ते दिक्ष्विषव उभाभ्यां द्वाविंशतिश्च" ॥ इति प्रथमानुवाकः॥ "नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो, नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो, नमो बभ्लुशाय विव्याधिऽनेऽन्नानां पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमो भवस्य हेत्यै जगतां पतये नमो, नमो रुद्रायाऽऽ-तताविने क्षेत्राणां पतये नमो, नमस्सूतायाऽहन्त्याय वनानां पतये नमो नमः। इतः परं "नम इन्द्र इत्यारभ्य नातूनतायिनां पतये नमो नमो इत्यंतम्" घ पुस्तके न दृश्यते तैत्तरीयेऽपि नास्ति

नम इन्द्र जटाकलापिनां पतये नमो नमो वृषाललतायिनां पतये नमो नमो ललाटवृकायिनां पतये नमो नमो लला ललतामिनां पतये नमो नमो ननाननतायिनां पतये नमो नमो नातनतायिनां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो, नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो, नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो ॥

अयं पाठक्रमोऽत्रयोज्य:

"नम उच्चै र्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमो नम: कृत्स्नवीताय धावते सत्वनां पतये नम: ॥ इति द्वितीयोऽनुवाक: ॥ नमस्सहमानायनिव्याधिन आव्याधिनीनां पतये नमो नमःककुभायनिषङ्गिणेस्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमो नमस्सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमोऽसिमद्भ्यो नक्तं चरद्भ्य: प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वाविभ्यश्चवो नमो नम आतन्वानेभ्य: प्रतिदधानेभ्यश्चवो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्चवो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्चवो नमो नम आसीनेभ्य: शयानेभ्यश्चवो नमो नम: स्वपद्भ्यो जाग्रद्भ्यश्चवो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्चवो नमो नम: सभाभ्य: सभापतिभ्यश्चवो नमो नमो अश्वेभ्योश्वपतिभ्यश्चवो नम: ॥ इति तृतीयानुवाक: ॥

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्चवो नमो नम उगणाभ्यस्तृंहतीभ्यश्चवो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्चवो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्चवो नमो, नमो गणेभ्यो गणपतिभ्यश्चवो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्चवो नमो, नमो महद्भ्य: क्षुल्लकेभ्यश्चवो नमो नमो रथिभ्योऽरथेभ्यश्चवो नमो, नमो रथेभ्यो रथपतिभ्यश्चवो नमो नम: सेनाभ्य: सेनानिभ्यश्चवो नमो नम: क्षत्तृभ्यस्संग्रहीतृभ्यश्चवो नमो नमस्तक्षभ्यो रथकारेभ्यश्चवो नमो नम: कुलालेभ्य: कर्मारेभ्यश्चवो नमो नम: पुञ्जिष्टेभ्यो निषादेभ्यश्चवो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्चवो नमो नमो मृगयुभ्य: श्वनिभ्यश्चवो

नमो नमः श्वभ्यः श्वपतिभ्यश्चवो नमः" इति चतुर्थोऽनुवाकः ॥ "ओं, नमो भवाय रुद्राय च ॥ नमः शर्वाय च पशुपतये च ॥ नमो नीलग्रीवाय च शितिकण्ठाय च ॥ नमः कपर्दिने व्युप्तकेशाय च ॥ नमः सहस्राक्षाय च शतधन्वने च ॥ नमो गिरिशाय च शिपिविष्टाय च ॥ नमो मीढुष्टमाय चेषुमते च ॥ नमो ह्रस्वाय च वामनाय च ॥ नमो बृहते च वर्षीयसे च ॥ नमो वृद्धाय च संवृध्वने च । नमो अग्रियाय च प्रथमाय च ॥ नम आशवे चाजिराय च ॥ नमः शीघ्रियाय च शीभ्याय च ॥ नम ऊर्म्याय चावस्वन्याय च ॥ नम स्रोतस्याय च द्वीप्याय च ॥" इति पञ्चमोनुवाकः ॥ "ओं, नमो ज्येष्ठाय च कनिष्ठाय च ॥ नमः पूर्वजाय चापरजाय च ॥ नमो मध्यमाय चापगल्भाय च ॥ नमो जघन्याय च बुध्नियाय च ॥ नमः सोभ्याय च प्रतिसर्याय च ॥ नमो याम्याय च क्षेम्याय च ॥ नम उर्वर्याय च खल्या च ॥ नमः श्लोक्याय चाऽवसान्याय च ॥ नमो वन्याय च कक्ष्याय च ॥ नमः श्रवाय च प्रतिश्रवाय च ॥ नम आशुषेणाय चाशुरथाय च ॥ नमः शूराय चावभिन्दते च ॥ नमो वर्मिणे च वरूथिने च ॥ नमो बिल्मिने च कवचिने च ॥ नमः श्रुताय च श्रुतसेनाय च" ॥ इति षष्ठोनुवाकः ॥ "नमो दुन्दुभ्याय चाहनन्याय च ॥ नमो धृष्णवे च प्रमृशाय च ॥ नमो दूताय च प्रहिताय च ॥ नमो निषङ्गिणे चेषुधिमते च ॥ नमस्तीक्ष्णेषवे चायुधिने च ॥ नमः स्वायुधाय च सुधन्वने च ॥ नमः स्रुत्याय च पथ्याय च ॥ नमः काट्याय च नीप्याय च ॥ नमः सूद्याय च सरस्याय च ॥ नमो नाद्याय च वैशन्ताय च ॥ नमः कूप्याय चाऽवट्या च ॥ नमो वर्ष्याय चावर्ष्याय च ॥ नमो मेघ्याय च विद्युत्याय च ॥ नम इध्रियाय चातप्याय च ॥ नमो वात्याय च रेष्मियाय च ॥ नमो वास्तव्याय च वास्तुपाय च" ॥ इति सप्तमोनुवाकः ॥ "नमः सोमाय च रुद्राय च ॥ नमस्ताम्राय चारुणाय च ॥ नमः शंगाय च पशुपतये च ॥ नम उग्राय च भीमाय च ॥ नमो अग्रेवधाय च दूरे वधाय च ॥ नमो हन्त्रे च हनीयसे च ॥ नमो वृक्षेभ्यो हरिकेशेभ्यो ॥ नमस्ताराय ॥ नमः शम्भवे च मयोभवे च ॥ नमः शङ्कराय च मयस्कराय च ॥ नमः शिवाय च शिवतरायच ॥ नमस्तीर्थ्याय च कूल्याय च ॥

नमः पार्याय चावार्याय च ॥ नमः प्रतरणाय चोत्तरणाय च ॥ नम आतार्याय चा लाद्याय च। नमः शष्प्याय च फेन्याय च ॥ नमः सिकत्याय प्रवाह्याय च "। इत्यष्टमोनुवाकः। "नम इरिण्याय च प्रपथ्याय च। नमः किंशिलाय च क्षयणाय च। नमः कपर्दिने च पुलस्तये च। नमो गोष्ठ्याय च गृह्याय च। नमस्तल्प्या च गेह्याय च। नमः कट्याय च गह्वरेष्ठाय च। नमो हृद्य्याय च निवेष्प्याय च ॥ नमः पांसव्याय च रजस्याय च। * (नमो नन्दिकाय च कूष्माण्डाय च। नमः पराय च परन्तपाय च। नमः परमात्मनात्मनाय च धूमाय च। नमो हाराय ताराय। नमो वामनाय च हरिण्याय च। नमः शिवाय च हरिकेशाय च)। नमः शुष्क्याय च हरित्याय च। नमो लोप्याय चोलप्याय च। नम ऊर्व्याय च सूर्म्याय च। नमः पर्ण्याय च पर्णशद्याय च। नमोऽपगुरमाणाय चाभिघ्नते च। नम आखिदते च प्रतिखिदते च। नमो वः किरिकेभ्यो देवानां हृदयेभ्यः। नमो विक्षीणकेभ्यो दे०। नमो विचिन्वत्केभ्यो दे०। नमा अनिर्हतेभ्यो दे०। नम आमीवत्केभ्यो दे० "। इति नवमोनुवाकः। "द्रापे अन्धसस्पते दरिद्रन्नीललोहित। एषां पुरुषाणामेषां पशूनां माभेर्माऽरोमो एषां किञ्चनऽऽममत् ॥ या ते रुद्र शिवा तनूः शिव विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे। इमांरुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम्। यथा नः शमस द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्। मृडानो रुद्रोतनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छं चयोश्वमनुरायजेपिता तदश्याम तवरुद्र प्रणीतौ ॥ मानो महान्तमुतमानो अर्भकं मान उक्षन्तमुतमान उक्षितम् मानोवधीः पितरं मोतमातरं प्रियामान स्तनुवोरुद्ररीरिषः ॥ मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः वीरान्मानोरुद्रभामितो बधीर्हविष्मन्तो नमसा विधेम ते। आरात्ते गोघ्नउत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षा चनो अधि च देव ब्रूह्यधा च नः शर्मयच्छद्विबर्हाः ॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं

---

*इमाः ऋचः घ पुस्तकेन तैत्तरीय पाठेऽपिन

न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्रस्तवानो अन्यन्ते अस्मान्नि-
वपन्तु सेनाः । परिणो रुद्रस्य हेति र्वृणक्तु परित्वेषस्य दुर्मतिर-
घायोः । अवस्थिरा मघवद्भ्यस्तनुष्वमीढूवस्तोकाय तनयाय मृडय ॥
मीढुष्टम शिवतम शिवो नः सुमना भवे । परमेवृक्ष आयुधं निधाय
कृत्तिं वसान आचर पिनाकं विभ्रदागहि । विकिरिद्विलोहित
नमस्ते अस्तु भगवः । या स्ते सहस्रं हेतयोऽन्यमस्मान्निवपन्तु ताः ।
सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः परा-
चीना मुखाकृधि" । इति दशमानुवाकः । "सहस्राणि सहस्रशो ये रुद्रा
अधिभूम्यां । तेषांॅसहस्रयोजनेऽव धन्वानि तन्मसि । अस्मिन्
महत्यर्णवेऽन्तरिक्षे भव अधि । तेषांसहस्र० । नीलग्रीवाः शितिकण्ठा
दशर्वाअधः क्षमचराः । तेषां० ॥ नीलग्रीवाः शितिकण्ठाः दिवॅरुद्रा
उपश्रिताः । तेषां० ॥ ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषां० ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषां० ॥
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषांॅसहस्रयोजनेव
धन्वानि तन्मसि ॥ ये पथां पथि रक्षय ऐलबृदायव्युधः । तेषां० ॥
ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः तेषां० ॥ एतादृश रेखा
मध्यगताः पङ्क्ति तैत्तरीये पाठे, घ, पुस्तकेपिन ( ये वनानि-
प्रचरन्ति न्युयसर्पन्ति तेभ्यो वृष्टिरुदायते तेषां० ) ॥ ( ये ग्रामानुप-
सर्पन्ति तेभ्यो व्युष्टिमुपासते तेषां० ) ॥ ये एतावन्तश्च भूयाॅसश्च
दिशोरुद्रावितस्थिरे । ( तेषां ॥ पृथिव्यां येषामन्नमिषवस्ते (१)ऽन्तरिक्षे
येषां वात इषवस्ते(२) दिवि येषां वर्षमिषवस्ते (३) ) ॥ (वार) नमो
रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषव
तेभ्यो दशप्राचीर्दश दक्षिणा दशप्रतीची र्दशोदीचीर्दशोर्ध्वास्तेभ्यो
नमस्ते नो मृडयन्तु तेयं द्विष्मो यश्चनो द्वेष्टि तं वोजम्भे दधामि" ॥
इत्येकादशोनुवाकः नमस्तेरूद्रे त्येतदन्ताः अनुवाकाः [ तै. सं. का. ४
प्र. ५ ] ॥ इतिः त्रीणि यजूंषि ॥ नमो रुद्रेभ्येत्यारभ्य त्रेधाविभाग-
प्रकारस्तु षोढाविभागात्मक मन्त्रविभाग प्रकरणे प्राक् प्रदर्शितः ॥
इति तैत्तिरीयशाखानुसारेण नमकानुवाकाः ॥ अथ चमकानुवाकाः
अग्नाविष्णूसजोषसे मावर्धन्तु वां गिरः । द्युम्नैर्वा जेभिरागतं ॥
वाजश्चमे प्रसवश्चमे प्रयतिश्चमे प्रसितिश्चमे धीतिश्चमे क्रतुश्चमे

स्वरश्चमे श्लोकश्चमे श्रावश्चमे श्रुतिश्चमे ज्योतिश्चमे सुवश्चमे प्राण-श्चमेऽपानश्चमे व्यानश्चमेऽसुश्चमे चित्तं चम आधीतं चमे वाक् चमे मनश्चमे चक्षुश्चमे श्रोत्रं चमे दक्षश्चमे बलं चमे ओजश्चमे सहश्चम आयुश्चमे जरा चम आत्मा चमे तनूश्चमे शर्म चमे वर्म चमेऽङ्गानि चमे-ऽस्थानिचमे परूꣳषि चमे शरीराणि चमे " ॥ इति प्रथमानुवाकः ॥ ज्यैष्ठ्यं चम आधिपत्यं चमे मन्युश्चमे भामश्चमेऽमश्चमेऽम्भश्चमे जेमा चमे महिमा चमे वरिमा चमे प्रथिमा चमे वर्ष्मा चमे द्राघुया चमे वृद्धं चमे वृद्धिश्चमे सत्यं चमे श्रद्धा चमे जगच्चमे धनं चमे वशश्चमे त्विषिश्चमे क्रीडा चमे मोदश्चमे जातं चमे जनिष्यमाणं चमे सूक्तं चमे सुकृतं चमे वित्तं चमे वेद्यं चमे भूतं चमे भविष्यच्चमे सुगश्चमे सुपथ-श्चमे ऋद्धं चम ऋद्धिश्चमे कॢप्तं चमे कॢप्तिश्चमे मतिश्चमे सुमतिश्चमे" ॥ इति द्वितीयानुवाकः ॥ "शं चमे मयश्चमे प्रियश्चमेऽनुकामश्चमे कामश्चमे सौमनसश्चमे भद्रं चमे श्रेयश्चमे वस्यश्चमे यशश्चमे भगश्चमे द्रविणं चमे यन्ता चमे धर्ता चमे क्षेमश्चमे धृतिश्चमे विश्वं चमे महश्चमे संविच्चमे ज्ञात्रं चमे सूश्चमे प्रसूश्चमे सीरश्चमे लयश्चम ऋतञ्चमेऽमृतञ्चमेऽयक्ष्मं चमे नामयच्चमे जीवातुश्चमे दीर्घायुत्वं चमेऽनमित्रं चमेऽभयं चमे सुगं चमे शयनं चमे सूषा चमे सुदिनं चमे" ॥ इति तृतीयानुवाकः ॥ ऊर्क्चमे सूनृता चमे पयश्चमे रसश्चमे घृतं चमे मधु चमे सग्धिश्चमे सपीतिश्चमे कृषिश्चमे वृष्टिश्चमे जैत्रं चम औद्भिद्यं चमे रयिश्चमे रायश्चमे पुष्टं चमे पुष्टिश्चमे विभु चमे प्रभु चमे बहु चमे भूयश्चमे पूर्णं चमे पूर्णतरं चमे चमेऽक्षितिश्चमे कूयवाश्चमेऽन्नं चमेऽक्षुच्चमे व्रीहयश्चमे यवाश्चमे माषाश्चमे तिलाश्चमे मुद्गाश्चमे खल्वाश्चमे गोधूमाश्चमे मसुरा-श्चमे प्रियङ्गवश्चमेऽणवश्चमे श्यामाकाश्चमे नीवाराश्चमे" ॥ इति चतुर्था-नुवाकः ॥ "अश्मा चमे मृत्तिका चमे गिरयश्चमे पर्वताश्चमे सिकता-श्चमे वनस्पतयश्चमे हिरण्यं चमेऽयश्चमे सीसं चमे त्रपुश्चमे श्यामं चमे लोहं चमेऽग्निश्चम आपश्चमे वीरुधश्चम ओषधयश्चमे कृष्टपच्यं चमेऽ-कृष्टपच्यं चमे ग्राम्याश्चमे पशव आरण्याश्च यज्ञेन कल्पन्ताम् वित्तं चमे वित्तिश्चमे भूतं चमे भूतिश्चमे वसु चमे वसतिश्चमे कर्म चमे शक्तिश्चमेऽर्थश्चम एमश्चमे इतिश्चमे गतिश्चमे" ॥ इति पञ्चमोनुवाकः ॥ " अग्निश्चम इन्द्रश्चमे सोमश्चम इन्द्रश्चमे सविता

चम इन्द्रश्चमे सरस्वती चम इन्द्रश्चमे पूषा चम इन्द्रश्चमे बृहस्पतिश्चम इन्द्रश्चमे मित्रश्चम इन्द्रश्चमे वरुणश्चम इन्द्रश्चमे त्वष्टा चम इन्द्रश्चमे धाता चम इन्द्रश्चमे विष्णुश्चम इन्द्रश्चमेऽश्विनौ चम इन्द्रश्चमे मरुतश्चम इन्द्रश्चमे विश्वे चमे देवा इन्द्रश्चमे पृथिवी चम इन्द्रश्चमे-ऽन्तरिक्षं चम इन्द्रश्चमे द्यौश्चम इन्द्रश्चमे दिशश्चम इन्द्रश्चमे मूर्धा चम इन्द्रश्चमे प्रजापतिश्चम इन्द्रश्चमे" ॥ इति षष्ठानुवाकः ॥ "अंशुश्चमे रश्मिश्चमेऽदाभ्यश्चमेऽधिपतिश्चम उपांशुश्चमेऽन्तर्यामश्चम ऐन्द्रवायवश्चमे मैत्रावरुणश्चम आश्विनश्चमे प्रति प्रस्थानश्चमे शुक्रश्चमे मन्थी चम आग्रयणश्चमे वैश्वदेवश्चमे ध्रुवश्चमे वैश्वानरश्चम ऋतु ग्रहाश्चमेऽतिग्राह्याश्चम ऐन्द्राग्नश्चमे वैश्वदेवश्चमे मरुतत्वतीयाश्चमे माहेन्द्रश्चम आदित्यश्चमे सावित्रश्चमे सारस्वतश्चमे पौष्णश्चमे पात्नीवतश्चमे हरियोजनश्चमे" ॥ इति सप्तमानुवाकः ॥ इध्मश्चमे बर्हिश्चमे वेदिश्चमे धिष्णियाश्चमे स्रुचश्चमे चमसाश्चमे ग्रावाणश्चमे स्वरवश्चम उपरवाश्चमेऽधिषवणे चमे द्रोणकलशश्चमे वायव्यानि चमे पूतभृच्चम आधवनीयश्चम आग्नीध्रश्चमे हविर्धानं चमे गृहाश्चमे सदश्चमे पुरोडाशाश्चमे पचताश्चमेऽवभृथश्चमे स्वगाकारश्चमे" ॥ इत्यष्टमानुवाकः ॥ "अग्निश्चमेघर्मश्चमेऽर्कश्चमे सूर्यश्चमे प्राणश्चमेऽश्वमेधश्चमे पृथिवी चमेऽदितिश्चमे दितिश्चमे द्यौश्चमे शक्वरीरङ्गुलयो दिशश्चमे यज्ञेन कल्पन्ताम् ऋक् चमे साम चमे स्तोमश्चमे यजुश्चमे दीक्षा चमे तपश्चम ऋतुश्चमे व्रतं चमेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे चमे यज्ञेन कल्पेताम्" ॥ इति नवमोनुवाकः ॥ "गर्भाश्चमे वत्साश्चमे त्र्यविश्चमे त्र्यवि चमे दित्यवाद् चमे दित्यौहीं चमे पञ्चाविश्चमे पञ्चावी चमे त्रिवत्सश्चमे त्रिवत्सा चमे तुर्यवाट्चमे तुर्यौहि चमे पष्ठवाद्चमे पष्ठौही चम उक्षा चमे वशा चम ऋषभश्चमे वेहचमेऽनड्वान्चमे धेनुश्चम आयुर्यज्ञेन कल्पताम् प्राणो यज्ञेन कल्पतां अपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताम् श्रोत्रं यज्ञेन कल्पताम् मनो यज्ञेन कल्पताम् वाग्यज्ञेन कल्पताम् आत्मा यज्ञेन कल्पताम् यज्ञो यज्ञेन कल्पतां ॥ (चक्षुर्यज्ञेन कल्पताम् श्रोत्रं यज्ञेन कल्पताम् मनो यज्ञो! यज्ञेन कल्पताम् अयं. व्युत्क्रमोऽस्ति" ॥ इति दशमोनुवाकः ॥ "एका चमे तिस्रश्चमे पञ्च चमे सप्त चमे नव

चमे एकादश चमे त्रयोदश चमे पञ्चदश चमे सप्तदश चमे नवदश चमे एकवि॑ंशतिश्चमे त्रयोविंशतिश्चमे पञ्चविंशतिश्चमे सप्तवि॑ंशतिश्चमे नववि॑ंशतिश्चमे एकत्रिंशच्चमेत्रयस्त्रिंशच्चमे चतस्रश्चमेऽष्टौ चमे द्वादश चमे षोडश चमे विंशतिश्चमे चतुर्वि॑ंशतिश्चमेऽष्टाविंशतिश्चमे द्वात्रिंशच्चमे षट्त्रिंशच्चमे चत्वारिंशच्चमे चतुश्चत्वारि॑ंशच्चमेऽष्टाचत्वारिंशच्चमे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्निय श्चांत्यायन श्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च इडा देवहू रितिपरगीयम् ?" ॥ इत्येकादशोनुवाकः ॥ इति तैत्तरीयशाखानुसारेण चमकानुवाकः ॥ अथ नामकेऽवान्तरवाक्यानां प्रयोगः ॥

"भास्करादिविनिर्दिष्टः भाष्यदृष्ट्यऽभिधास्यते ।
नमकाश्रित मन्त्राणां प्रयोगः फलगोचरः ॥
नमस्तेरुद्र इत्यस्याः पुरश्चरणसिद्धये ।
प्राजाप(ति?त्यं) चरित्वैकं जपेन्मन्त्रममुंततः ॥
एकादशसहस्राणि शुद्धिकाले निरन्तरम् ।
प्रदक्षिणनमस्कारौ कुर्यादीशस्य मन्त्रतः" ॥

निरन्तरमिति–नित्यकर्माविरुद्धे ? निशोदिव्यतिरिक्ते च काल इत्यर्थः। मन्त्र इति नमस्ते रुद्र इत्यने(नै) व मन्त्रेण प्रतिदिनं प्रदक्षिणनमस्कारौ जपाविरोधकाले स्वशक्त्या पञ्चाष्टावष्टाविंशतिरष्टोत्तरशतं वा कुर्वीतेत्यर्थः॥ एवं च कृतपुरश्चरणो भवति ॥ एतत्कर्म हविष्याशिना कर्तव्यम् ॥ हविष्याशित्वं चोत्तरमन्त्रेष्वपि समानम् ॥ तथा नित्यकर्मादिकमपि ।

पुरश्चरणसिद्धश्च ? दक्षिणामूर्त्तिसन्निधौ ॥

"एकादशसहस्राणां जपात्स(सर्वाघ) नाशनम् ।
ततो लक्षजपात्सप्त जन्मपापः प्रणश्यति ॥
तत्र गृह्यविधानेन स्थापयित्वा हुताशनम् ।
पायसं श्रपयित्वाऽऽज्ययुक्तं तज्जुहुयाद्धविः॥
दशांशसंख्यया पश्चात् साक्षाद्देवं स पश्यति"।

तत्रेति-दक्षिणामूर्तिसन्निधौ ॥

" सर्वतोरत्निमानेन कुण्डं कृत्वाऽथपावकम् ।
संस्थाप्यजुहुयाल्लक्षं कापिलेनैव सर्पिषा ॥
गाणपत्यं ? स लभते मन्त्रेणानेन सुव्रतः ।
अथैतदर्चयाराज्ञो वक्ष्यते फलमुत्तमम् ॥
पुरश्चरणसिद्धेन शुद्धेनाथाग्रजन्मना ।
कारयेद् र्चनं लिङ्गे ततोलिङ्गस्य दक्षिणे ॥
अग्निकुण्डं विनिष्पाद्य मथित्वाग्निं निधाय च ।
नित्यवत्स्थापयेत्तत्र सर्पिर्दूर्वांश्च तण्डुला ॥
शमीसमिध इत्येतत् प्रत्येकं जुहुयाद्धविः ।
सहस्राण्यष्टतत्संख्या जपो देवस्य सन्निधौ ॥
देवालयस्य तत्संख्या प्रदक्षिणवरक्रियाः ।
ताण्डवं तनुयादीश समीपेऽथ नमस्कृतिः ॥
भवेत्तस्यैव पुरतः सहस्राष्टकसंख्यया ।
एतैश्च कर्मभिस्तस्य प्रसन्नो भगवान् भवेत् ॥
आकर्ण कृष्टे धनुषि ज्वलन्तीं
देवीमिषुं भास्वतिसन्दधानम् ।
ध्यायेन्महेशं महनीय वेषं
दिव्यायुधं योद्यतनुं ? युवानम् " ॥

इति नमस्ते रुद्र मन्यव इत्यस्य प्रयोगः ॥

(अथ यात इषु रित्यस्य प्रयोगः)

"दिनानि द्वादशैवामुं? चरुभोजी जपेन्मनुम् ।
अनिषिद्धेषु कालेषु पुरश्चरणसिद्धये ॥
विनियोक्ता भवेद्योग्य स्ततो यद्यन्नकामना ।
तिलतण्डुलसम्मिश्रयावकाम्बुजकेसरं ? ॥
एकादश सहस्राणि जुहुयादन्नसिद्धये ।
राजराष्ट्र समुत्पन्न दुर्भिक्षस्योपशान्तये ॥
कारयेत् विप्रवर्येण होमं लक्षेण संख्यया ।
स्वाग्नौ हविस्तत्र चरु गुडयुक्तिलमिश्रितम् ॥

ध्यायेद्देवं सस्मितंस्यन्दनस्थं ?
देव्या सार्द्धं तेजसा दीप्यमानम् ।
इष्विष्वासालङ्कृताभ्यां कराभ्यां
शूराकारं ? स्तूयमानं सुरौघैः ॥

इति यात इषु·रित्यस्य मन्त्रस्य प्रयोगः ॥

( अथ या ते रुद्रस्य प्रयोगः )

"वासरत्रितयं ? याव न्निरन्तरं जपेन्नरः ।
नित्यकर्माविरोधेन पुरश्चरणवान् भवेत् ॥
ततः प्रयोगयोग्यंस्या यदा गोशान्तिकामना ।
गोष्ठे हस्तमितं कुण्डं निर्मायाथ हुताशनम् ॥
मथित्वा तत्र संस्थाप्य जुहुयादयुताहुतीः ।
वैकङ्कता अपामार्गाः समिधो मधुसर्पिषा ॥
अक्तास्तत्र हविः प्रोक्तं गवां शान्तिककर्मणि" ।

समित्सुविकल्पस्तथा मधुनि सर्पिषि चांजनद्रव्यैः ॥ समिधः पयसा मधुनासर्पिषावांऽजनद्रवैः । अक्ताजुहु यादित्यर्थः ॥

" अथापरः प्रकारोऽयं गवां वै शान्तिककर्मणि ।
कलशे तीर्थजंपाथः कृत्वा गन्धाधिवासितम् ॥
विप्रवर्योजपित्वाऽथ मन्त्रलक्षममुं ततः ।
प्रोक्षयेद्वा भवेच्छान्तिः सर्वारिष्टनिषूदनी ॥
स्मेराननं चन्द्रकलावतंसं
गङ्गाधरं शैलसुता सहायम् ।
त्रिलोचनं भस्मभुजङ्गभूषणम्
ध्यायेत्पशूनां पतिमीशितारम् " ॥

इतियाते रुद्रस्य प्रयोगः । अथयामिषुं, शिवेनवचसेत्यननयोः प्रयोगः। एतद्द्वयम्एको मन्त्रः ॥

"निरन्तरं जपेन्मन्त्रं दिनानामेकविंशतिः ।
पुरश्चरणमेवं स्यात् ? प्रयोगार्हस्ततो भवेत् ॥
अकालमरणाद्राष्ट्रं नाशमासादये(द्य)दि ।
महीपतिः शान्तिकर्म कारयेदग्रजन्मना ॥

ऋग्भ्यामाभ्यां ! तिलव्रीहिगोधूमयवकल्पितम् ।
हविः प्रजुहुयाल्लक्षं वासरेष्वेकविंशतौ ॥
अकालमरणाज्जातं साध्वसं शान्तिमृच्छति " ।

अत्रतिलादीनां सतिसम्भवे समुच्चयः ॥ अलाभे विकल्पः ॥

"संग्रामिकेण वपुषा प्रविराजमानं
दश्यत्पुरत्रयमहाशनि मन्दहासम् ? ।
दैत्यान्दिधक्षुमचलेश्वरचापपाणिं
ध्यायेत्पुरारिममरौघरथाधिरूढम् " ॥

इति यामिषुं शिवेनेत्यनयोः प्रयोगः ॥

अथाऽध्यवोचदित्यस्य प्रयोगः ॥

"अर्द्धकृच्छ्रं चरित्वाऽथ वासरान्पञ्च संयतः ।
शाकमूलयवान्नाशी दिवा तिष्ठन्निरन्तरम् ॥
जपन्पुरश्चरणवान् ? स्यात् प्रयोगेऽप्यथ योजयेत् ।
रक्षापुरस्सरं राजा कामयन् चिरजीवितम् ॥
कारयेद्विधिना कर्म वक्ष्यमाणं द्विजन्मना ।
श्वेतसर्षप दूर्वाग्रयवै स्तण्डुलमिश्रितैः ॥
आज्यसिक्तैरात्मनोग्नौ मथिते पातयेद्धविः ? ।
नित्यं पञ्चस्वहस्स्वष्ट सहस्रगणनान्विताः ॥
तिलैः गुडपयोभ्यां च मिश्रेण चरुणा पुनः ।
होमश्चाष्टसहस्रः स्यात् चिरायुर्जायते नृपः ॥
दक्षिणां शक्तितो दद्या दादावन्तेऽत्र कर्मणि " ।

दक्षिणामित्यादि ॥ अत्रास्मिन् कर्मणि कर्मण आदावन्ते च दक्षिणामुत्तमां मध्यमां कनिष्ठां वा शक्तितो दद्यात् ॥ एवमेव पूर्वोक्तेषु वक्ष्यमाणेषु च कर्मसु च शक्तितो दक्षिणादानं कर्मान्त एव ॥ अत्र त्वादावन्ते च ॥ दक्षिणामानञ्चाग्रे वक्ष्यते ॥

" अथापरः प्रयोगोयं वल्मीक पथमाक्रमन् ? ।
कार्प्पासबीजलवण सिद्धार्थान्मनुनाऽमुना ॥
एकादशविधाभ्यासे (न्यासे) नाभिमन्त्र्य शुचिः स्वयम् ।
गम्याशां ? वर्जयित्वैता दिक्ष्वन्यासु प्रतिक्षिपेत् ॥

रक्षःप्रभृतिभूतेभ्यो मुच्यते नात्रसंशयः ।
अथान्यो गर्भरोगस्य नाशाय प्रोच्यते विधिः ॥
सहस्रकृत्वो मनुना शतकृत्वोऽथवा पुनः ।
अभिमन्त्र्य जलं सम्यक् गन्धं पयसि निक्षिपेत् ॥
क्वाथयित्वा ततः स्वाग्नौ होमः कार्योविधानतः ।
तत्र संख्या भवेदष्टौ सहस्राणि शतानि वा ॥
शेषं पिबेत्पयो गर्भरोग एवं ? प्रशाम्यति ।
चन्द्रार्द्धमौलिं कालारिं व्यालयज्ञोपवीतिनम् ॥
ज्वलत्पावकसङ्काशं ध्यायेद्देवं त्रिलोचनम् " ।

इत्यध्यवोचदित्यस्य प्रयोगः ॥ अथासौ यस्ताम्रोऽसौयौवसर्पतीत्यनयोः प्रयोगः ॥ अत्रापि ऋग्द्वयमेको मन्त्रः ॥

" कृच्छ्रमेकं चरेत्पूर्वं ततःषोडश वासरान् ।
निरन्तरं जपेन्मन्त्रं नित्यकर्माविरोधिनि ॥
काले हविष्यभुक्भूत्वा पुरश्चरणसिद्धये ।
अनावृष्टिभये घोरे समुत्पन्ने समन्ततः ॥
अनेन विधिना रुद्रं पूजयेद्भास्करात्मकम् ।
पुरश्चरणसंसिद्धान् पश्चाहूयशुचीन् द्विजान् ॥
कर्णकण्ठकरभ्राजत्भूषोष्णीषांशुकैः शुभैः ।
पूजयेत्तानथो कर्म ते कुर्युर्वृष्टिसाधनम् ॥
कर्मणोपक्रमो वा स्या त्तत्समाप्तिः कृतार्द्रमे ।
हविंषि पायसं तत्र तण्डुलांश्च तिला यवाः ॥
वैतस्यः समिधश्चापि भवेयुस्तण्डुलादयः ।
मध्वाक्ता वा घृताक्ता वा दुग्धाक्तास्समिधः पुनः ॥
एतैः शतसहस्राणि होमस्तेषु पृथक् पृथक् ।
विंशतिर्हिसहस्राणि जुहुयात् पायसादिना ॥
पश्चानान्तु जपेदेक श्चत्वारो जुहुयुर्द्विजाः ।
एकादशदिनैः साध्य मखिलंकर्मदृष्टिदम् ॥
दीक्षान्तिमदिने रक्त कमलैः पूजयेद्रविम् ।
सहस्राण्यष्टपुष्पाणि सकृज्जप्त्वाप्रणम्य च ॥

देवमावाह्य ? मार्तण्ड मेकैकेनाथ पूजयेत् ।
कर्मकालेऽनन्यचेताः कर्म कुर्याद्यथोदितम् ॥
यदा चलितचित्तः स्या दुपस्पृश्यतदा रविम् ।
निरीक्ष्य पुनरासीत प्रायश्चित्तोयतीऽन्यथा ? ॥
दित रक्षा कर्तव्यैवं कृतेततः ।
अवसान दिने देवो महावृष्टिं विमुञ्चति ।
[१] आसमासे ह्निरक्षा कर्तव्यैवं कृते ततः ॥

अथ लिङ्गपुराणोक्त तुलापुरुषदानविधिः ॥

शङ्कर उवाच ॥

"तुलादानं प्रवक्ष्यामि सर्वपापविनाशनम् ।
यद्गौर्या चरितं पूर्वं लक्ष्म्या नारायणेन च ॥
पुण्यं दिनमथासाद्य तृतीयायां विशेषतः ।
सुवर्णं तत्र बध्नीयात्स्वशक्त्या घटितं धटे ॥
सौवर्णं स्थापयेत्तत्र वासुदेवं चतुर्भुजम् ।
शक्त्या द्वयं तु बध्नीयात् स्थापयेत्पिटके ततः ॥
तत्रारुहेत्सवस्त्रास्त्रः पुष्पालंङ्कारभूषितः ।
अभीष्टां देवतां गृह्य स्नापयित्वा घृतादिभिः ॥
तुलादानस्य सर्वस्य विधिरेषः प्रकीर्तितः ।
प्रथमा तु घृतस्योक्ता तेजोवृद्धिकरी तुला ॥
माक्षिकेण तु सौभाग्यं तैलेन बहुलाः प्रजाः ।
वस्त्रस्य दिव्यवस्त्राणि प्राप्नोति तुलया ध्रुवम् ॥
लवणस्य तुलावण्य मरोगित्वं गुडस्य तु ।
असपत्नी शर्करया सुरूपा चन्दनेन च ॥
अवियुक्ता भवेद्भर्त्रा तुलायां कुङ्कुमस्य च ।
न सन्तापो हृदिभवेत् क्षीरस्य तुलया सदा ॥
सर्वकामप्रदाः सर्वाः सर्वपापक्षयंकराः ।
या ददाति तुलाः सर्वा सा गौर्यालयमाप्नुयात् ॥
मन्त्रेण दद्यादभिमन्त्रितां तुलाम्
परंतुतामेकतमां ? द्विजेभ्यः ।

---

१ आसमप्ते रित्यारभ्य ' लवणेऽग्निरक्षा कर्तव्यैव । कृतं ततः । इत्यन्तं घ पुस्तके नास्ति ।

सा याति गौर्याः सदनं सपुण्यं
न शोकदौर्गत्यमुपाश्नुते पुमान् ॥
त्वं तुले सर्वभूतानां प्रमाणं परिकीर्तिता ।
मां तोलयन्ती संसारा दुद्धरस्व नमोऽस्तुते ॥
इत्यारुह्य क्षणंस्थित्वा चिन्तयित्वा हरिप्रियाम् ।
अवरुह्य ततो दद्या दद्दं पादमथापि वा ॥
गुरुं सम्पूज्य विधिना सर्वालङ्कारभूषणैः ।
विसर्जयेन्नमस्कृत्य भोजयित्वा विधानतः ॥
शेषं द्विजेभ्यो दातव्यं स्त्रीभ्योऽन्येभ्यस्तथैव च ।
इष्टबन्धुविशिष्टानामाश्रितानां कुटुम्बिनाम् ॥
कदलीदलसंस्थांतु पञ्चपिण्डा ? हिमाद्रिजाम् ।
कर्पूरस्य तुलां पूज्य कुङ्कुमेनालभेत्तुलाम् ॥
अवरुह्य तुलायास्तु गुरवे तां निवेदयेत् ।
विधिनाऽनेन योदद्यात्तुलादानं विमत्सरः ॥
स लोकमेति पार्वत्याः सेव्यमानोप्सरोगणैः ।
तत्रोष्य कालं सुचिरमिहलोके नृपोभवेत्" ॥
इति विष्णुधर्मोत्तरोक्तो घृतादि तुलादानविधिः ॥
"अतनैवविधानेन केचिद्रूप्यमयं पुनः ।
कर्पूरेण तथेच्छन्ति केचिद्ब्राह्मणपुङ्गवाः" ॥
अनेनेति । तुलापुरुषदानकथितेनेत्यर्थः ॥
"तथा सित तृतीयायां नार्यः सौभाग्यदर्पिताः ।
कुङ्कुमेन प्रयच्छन्ति लवणेन गुडेन वा ॥
तत्र मन्त्रा न होमो वा एवमेव प्रदापयेत्" ॥
आह विश्वामित्रः ॥
"आदित्ये राहुणा ग्रस्ते सुवर्णैस्तोलयेत्तनुम् ।
सोमग्रहे तुरूप्येण यथा दानं तथा शृणु ॥
प्रवर्ग्यस्य मुखे युक्त उत्पन्न पत्रदेहतः? ।
सर्वपापैर्हरायैतद्ददामि प्रीयतां विधुः ॥

इत्युच्चार्य जलन्त्वप्सु निक्षिपेद्विजसत्तमः ।
प्रीयन्ते पितरः कांस्ये ताम्रे चैव पितामहाः ॥
लवणेग्निरक्षाकर्तव्यै वं ? कृते ततः ।
अवसाने महादेवो महावृष्टिं प्रमुञ्चति ॥
अथापरः प्रयोगोऽयं रविप्रीणन कृन्मतः ! ।.
वैतसैः कु[1]ङ्कुमैर्होम अयुतं स्यात्तथा रविं ॥
जलेस्थित्वोपतिष्ठेत सन्ध्ययोरुभयोरपि ।
न व वासरनिष्पाद्यं प्रयोगमपरं विदुः ॥
कण्ठदघ्ने जले स्थित्वा जलपूर्णाञ्जलिं रविम् ।
ध्यायेज्जपेत्प्रतिदिनं मनुमष्टसहस्रकम् ॥
एवं कृते मनः कामं ददात्यावत्सरं रविः ।
बन्धूक ?कुसुमैः कुर्यान्मध्वक्तैः यावकं हविः ॥
होम संख्या भवेत्तत्र सहस्राण्येकविंशतिः ।
जातिस्मरो भवेदेवं चतुर्वेदिकुले जनिः ॥

मण्डलान्तरगतं हिरण्मयं
भ्राजमानवपुषं शुचिस्मितम् ।
चण्डदीधितिमखण्ड विद्युतिं ?
चिन्तयेन्मुनिसहस्रसेवितम् " ॥

इत्यसौ 'यस्ताम्रः' 'असौ योवसर्पती' त्यनयोः प्रयोगः ॥

अथ नमो अस्तु नीलग्रीवायेत्यस्य प्रयोगः–

" आलये पश्चिमद्वारे महेशस्य समीपतः ।
जपित्वा दिवसान् पञ्च सततं संयतस्ततः ॥
समन्ततोऽरत्निमात्रे कुण्डे तु मथितानलम् ।
[2] संस्थापयेद्दक्ष दिने समारभ्य दिने दिने ॥
सहस्रं जुहुयादर्कपुष्पैर्दशादिनावधि ।
निवेदयेद्दशदिनं देवाय घृतपायसम् ॥

---

१. कुसुमैः घ पाठः । २. संस्थाप्य विधिवत्तत्र पा. पाठः ।

पुरश्चरणमेवं स्यात् प्रयुञ्जीत ततोमनुम् ।
पुत्रकामः पुरारातेरालये वाऽथ गोष्ठके ॥
नदीतीरेऽथवा कर्म वक्ष्यमाणं समाचरेत् ।
नदीतीरे च गोष्ठे च देवमावाहयेद्वटे ॥
ईशस्य पश्चिमे भागे संस्थाप्य विधिनाऽनलम् ।
शमीसमिद्भिरक्ताभि ? र्दध्या ज्यमधुना भृशम् ॥
एकादशसहस्राणि होमकालविधिः पुनः ।
दिनानि त्रीणि वा पञ्च काले चास्मिन् दिने दिने ॥
अष्टौ सहस्राण्यर्द्धं वा शतान्यष्टापि विंशतिः ।
पङ्करुहाणि शिरसि विन्यसेत्तदभावतः ॥
शमीपत्राणि तावन्ति विन्यसेदीशमूर्द्धनि ।
एवं कृत्वा तद् दिवसे ब्राह्मणान् पुष्पसंख्यया ॥
शतं वा भोजयेद्द्रव्यं दद्याद्भूरि स्वशक्तितः ।
एकादश द्विजान् रुद्ररूपान् सम्पूज्य भोजयेत् ॥
तेभ्यश्च दक्षिणां दद्या दाचार्याय विशेषतः ।
आचार्यदक्षिणा भूःस्या द्रुसबीजातु तन्मितिः ? ॥
नवारत्निप्रमाणेन दण्डेनाष्टशतात्मिका ।
दिने दिने पादनिष्कं हेम तस्मै निवेदयेत् ॥
निर्माय कुण्डले तेन तस्मा एव निवेदयेत् ।
दद्यात्तस्मै कांस्यपात्रमेकाग्रे रेवमेवहि ॥
एवं कृते महारुद्रः पुत्रमस्मै प्रयच्छति ।
वर्षमध्ये ? भवेत्किञ्च सप्तजन्मानुगं फलम् ॥
यावच्च दक्षिणा भूमि स्तावत्सन्ततिसन्ततिः ।
शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युतिम् ॥
ध्यायेत्सिंहासनासीन मुमया सहितं शिवम् '।

इति नमोस्तु नीलग्रीवायेत्यस्य प्रयोगः ॥ अथप्रमुञ्चधन्व न इत्यादीनां तिसृणामृचां प्रयोगः ॥ अयंत्रिचः एकोमन्त्रः ॥

"कृच्छ्रमेकं चरित्वाऽऽदौ जपेच्च नववासरान् ।
एवं कृते भवेत्सिद्धिः पुरश्चरणकर्मणः ॥

महीपतेरायुधानि युद्धकाले समागते ।
अभिमन्त्र्य त्रिचेनाथ जुहुयात् कुशकंटकान् ॥
लक्षमेकं ततो द्वेष्याः भग्नाः? स्युः समराङ्गणे ।
उद्यद्भास्करकोटि-
प्रकाशमादीप्तदहनमूर्द्धानम् ।
भीषणभुजङ्गभूषणं-
ध्यायेद्विविधायुधं रुद्रम् " ॥

इति प्रमुञ्च धन्वन इति तृचस्य? प्रयोगः ॥ अथ याते हेति रिति चस्य प्रयोगः

" पुरश्चरणमास्यां स्या त्पूर्वोक्तानामृचामि व ।
युद्धकालेऽथ सम्प्राप्ते द्रोण्यां तैलंविनिक्षिपेत् ॥
एकादशसहस्राणां दीपानामर्हं मुत्तमम् ।
लोकपालैः सहेशानं तत्राराध्याथ तान् स्पृशन् ॥
जपेदमुं ऋचं सप्त दिनान्यत्र दिने दिने ? ॥
अभ्यसे दृष्टसाहस्रीं मन्त्रपूतेन तेन च ।
एकादशसहस्राणि दीपानारोप्य वैरिणि ॥
प्रत्यासन्नेपुरोगच्छेत् सेनानीः पार्थिवं विना ।
दृष्ट्वा ज्वालाः प्रदीपानां शत्रुसेना विनश्यति ॥
अथान्यभूमिपालस्य विनाशायाभिचारकम् ।
कर्तुकामो मन्त्रसिद्धान् सिद्धवेषः प्रधारिणः ॥
नियोजयेन्महीपाल स्तत्र चायं विधिक्रमः ।
उपयुक्त नृपोयच्च तत्पश्यन्वाथ संस्पृशन् ॥
जपेयुरथ तत्तस्मि न्नुपयोगाय योजयेत् ।
तथा शङ्कुसहस्रं च मन्त्रितं शत्रु पत्तने ॥
देवालये तथा देवारामे वापि चतुष्पथे ।
खनेत् शालासु वाऽन्येषुनगराङ्गेषु निक्षिपेत् ॥
नश्येद्वर्षात्त्रयात्सापूः व्याध्यादिभिरुपद्रवैः ।
स्वराज्यसदृशीं दद्यादाचार्याय तु दक्षिणाम् ॥

प्रणमदमरलोकमौलिमाला

कुसुमरजोरुणपादपद्मयुग्मम् ।

अनवरतमनुस्मरे भवान्या

सह जगतां पितरं पिनाकपाणिम् " ॥

इति याते हेति रिति ऋचः प्रयोगः । इति नमकानुवाकेषु प्रथमानुवाकस्य मन्त्र प्रयोगः ॥

अथ द्वितीयानुवाकस्य प्रयोगः ॥

"अर्द्धकृच्छ्रं चरित्वाऽऽदौ सहस्राण्यष्ट सञ्जपेत् ।
[1]ब्रह्मभोजी शिवागारे आसमाप्ति दिने दिने ॥
एकादश प्रकुर्वीत प्रतिसंध्यं प्रदक्षिणान् ।
समाप्तौ देवमाराध्य दशचैकं द्विजन्मनः ॥
भोजयेद्विहिताचारान् पुरश्चरणसिद्धये ।
दावयेदयुतं राजा तैलाक्तान् रक्तसर्षपान् ॥
कृतावृत्तौ चैव मृच्छे न्नाशं शत्रुगणोऽखिलः ।
पिष्टेन [2]सर्षपेणेश मनुलिप्याथ सञ्जपेत् ॥
सहस्राण्यष्ट शत्रूणां नामग्रहणपूर्वकम् ।
एकादशनिशामध्ये ज्वरेण महता वृतः ॥
विनाशमाशु संयाति सम्पन्नः सुमहानपि ।
प्रत्यासन्ने तु सङ्ग्रामे मंजिष्ठाक्तेन वाससा ॥
आच्छाद्य देवमीशानं स्वयं प्रयतमानसः ।
सव्येतरकराङ्गुष्ठेनैतत् गछेत्युदीरयन् ॥
निरस्येदनुवाकान्ते दिनकृत्तिरथोच्यते ।
दिनानि तत्र पञ्चाष्टसहस्राणि जपः स्मृतः ॥
एवं कृते शत्रुराजः स्थानादुद्गच्छति द्रुतम् ।
वशीकरणकामस्तु चातुर्वर्ण्यं यथाक्रमात् ॥
समिद्भिर्वक्ष्यमाणाभि र्जुहुयादयुतं पुनः ।

१. चरु पाठ. २. सर्षिषादेवं पाठ ।

पर्णजाःपिप्पलोद्भूता अपामार्गसमुद्भवाः ।
विकङ्कतोत्थाः समिधो होमकर्मणि संस्मृताः ॥
यंयंमुद्दिश्य कुरुते तं तं वशमुपानयेत् ।
शूद्रस्तु ब्राह्मणद्वारा कारयेदिति नियमः ॥
तस्य त्रयाणा मनधिकारात् ॥
राज्यकामो महीपालः कुमुदान्युत्पलानि च ॥
सौगन्धिकानि जुहुयात्प्रत्येकं पावकेऽयुतम् ।
एतेन कर्मणा नूनं राज्यश्रीस्तमुपाश्रयेत् ॥
अथ श्रीकामना यस्य स श्वेतकमलैः शुभैः ।
अयुतं जुहुयाद्ग्नौ श्रीमान् भवति मानवः ॥
मेधाकामस्तु जुहुया दयुतं किंशुकान्यसौ ।
कपिलासर्पिषाक्तानि मेधावी जायतेऽचिरात् ॥
जेतुकामः सपत्नांस्तु जपेत्प्रयतमानसः
एकादशसहस्राणि भवेयुर्विजिता द्विष : ॥
दिने दिने नमस्कारा होमश्चैव दशांशतः ।
मुक्तालङ्कृतसर्वाङ्ग मिन्दुगङ्गाधरं हरम् ॥
ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया " ।

इतिनमकेषु द्वितीयानुवाक प्रयोगः ।

अथ तृतीयानुवाकस्य प्रयोगः ॥

" सहस्राणि जपेत्पञ्च प्राजापत्यपुरः सरः ।
पुरश्चरणमेवस्यात् प्रयोगार्हस्ततो भवेत् ॥
राष्ट्रव्याधिसमुत्पत्तौ राजा शान्तिं प्रकारयेत् ।
द्विजन्मभिर्मन्त्रसिद्धैः कर्मस्यादीश्वरालये ॥
एकादश भवेयुस्ते ऋत्विजस्तेषु पञ्चभिः ।
जपः स्यात् पञ्चभिर्होम एको ब्रह्मा तिलोदनम् ॥
जुहोति ब्रह्मणो होमे मन्त्राःसप्तदशाथते ।
आद्यन्ततो नमस्कारा अनुवाके तृतीयके ॥
ब्रह्मातु जुहुयादेवं यावद्धोमीननिर्मितः ।
शतांशहोमिनोन्ये स्यु जपन् सोपिच लक्षतः

अन्यहोमे तुमन्त्रः स्यात् दनुवाकः समग्रतः ।
द्रव्यं तु गव्यमाज्यं स्या देवं व्याधिः प्रशाम्यति ॥
एकोपि व्याधिमान्यः स्यात्सोपामार्गजतण्डुलैः ।
आज्यमिश्रैः सहस्राणि जुहुयादष्ट संयतः ॥
एवं कृते रोगशान्ति र्भवेत्तस्य न संशयः ।
अमात्यस्यसमुत्पन्ने व्याधा वीश्वरसन्निधौ ॥
तण्डुलै राज्यसंमिश्रैः शुक्लैर्लक्षाहुतिर्भवेत् ।
अमात्यस्य गृहे पश्चा दपामार्गस्थ तण्डुलैः ॥
दूर्वाभिश्चप्रतिद्रव्यं सहस्राष्टक संख्यया ।
अनेन कर्मणाऽमात्यो व्याधिना मुच्यते ध्रुवम् ॥
राज्ञो व्याधिसमुत्पत्तौ शान्त्यर्थं कर्म कारयेत् ।
मन्त्रसिद्धाः द्विजास्तत्र ऋत्विज स्त्वेकविंशतिः ॥
तत्र ब्रह्मा महीपाल मानयुक्तं तु सर्वतः ।
अग्निकुण्डं विनिर्माय वह्निं संस्थाप्य शास्त्रतः ॥
ततो नियोजयेदन्या नृत्विजो होमकर्मणि ।
अथ ते जुहुयुस्तत्र द्वन्द्वं भूत्वा हवींषितु ॥
तण्डुलांश्च तिलव्रीहि श्यामाकांश्च पृथक् पृथक् ।
नीवारांश्च तथा ग्राह्या अपामार्गोत्थतण्डुलाः ॥
दूर्वाः कमलकिञ्जल्कास्तथा शुद्धौदनो घृतम् ।
दशैवान्यत्र चरमं वर्जयित्वेतराणि तु ॥
गवाज्यमिश्रितानि स्युः कुण्डादक्षिणपश्चिमे ।
कलशं जलसम्पूर्णं स्पृष्ट्वा ब्रह्मा तु सञ्जपेत् ॥
दर्शआरभ्य दर्शान्त मिदं कर्म समाचरेत् ।
प्रातरासप्तघटिकान्तं भवे द्धोमो निरन्तरम् ॥
यदिचेदधिको रोगः प्रातरारभ्य सन्ततम् ।
आसायं जुहुया त्तत्र ब्रह्मापि कलशे जपेत् ॥
सप्तदण्डावधौ होमे प्रत्यहं प्रतिपूरुषम् ।
अर्द्धनिष्कं दक्षिणा स्यात्तद्वैगुण्यं दिवाहुतौ
ब्रह्मणो द्विगुणा सा स्या त्ततः कलशपाथसा ।
राजोपभोग्यवस्तूनि सम्प्रोक्ष्यास्मै नियोजयेत् ।

एवं कृतेऽचिरेणैव राजा रोगाद्विमुच्यते ॥
अन्यदप्युच्यते कर्म राज्ञो रोगविनाशकृत् ॥
अनेनैवानुवाकेन नित्यवद्धोममाचरेत् ।
अष्टौ सहस्राण्याज्येन सम्मिश्रैः शुल्कतण्डुलैः
राजा नित्यमरोगी स्या दीर्घायुरपि जायते ।
यस्य कस्य समुत्पन्ने रोगे तच्छान्तये पुनः ।
होमःप्रतिनमस्कारं सहस्राष्टकसंख्यया ।
तिलव्रीहियवैराज्य मध्वक्तैरपि वा भवेत् ।
एवंकृते तस्य रोगः क्षिप्रमेव प्रणश्यति ” ॥

अस्मिन् तृतीयानुवाके सप्तदशयजुष्युभयतो नमस्कारः। अस्य चानुवाकस्यैकसप्तत्युत्तर चतुः शत्यावृत्याष्टौ सहस्राणि सप्तचाऽऽहुतयो भवन्ति ॥ एवं प्रतिनमस्कारं हुत्वा पुनः सकलानुवाकवृत्यैकाहुतिर्देया। एवंचाष्टोत्तराष्टसहस्राण्याहुतीनां भवन्ति । तिलव्रीहियवाः समुचिता एव भवन्ति हविः । एवमुक्तप्रकारेणान्यत्रान्यत्राप्युक्तसंख्यातः स्वल्पाधिक्येपिन दोषः ॥

“ अथानेनानुवाकेन वक्ष्ये कर्माभिचारकम् ।
परराष्ट्रे रोगमिच्छन् राजैवं कारयेत्क्रियाः ॥
वाराहादीनि मांसानि जुहुयाल्लक्षसंख्यया ।
अनुवाकं पठित्वान्ते प्रत्याहुत्यैवमुचरेत् ॥
रिपुराष्ट्र समुद्देशात् अभिचारं करोमिफट् ।
स्वाहेत्येकं कृते होमे शुष्येरन् शात्रवप्रजाः ।
[1]अथापरः प्रयोगोऽत्रहोमस्याल्लक्ष संख्यया ।
वैंकंकत्यस्सुसमिधो रक्त सूत्र सुवेष्टिताः
हविष्टत्वेन विनिर्दिष्टाः समासायां समिद्धुतौ ।
शत्रुगात्रे प्रजायेत ज्वरवेगोऽचिरान्महान्
अथान्यदुच्यते कर्म रिपुराष्ट्रविनाशकृत् ।
परराष्ट्रमनुष्याणामुपयोज्यं जलादिकम् ॥
स्पृष्ट्वा वा वीक्ष्य वा कुर्यात् जपं शतसहस्रकम् ।
यस्तद्वस्तूपयुङ्क्तेऽसौ वत्सरादाशु नश्यति ॥

---

१. घ. पुस्तके अधिक; पाठः

अथापरः प्रकारोयं श्मशानावनिपावके ।
समिधोर्कसमुद्भूताः जुहुयाल्लक्ष्यसंख्यया ॥
व्याधिना रिपुनाकेवा जायते अर्के वनं पुरे ।
अथापरः प्रकारोत्र चामुण्डा मूर्तिसन्निधौ ॥
दक्षिणाभिमुखो भूत्वा तैलाक्तैस्तिलमाषकैः
एकादश सहस्राणि जुहुयादनुवाकतः ।
मसूरिकाभि र्बाध्यन्ते परराष्ट्रप्रजास्ततः ।
अथान्यत्कथ्यते कर्म पश्चिमद्वारसंयुतम् ॥
रुद्रालये महेशस्य पादपीठेऽनलं स्मरन् ।
अपस्माराह्वयंसप्त सहस्राणि जपेच्छुचिः ।
स्मृत्वा तु शत्रुराजानं मन्त्रान्तेत्वेमुच्चरेन् ॥
प्रज्वालय ज्वालयापस्मारिनित्यप स्मारवान् रिपुः ।
अथापरो विधिस्तत्र शुक्लतण्डुलमिश्रितैः ॥
पिष्टैराहुतिसम्मानै र्होमः स्याल्लक्षसंख्यया ।
राजानंसर्वापदगं स्मृत्वा शत्रुहतिर्भवेत् ॥
ततो रिपौ राजयक्ष्म जायते तेन नश्यति ।
रूपयौवनसम्पन्ना मूर्तेव वनदेवता ॥
पुष्पिताशोकपुन्नाग सहकारशिशूपमः ।
पञ्चविंशति नक्षत्रो मायूरकृत शेखरः ॥
अकलंकशरत्पूर्ण चन्द्रबिम्बसमाननः ।
प्रान्तबद्धकपर्दाङ्गो वसानश्चर्म कोमलम् ॥
सव्यापसव्यविद्युत कृतमालाविभूषितः ।
धाराकदम्बपुञ्जेन नाभिदेश प्रलंबिना ॥
आजंघं प्रेक्षणीयेन प्रेक्षणियोपि शत्रुभिः ।
भार्याऽस्य चारुसर्वाङ्गी वन्यालङ्कार शोभिता ॥
आदर्शमूर्तिः शोभानां वन्यानामिव निर्मला ।
तस्या हस्ते धनुर्दत्वा शरमेकं च निर्मलम् ॥
द्वितीयमंसमालम्ब्य शिष्टं वामेन बाहुना ।
सुगन्धिपुष्पस्तबक माघ्रायाघ्राय पाणिना ॥

वीज्यमानो मन्दमन्दं नवपल्लवशाखया ।
समावृत्तो बालकैश्च चतुर्भिश्च मनोहरैः ? ॥
गच्छद्भिरग्रतो हृष्टैः ध्यातव्यो जगतां गुरुः ।
एवं भूतो महातेजाः किरातवपुरीश्वरः ” ॥

इति नमकेषु तृतीयानुवाकस्य प्रयोगः ।

अथ चतुर्थानुवाकस्य प्रयोगः ॥

“ प्राजापत्यं तदर्द्धं च चरित्वादौ ततो जपेत् ।
सहस्राणि नवाप्येवं शालेयस्य प्रदक्षिणम् ॥
कुर्वीताष्टसहस्राणि तत्रायं नियमः स्मृतः ।
यावत्प्रदक्षिणावृत्तिर्जपेत्तावन्निरन्तरम् ॥
पुरश्चरणसिद्धः स्यात् प्रयुञ्जीताथ मन्त्रवित् ।
राजयक्ष्मावृतो मर्त्यो विद्वांसं विप्रपुङ्गवम् ।
नियोजयेच्छान्तिकृत्ये ईशवेश्मनि रोगिणः ॥
कुर्यात्कुण्डं बाहुमात्रं तत्कुण्डस्य पुरः पुनः ।
वेदिकुण्डं बाहुमात्रं कृत्वा तत्र नवं घटम् ॥
तन्तुभिर्वेष्टितं तोय परिपूर्णं विनिक्षिपेत् ।
वेदिकुण्डस्थिते कुम्भ अनुवाकेन धूर्जटिम् ॥
आवाह्य गन्धपुष्पाद्यैरर्चयेद्देवमीश्वरम् ।
गन्धः कर्पूर एवात्र पुष्पं तामरसं स्मृतम् ॥
धूपः प्रोक्त उशीरादि दीपो गव्याज्यनिर्मितः ।
एवमाराधनं कुम्भे स्वाहान्याराधनं तथा ॥
एकादश दिनान्यत्र दीक्षाकालः प्रकीर्तितः ।
वारानेकादश ध्यानं कुर्वीतारम्भवासरे ॥
वेदिकुण्डादन्यकुण्डं प्रणयेद्रोगिणोऽनलम् ।
तस्मिन्नेकादशावृत्या चानुवाकमुदीरयेत् ॥
आज्यं प्रतिनमस्कारं जुहुयात्प्रथमे दिने ।
तत्सन्निधावेकविंश त्सहस्राणि जपः स्मृतः ॥
स च कार्यो जपो दीक्षा दिने ष्वेकादशस्वपि ।
उपक्रमदिने सर्पिः एवं हुत्वाऽथ वासरे ॥

तृतीयेऽथानुवाकस्य तद्वदावृत्ति माचरन् ।
कुर्यात्प्रतिनमस्कारं होमं तत्रोच्यते हविः ॥
तिललाजव्रीहि दूर्वा यवा अक्तास्तु सर्पिषा ।
मधुना वाऽपि तेऽक्ताःस्यु रथाह्नि तु चतुर्थके ॥
पूर्ववच्चानुवाकेन जुहुयान्मधुसर्पिषी ।
पञ्चमेऽह्निषष्ठेऽपि होम एवं विधो भवेत् ॥
दिनद्वयेऽपि जुहुया दश्वत्थसमिधस्तथा ।
अपामार्गाश्च समिधो मन्त्रावृत्यादि पूर्ववत् ॥
होमस्तु नवमे सूर्यस्योदयास्तमयावधि ।
आवृत्तिरनुवाकस्य मन्त्रच्छेदश्च पूर्ववत् ॥
हविः सर्पिमधु प्रोक्त मत्राथ दशमे दिने ।
निरन्तरं जपेत्काले नित्यकर्माविरोधिनि ॥
ततः समाप्तिदिवस अनुवाकमुदीरयेत् ।
सहस्राष्टकसंख्याक कमलैः पूजयेच्छिवम् ॥
तत्र प्रतिनमस्कार मर्पयेत्सरसीरुहम् ।
ततो गौरीं समाराध्य रोगस्यास्य विमोचनम् ॥
अस्त्वित्येवं वाचयेच्च द्विजाग्र्यान् वेदपारगान् ।
दानं दद्यात्ततोनिष्क सहस्राष्टकसंख्यया ॥
तदर्धंवाशतान्यष्टौ राजा दाता भवेद्यदि ।
इतरोऽष्टशतं वापि तदर्धं पञ्चविंशतिः ॥
प्रदाय दानमेकस्मै ततः कर्माङ्गदक्षिणाम् ।
दद्यादत्र प्रतिदिनं निष्कमेकामिति स्थितिः ॥
अन्ते धेनुः प्रदातव्या सर्वकर्माङ्गदक्षिणा ।
एवं कर्म समाप्याथ महेशानं विसर्जयेत् ॥
ततो घटजलेनामुं रोगिणं स्नापयेद्दुत ।
भोजयेद्वा कृतेचेत्थं राजयक्ष्मा विनश्यति ॥
अनेनैवानुवाकेन मेहशान्तिरथोच्यते ।
मेहवान् स्वानले होमं कुर्यात्क्षौद्रेण सर्पिषा ॥
तत्र प्रतिनमस्कारं मन्त्रविछेद ईरितः ।
संख्या नवसहस्राणि होमे मेहोविनश्यति ॥

अन्येषामपि कुष्ठादि रोगाणां शान्तये पुनः ।
गवाज्यमधुना होमा निर्दिष्टा लक्षसंख्यया ॥
पूर्ववच्चात्रविच्छेदो मन्त्राणां होमकर्मणि ।
लक्षमेकं जपेदेन मनुवाकं तथा कृते ॥
शान्तिः कुष्ठादिरोगाणां जायते नात्र संशयः ।
अथ ज्वरे समुत्पन्ने दारुणे सान्निपातिके ॥
शक्तो द्विजो नाभिदघ्ने स्थित्वा स्रोतसि पाथसि
रक्तपद्मसहस्राणा मष्टौ तत्रविनिक्षिपेत् ।
छेदः प्रतिनमस्कारं मन्त्रस्योक्तो मनीषिभिः ॥
पूजा भृङ्गरिटेः कार्या विशेषेणात्र कर्मणि ।
एवं कृते सन्निपात ज्वरः क्षिप्रं विनश्यति ॥
भस्मोद्धूलितसर्वाङ्गं जटामण्डलमण्डितम् ।
ध्यायेत् त्र्यक्षं वृषारूढं गणेश्वरयुतं हरम् " ॥

इति नमकेषु चतुर्थस्यानुवाकस्य प्रयोगः ॥

अथ पञ्चमषष्ठानुवाकयोः प्रयोगः ॥

" अनुवाकद्वयस्यास्य पुरश्चरणसिद्धये ।
त्रिरात्रं चरुभोजीस्यात् जपेदथ निरन्तरम् ॥
एकादशदिनान्येवं पुरश्चरणयुग्भवेत् ।
अथ राज्यरमावृद्धि कामो राजा तु कारयेत् ॥
मन्त्रसिद्धैर्द्विजैः कर्म वक्ष्यमाणं विशेषतः ।
एताभ्यामनुवाकाभ्या मासं प्रतिनमस्कृति ॥
लिङ्गस्योपरि शुभ्राणि कमलानि विनिक्षिपेत् ।
यावदेकादशावृत्ति रनयोरनुवाकयोः ॥
तावदेव सपर्या स्या त्पूर्वोक्ता तु दिने दिने ।
एकादश प्रतिदिनं भोजयेच्च द्विजानपि ॥
एवं कृते राजलक्ष्मीर्निष्प्रत्यूहं प्रवर्द्धते " ।
अथापरः प्रयोगोऽयं दक्षिणामूर्तिसन्निधौ ॥
राज्ञो जन्मदिने तस्य स्वाग्नौ वामशितानले ।
अश्वत्थसमिधामाज्य युक्तानामेकविंशतिम् ॥
सहस्राण्यत्र जुहुयात्तथा दूर्वाङ्कुरानपि ।

एकादश सहस्राणि कृत इत्थं महीपतिः ॥
चिरायुर्विजयी चस्या देवदेवप्रसादनः ।
अथायं विजयार्थीचेन्मासि मासि [1]जपन्नृपः ॥
कारये"[2]त्पूर्वसंख्याक" मनयोरनुवाकयोः ।
प्रत्यासन्ने तु सङ्ग्रामे महानसगतेऽनले ॥
महानसाग्निपक्वेन सोप(दं) शेन वैधसा ।
[3]मधुनाक्तेन जुहुया त्तत्र प्रतिनमस्कृति ॥
विज्ञेयो मन्त्रविच्छेद आवृत्तिस्त्वनुवाकयोः ॥
एकादशात्मिका ज्ञेया हुत्वैवं हुतशेषतः ? ॥
निदधीत बलिं भूमौ उद्दिश्याश्रितदेवताः ।
तमादाय बलिं सर्वं होमशेषेण मेलयेत् ॥
तं शेषं परसेनाया मध्येषु परितः क्षिपेत् ।
अचिरादेव मासेना भवेन्नष्टा न संशयः ॥
अथवा तण्डुलैः शुक्लैः रग्नौ हुत्वा तु पूर्ववत् ।
शत्रूनभिक्षिपेच्छेषं नश्येयुः शत्रवोऽचिरात् ॥
राज्ञः सर्वाण्यायुधानि स्पृष्ट्वाभ्या मभिमन्त्रयेत् ।
तानि स्यु र्वृद्धतेजांसि राज्ञस्तैर्विजयो भवेत् ॥
अथारिसेनासंस्तम्भ उच्यतेऽर्कमृडात्मकम् ।
समुद्दिश्यार्कसमिधा जुहुया द्रावृदत्र तु ॥
अनुवाकद्वयावृत्तिरुक्ता द्वादश संख्यया ।
तत्र प्रतिनमस्कारं मन्त्रान्ते त्वेवमुच्चरेत् ॥
परसेनास्तम्भं करोमि स्वाहेति जुहुयाद्धविः ।
एवं कृते शत्रुसेना भवति स्तम्भिताऽचिरात् ॥
एताभ्यामनुवाकाभ्यां राज्ञः सेनाभिमन्त्रणम् ।
कुर्वीत सर्ववस्तूना मेवमेवाभिमन्त्रणम् ॥
इत्थं कृते तत्प्रभावा त्सर्वमेवामृतं भवेत् ।
अथ राज्ञो यदीच्छा स्यात्परसेना वि(शो)षणे ॥
हरिणस्य वराहस्य छागस्य च शशस्य च ।
मांसैः कपिञ्जलस्यापि कलविङ्कस्य पक्षिणः ॥

---

द्विजादिभिः ' १ पाठ, २. ' लक्ष ' घ. ३. ' मध्वाज्याक्तेन' घ

तथान्येषां मृगाणां च पिशितैर्लक्षसंख्यया ।
जुहुयाच्च प्रतिद्रव्यं [*]शून्यगेहकृतानले ॥
तथाऽऽहुतिप्रमाणेनापूपैर्लक्षाहुतिर्भवेत् ।
अत्र प्रतिनमस्कारं मन्त्रान्ते त्वेवमुच्चरेत् ॥
परराष्ट्रप्रजाशोषणं करोमि स्वाहेति
शुष्येरन्नित्थमाचीर्णे परराष्ट्रगत प्रजाः ।
सुवर्णं रजतं गावो भूमिर्वस्त्रादिकं तथा ॥
दक्षिणात्र भवेदेत् प्रोक्तं कर्म महीक्षितः ।
अथाभिधीयतेन्येषां यस्य स्यात्पुत्रकामना ॥
स्वाग्नौ प्रतिनमस्कारं मेताभ्यां समिधस्त्वसौ ? ।
औदुम्बरीः प्रजुहुया दक्तास्ताः स्युर्घृतेन च ॥
दध्ना च मधुना चैव होमसंस्था विधीयते ।
एकविंशतिसाहस्री किं वा त्रैवानुवाकयोः ॥
यावन्तः स्युर्नमस्कारा स्तत्संख्यकलशान् शुभान् ।
तन्तुभिश्चनवैर्वस्त्रै र्वेष्टितान् जलपूरितान् ॥
स्थापयित्वाऽनुवाकाभ्या मभिमन्त्र्य पृथक् पृथक् ।
तत्र प्रतिनमस्कार मभिषिञ्चेच्च दम्पती ॥
प्रतिकुम्भस्थसलिलै रनुवाकद्वयं ततः ।
जपेच्चाष्ट सहस्राणि महेशश्चाभिषेचयेत् ॥
आभ्यामेवानुवाकाभ्या मेतावेव जपेत्पुनः ।
सप्तगण्डावधौ काले ततः कुर्यात्प्रदक्षिणम् ॥
सहस्राष्टकमीशस्य ततः पिष्टविनिर्मितम् ।
मण्डलं प्राशयेदेत दनुवाकाभिमन्त्रितम् ॥
नदीप्रवाहे स्थित्वैता वनुवाकौ शुचिर्जपन् ।
वारानेकादशेशानं तत्र प्रतिनमस्कृति ॥
पूजयेच्च शमीपत्रैः कर्मेदं पुत्रकामदम् ।
विशिष्टकर्मणा रुद्रसदृशो जायते सुतः ॥
अष्टत्रिंशद्वर्षवयोऽधिक स्त्रीपुंसयोरपि ।
प्रयोगेणामुना पुत्रो जायते नात्रसंशयः ॥

---

[*] 'शूद्रगेहात् हृतानले' पाठ

सतु वंशकरः पुत्रःत्रिशूलस्य हस्तयोः ।
अन्यैरपि गुणैर्युक्तः शिवभक्तश्च जायते ॥
अभिमन्त्र्य शुभं सूत्रं गर्भिणीनां करद्वये ।
निबन्धीयात्ततो गर्भनाशो नैव भवेत् क्वचित् ॥
अभिमन्त्रितमेताभ्यां भस्म धूपं चनिर्दिशेत् ।
कुमारादिग्रहग्रस्त बालरक्षाख्य कर्मणि ॥
रात्रौ शिखाञ्च बन्धीया दाभ्यामत्रैव कर्मणि ।
गौरीकराम्बुजन्यस्त स्वर्णशैलशरासनम् ॥
इषुहस्तं 'नरारूढं नरनारीतनुं स्मरेत् " ।

इति नमकेषुपञ्चमषष्ठानुवाकयोः प्रयोगः ॥

अथ सप्तमानुवाकस्य प्रयोगः ॥

" एकोपवासं कुर्वीत ततश्चाष्टशतं जपेत् ।
पुरश्चरणमेवंस्यात् प्रयोगार्हस्ततो भवेत् ॥
चतुर्वर्णस्य वंशं यः कामयेतात्मनो नरः ।
उदुम्बरचलत्पत्र न्यग्रोधप्लक्ष भूरुहाम् ॥
समिधो दधिमध्वाज्य सम्पृक्ता जुहुयाद्दसौ ।
अयुतं होमसंख्या स्या द्वंश्यमेवं समश्नुते ॥
मेधाकामस्तु जुहुया त्सहस्राणां तु पञ्चकम् ।
कापिलाज्यं हविः प्रोक्तमेवं मेधां समश्नुते ॥
पुष्टिकामस्तु कुर्वीत होममाहुतिमात्रकैः ।
अपूपैर्नवसाहस्री संख्या स्याद्धोमकर्मणि ॥
यस्त्वारोग्यं कामयते स इत्थं होममाचरेत् ।
दधिमध्वाज्यसम्पृक्ताः खादिर्यः समिधोत्र तु ॥
हविष्येन विनिर्दिष्टाः पञ्चसाहस्रिकाऽऽहुतिः ।
रूपकामस्तु जुहुया द्युतं चूतपल्लवान् ॥
दधिमध्वाज्यसम्पृक्ता न्रूपमाप्नोत्यनुत्तमम् ।
यः श्रीकामः स कान्तारे स्वकीयाकारसम्मितम् ॥
अग्निकुण्डं खनेत्तत्र स्थापयेन्मथितानलम् ।
ततः पञ्चसहस्राणि श्वेतान्यम्भोरुहाणि च ॥

१. ' रथा ' पाठ

जुहुयादथ साक्षाच्छ्री नैरंतमुपतिष्ठते
अन्वयो यावदस्यस्या त्तावदेषा विवर्द्धते ॥
कार्पासपटकामस्तु बीजैः कार्पाससम्भवैः ।
मध्वाक्तैरयुतं होम माचरेत्काममाप्नुयात् ॥
अनुवाकं जपन्नेनं धेनुकामो गवां व्रजे ।
प्रदक्षिणक्रियां कुर्या दयुतेनैव संख्यया ॥
*पुत्रकामः पलाशस्य समिधो मधुसर्पिषा ।
सम्यगक्ताः प्रजुहुयात् अयुतेनैव संख्यया ॥
सतु वंशकरं पुत्रं लभते नात्र संशयः ।
आयुः कामस्तु दूर्वाणां घृताक्तानां तथाऽयुतम् ॥
प्रतिवर्षन्तु जुहुया च्छतायुःसहि जायते ।
विद्याकामो घृताक्ताना मश्वत्थसमिधां शतम् ॥
सहस्राणि प्रजुहुयात् सर्वविद्या गतो भवेत् ।
राज्यकामस्तु जुहुयात्पञ्च लक्षाणि संयतः ॥
सौगन्धिकानि मध्वक्ता न्येवं सम्राट् प्रजायते ।
अथापवर्गकामश्चे दादौ चान्द्रायणं चरेत् ।
अनुवाकं जपेत्पश्चात् सहस्राण्येकविंशतिः ।
ततः पंचसहस्रान्तमनुवाकमुदीरयन् । प्रदक्षिणक्रियांकुर्यान्महेशायतने
ततः कुर्यात् पञ्चसहस्रान्तं प्राणायामक्रियांतरः ।
पश्चात् स्वाग्नौ महेशस्य समीपेहोममाचरेत् ।
पलाशाश्वत्थसमिधां घृताक्तानां हुतिर्भवेत् ॥
लक्षत्रयं ततो मुक्तो भवेद्देवप्रसादतः ।
अन्ये च तत्कुलोत्पन्ना रौरवादिषु ये स्थिताः ॥
ते रमन्ते शिवपुरे यावद्वासवपञ्चकम् ।
यावचपृथिवी ताव द्वर्तन्ते तत्कुलोद्भवाः ॥
जटाभिर्लम्बमानाभि र्नृत्यन्तं अभयप्रदम् ।
शिवं शुचिस्मितं ध्याये द्व्याघ्रचर्म परिष्कृतम् ? ॥

इति नमकेषु सप्तमोनुवाकः ।

---

*संदेह विछेदो जातः

अथोपरितनमन्त्रप्रयोगः : तत्राष्टमानुवाकमारभ्य नवमानुवा यावन्नमो वः किरिकेभ्यो मन्त्र एक इति।

" कृच्छ्रद्वयं चरित्वादावथ पञ्चशती जपेत्।
पुरश्चरणमेवं स्यात्प्रयोगार्हस्ततो भवेत्॥
'राज्ञः संराजकामस्य कर्मेदं अभिधीयते।
काले वसन्ते देशादौ शंभोरायतनेऽपि वा।
कान्तारे वापि देवस्य सन्निधौ सर्वमाचरेत्॥
तत्र देशे कार्यसिद्धिं वाचयित्वा द्विजैश्च तान्।
सम्पूज्योपक्रमेद्दर्शे आर्द्रायां वा यथारुचि॥
वरणं वाथ कुर्वीत मन्त्रसिद्धाग्रजन्मनां।
वासोऽलङ्कारपुष्पाद्यैः तत्राप्याऽऽचार्य पूर्वकम् ?॥
मन्त्रसिद्धद्विजाभाव आचार्यो मन्त्रकल्पवित्।
सद्यस्सिद्धान् द्विजान् कुर्यात् तद्विधानमथोच्यते॥
अथाचार्योन्मन्त्रसिद्धान्मन्त्रमा यतते द्विजाः।
निरन्तरं ? जपं कुर्यं वींसरान्दशपञ्च च॥
सद्यः सिद्धास्ततः कर्म योग्याःस्युर्द्विजपुङ्गवाः।
एकादश भवेयुस्त ऋत्विजो होमकर्मणि॥
उदयादस्तपर्यन्तं होमोऽनुपरतो भवेत्।
दिनानि त्रिंशदेवं स्या द्धोमद्रव्याद्यथोच्यते॥
तिलव्रीहियवाः साज्या मन्त्रप्रतिनमस्कृतिः।
होमाग्नेरुपरिष्टाच्च सर्पिः पात्रं सदाऽऽवहेत्॥
अणुधारासमायुक्तं होमकाले विनिक्षिपेत्।
यावत्कर्म समाप्येत तावद्देवस्यनित्यशः॥
अग्रजन्माष्टसाहस्री भुक्तिपर्याप्तमोदनम्।
नैवेद्यं स्यात् प्रतिदिनं तावतो भोजयेद्विजान्॥
तथाऽन्तिमदिनेनित्यं द्विगुणं भोजनादिकम्।
पूजायां तु महेशस्य गन्धः कर्पूर ईरितः॥
पुष्पाणि पङ्कजानिस्यु धूपः कर्पूरमिश्रितः।
तथा गवाज्यसंयुक्तो गुग्गुलुः परिकीर्तितः॥

---

१. ' राज्ञः इत्यारभ्य अचरेत् ' इत्यन्तः, घ पुस्तके

शतं शतं दक्षिणास्या दृत्विजामर्द्धमेव च
आचार्ये द्विगुणा सास्या द्भूरप्यस्याधिका भवेत् ॥
प्रतिसंवत्सरं रुद्र पूजामित्थं च कारयेत् ।
एवमाराधनात्सम्राट् भवेद्राजा न संशयः ॥
राजानो येऽब्धिमध्यस्था रुद्रभूतास्तुतेऽखिलाः ।
हन्यमानो ? होमकर्तु वंशे तिष्ठन्ति किङ्कराः ॥
एवमाराधनाद्राजा सर्वां भुङ्क्ते वसुन्धराम् ।
रुद्रभूतैरुह्यमान अन्तेशिवपुरं व्रजेत् ॥
रुद्ररूपी शिवपुरे भुक्त्वा कल्पायुतं सुखम् ।
सप्तद्वीपावनी राजा शिवभक्तश्च जायते ॥
करयोस्तस्य दृश्येत पिनाकाकः सुशोभनः ? ।
अथोच्यते प्रयोगोऽन्यो राज्ञो द्विण्णाशकामिनः ।
मन्त्रप्रभावयुक्तेन विप्रेणद्धवि कारयेत् ।
खादिरं तु महद्रूपं कृत्वा वैरि महीक्षितः ।
विविक्तदेशे कुत्रापि जलपूर्णघटे मृडम् ।
आवाह्य सनिधौ तस्य विधिनाऽऽनीय पावकम् ।
जुहुयाल्लक्षमन्त्रःस्यान्मन्त्रप्रति नमस्कृतिः ।
शमीतरुसमुद्भूताः समिधः कण्टकैर्युताः ॥
रक्ताक्तारुधिरं शस्तं बैडालमिह कर्मणि ।
ततस्तत् खादिरं रूपं ? प्रत्यङ्गं लोहशङ्कुभिः ॥
सम्यक् प्रतिनमस्कारं खादयित्वा तु खादिरे ।
रूपके विन्यसेत्पादं न्यासकाले गुरुर्जुपेत ? ॥
ततो विप्रान् शतं राजा भोजयेदित्थमातते ।
संवत्सरत्रयान्नष्टः परराजो भवेद्ध्रुवम् ॥
अन्यच्च कथ्यते कर्म पूर्ववत् खादिराकृतिम् ।
कृत्वा सशृङ्खलां पश्चात् पूर्ववद्धोममाचरेत् ॥
ततः शृङ्खलितः शत्रु राजः शीघ्रं प्रजायते ।
अथापरः प्रयोगोऽत्र शत्रुभूमिपतेः पुरे ॥
मन्त्रसिद्ध द्विजास्तत्र राजपुरुषसंयुताः ।
विकृताकृतिसम्भिन्ना श्चैत्येषु च चतुष्पथे ॥

देवतायतने राजद्वारे चैव सभासु च ।
मन्त्राभिमन्त्रितान् गुप्तं न्यसेयु र्लोकशङ्कुकान् ॥
ततोभिमन्त्रितं भस्म क्षिपेयुः सर्वतः पुरे ।
एवं कृते रिपुपुरं नश्येद्वर्षत्रयादथ ॥
खादिराद्याः प्ररोहन्ति महारण्यं च जायते " ।

अत्र च ध्यानश्लोकाः-रूपयौवनसम्पन्नेत्येवमादयः तृतीयानुवाक-प्रयोगोक्ता द्रष्टव्याः । इत्थम्प्रथमानुवाकमारभ्य नमो वः किरिकेभ्य इत्येतत्पर्यन्तस्य प्रयोगः । अथ नमो वः किरिकेभ्य इत्यस्य प्रयोगः । इत आरभ्यानुवाकान्तमेको मन्त्रः ॥

"पराकं प्रथमं कृत्वा जपेत्पश्चादमुं मनुम् ।
चत्वारिंशत्सहस्राणि पुरश्चरणसिद्धये ॥
मन्त्रसंशोधनार्थं तु ततः परिसरे गुरोः ।
जपेच्चैवाष्टसाहस्रीं प्रयोगार्हस्ततो भवेत् ॥
मन्त्रेणानेन दुःसाध्यं न किञ्चिदपि विद्यते ।
देवस्य दक्षिणामूर्तेः सन्निधौ स्वहुताशने ॥
जुहुयान्मथिताग्नौ वा लक्षं लाजतिलैः पृथक्
एवमुत्पाद्यते तस्य सुवर्णं तदनुग्रहात् ॥
अथान्यदुच्यते कर्म तत्र स्यादयुतं हुतिः ।
अपामार्गाणि बीजानि वैणवानि तथा यवाः ॥
दधिमध्वाज्यसम्पृक्ता हविरत्र हुतौ भवेत् ।
सुवर्णानां सहस्रं तु होमेनोत्पद्यते ध्रुवम् ॥
कन्याकामो गुग्गुलेन स्वेष्टकन्यासमाकृतिम् ।
कृत्वातामुपलभ्येव जपेत्पञ्च सहस्रकम् ॥
छित्त्वाऽथतां सहस्राणि पञ्चैव जुहुयाच्छुचिः ।
लभते कन्यकामिष्टां सर्वाभरण भूषिताम् ॥
राज्यश्रीकामना यस्य तस्य लक्षं हुतिर्भवेत् ।
होमद्रव्यं तु पद्मानि कुमुदान्युत्पलानि च ॥
एवं कृते राज्यलक्ष्मीः प्रत्यक्षा जायतेऽचिरात् ।
वश्यमिच्छन् पिशाचादेः पालाशानां शुभाङ्कुरैः ॥

लक्षमेकं प्रजुहुयात् पिशाचा यक्षराक्षसाः
दृश्या वश्याश्च जायन्ते देवदेवप्रसादतः ॥
अथापरः प्रयोगोयं महाकान्तारभूतले ।
आत्मप्रमाणयुक्कुण्डे संस्थाप्य मथितानलम् ॥
अयुतं जुहुयाद्बिल्वैः ततः पञ्चसहस्त्रिकाम् ।
मुष्टिमात्रै विल्वपत्रैर्होमकर्म समाचरेत् ॥
तत्र विल्वफलाकारं सुवर्णमुपजायते ।
स्पर्शवेधी भवेद्धेमपिण्डो विल्वफलाकृतेः ? ॥
सार्वभौमसुतार्थी तु राजैतत्कर्म कारयेत् ।
देवस्योपरि शुभ्राणि गव्येनाक्तानि सर्पिषा ॥
कमलानि प्रजुहुयात् शतसाहस्रसंख्यया ।
उत्पद्यते सार्वभौमः सुतो देवप्रसादतः ॥
अथान्यत्कर्म तत्रस्या दयुतं हवनक्रियाः ।
शमीसमिद्भिरक्ताभिर्दधिक्षौद्रघृतैः शुभैः ॥
एवं कृते सुतस्तस्य शिवभक्तोऽभिजायते ।
कवित्वेच्छू रौप्यपाले श्वेतवर्णत्वचोद्भवम् ॥
चूर्णमूर्ध्वफलं क्षिप्त्वा कपिलाज्येन लोडयेत् ।
ततस्तदयुतावृत्या चूर्णं कृत्वाभिमन्त्रितम् ॥
सेवेत स्वयमित्थं तु कृते सञ्जायते कविः ।
भोगकामस्तु जुहुया दुदुम्बरतरूद्भवाः ॥
समिधो दधिमध्वाज्यपृक्ताः संख्यापि चायुतम् ।
देवदेवप्रसादेन महाभोग्यभिजायते ॥
यो मनोजवकामः स्याद्वक्ष्यमाणं समाचरेत् ।
पुरश्चरणमन्त्रःस्या द्विशेषेण तदुच्यते ॥
कृच्छ्रं संवत्सरं कृत्वा ततश्चान्द्रायणं चरेत् ।
इत्थं संशोध्य चात्मान मथाष्टादशवासरान् ॥
चरुशाकफलैर्मूलैश्चारयेद्देहधारणम् ? ।
निरन्तरं जपेद्बुद्धिपूर्वं निद्राभवेन्नतु ॥
अबुद्धिपूर्वके स्वप्ने स्नात्वा पश्चाज्जपेन्मनुम् ।
जपान्ते गुरवे दद्यात् निष्कपञ्चक काञ्चनम् ॥

ततो गुरोर्वा देवस्य सन्निधौ जपमाचरेत् ।
संख्या चात्र समुद्दिष्टा लक्षस्यार्द्धं ततः पुनः ॥
साक्षादुमापती रुद्रः प्रत्यक्षस्तस्य जायते ।
तत्प्रसादान्मनोवेगयुक्तो भवति मानवः ॥
यं यं देशं कामयते तं तं देशं गुरुं तथा ।
स्मृत्वा मन्त्रं जपेदष्टशतं तद्देशभाग् भवेत् ॥
अथादृश्यत्वकरणं मन्त्रं पूर्ववदाचरेत् ।
पुरश्चरणकर्माथ काले यस्मिन्नदर्शनम् ॥
अपेक्षते तदा तस्मिन् लोहितं चन्दनं शुभम् ।
कपिलापयसा सूक्ष्मं संक्षुद्याश्वत्थ पत्रके ॥
क्षोदं निधाय तंस्पृष्ट्वा सहस्राण्यष्ट सञ्जपेत् ।
तेनोपलिप्य चात्मानं स्पृष्ट्वा स्मृत्वा च शङ्करम् ॥
प्राणायामान् प्रकुर्वीत तदाऽदृश्यो भवेन्नरः ।
अथान्यदुच्यते कर्म राजवश्यकरं परम् ॥
क्षोदं कृत्वा लोहितस्य चन्दनस्याथ तं पुनः ।
अभिमन्त्र्यायुता (? वृ) त्या गुलिकां तेन कारयेत् ॥
ललाटे धारयेन्नित्यमभिगच्छेत् महीपतिम् ।
एवं वश्या भवेयुस्ते राजानो राजपूरुषाः ? ॥
देवस्य दक्षिणामूर्तेः सन्निधौनित्यवन्मनुम् ।
जपेदष्टशतं राज्ञः पुरुषेभ्यो भयं नहि ॥
यस्येच्छेन्नाशमस्यासौ नामग्रहणपूर्वकम् ।
मन्त्रं जपेदेकपादो भूत्वैवायुतसंख्यया ॥
देवस्य सन्निधावेवं वत्सरादाशु नश्यति ।
विश्वतः पाणिपादाब्जं विश्वतोक्षिशिरोमुखम् ॥
ज्वलन्तंविश्वमावृत्य तेजोराशिं शिवंस्मरेत्" ।

इति नमके (यु ? षु) नमो वः किरिकेभ्य इत्यस्य मन्त्रस्य प्रयोगः ।

अथ द्रापे अन्धसस्पत इत्यस्य प्रयोगः ।

"कृतोपवासमेकाहं जपेन्मन्त्रमथायुतम् ।
पुरश्चरण मेवंस्या दथचेद्धनकामना ॥

आर्द्रायां जुहुयादाज्यं कापिलं प्रयतोऽयुतम् ? ।
धनं बहु भवेदस्य महेशस्य प्रसादतः ॥
ज्वरे जातेऽस्य शान्त्यर्थं शिरस्तुः शुचिरोगिणः
जुहुयात्पञ्चसाहस्रीं दूर्वाणां ज्वरशान्तये ॥
अभिचारस्य शान्त्यर्थं वैकङ्कततरूद्भवाः ।
समिधो जुहुयाद्धोमसंख्या त्वत्रायुतं भवेत् ॥
महाजनकृतद्रोह शान्त्यर्थं होममाचरेत् ।
तुषमाज्येन सम्पृक्तं हविः संख्यापि चायुतम् ॥
सर्वभूतसमुत्पन्न भयशान्त्यर्थ माचरेत् ।
होमं तत्रायुतं संख्या होमद्रव्यतयोच्यते ॥
औदुम्बर्यश्च समिधस्तिलाश्चैव तथा यवाः ।
अनेन सर्वभूतेभ्यो भयमाशुविनश्यति ॥
अथापरः प्रयोगोऽत्र ग्रामस्य नगरस्य वा ।
मध्ये वह्निं समाधाय घृतं पिष्टं तिलास्तथा ॥
अयुतं जुहुयाच्छेषं बलिमश्वत्थपत्रके ।
निक्षिपेच्च पुनर्होमः सहस्राष्टकसंख्यया ॥
एवं कृते भैरवात्मा रुद्रो भूतैश्च संयुतः ।
दृश्यो जायेत तस्याथ महासिद्धिः प्रजायते ॥
तद्रूपं संस्मरेत्ताव दापद्भ्यश्च प्रमुच्यते ।
सितकञ्चुको डमरुकी स्निग्धोलसत्कुण्डलः
शूली कुण्डलितश्रवाः सतिलको मञ्जुक्वणन्नूपुरः
श्रीमन्निर्मलदन्तपक्ति किरण श्वेतायमानाननो
देवो भैरववेषभूषिततनुर्ध्येयो मृडानीपतिः" ॥
मकेषु द्रापे अन्धसस्पत इत्यस्य प्रयोगः ॥
अथातो या ते रुद्र इत्यस्य प्रयोगः ॥
"अष्टौ शतानि कुर्वीत प्राणायामांस्ततः परम् ।
सहस्राणि जपेत्पञ्च पुरश्चरणसिद्धये ॥
कन्यार्थी लभते कन्यां हुत्वा लाजान् घृतप्लुतान् ।
अपामार्गसमिद्धोमैरलक्ष्मीं नाशयेद्बुधः ॥

सर्वकल्मषनाशाय जुहुयाच्च तिलाहुतीः ।
ब्राह्मणादीन् वशेकुर्या द्धुत्वा खदिरसम्भवान् ॥
सितरक्तैर्नीलपीतैः सूत्रैः संवेष्टितान् क्रमात् ।
लक्षं हुत्वा घृतं सर्वान् कामानाप्नोति साधकः ॥
जुहुयाद्वस्त्रकामस्तु कुसुमैः कुमुदादिभिः ।
यद्वर्णं जुहुयात्पुष्पं तद्वर्णं वस्त्रमाप्नुयात् ॥
वृष्टि[1]कामः शुचौ देशे गोमयेनोपलेपिते ।
रक्तद्रव्येण तत्रैव मण्डलं प्ररिलेखयेत् ॥
मण्डलस्य पुरस्तात्तु नवं कुम्भं निधापयेत् ।
सूत्रेणावेष्टितं सम्यक् पूरितं गन्धवारिणा ॥
आवाहयेत्ततः कुम्भेसूर्य ? मेकाग्रमानसः ।
तत्रस्थमर्चयेद्देवं संयतः साधकोत्तमः ॥
पायसं जुहुयात्तत्र शतमष्टोत्तरं बुधः ।
ध्यायन्नेकाग्रधीः सूर्यं जपेन्मन्त्रसहस्रकम् ॥
एवं कुर्वीत सप्ताहं द्वादशाहमथापि वा ।
ततः प्रसन्नो भगवान् महावर्षं प्रमुञ्चति ॥
अहोरात्रमुपोष्यैव पुत्रकामः शुचिव्रतः ।
पायसं जुहुयादग्ना वष्टोत्तरशताहुतीः ॥
ऋतुस्नातां ततो भार्यां शुचिवस्त्रामलङ्कृताम् ।
भोजयेद्व्रतशेषं तु जपन्नष्टशतं बुधः ।
ब्राह्मणान् भोजयेच्चैव कारयेत्स्वस्तिवाचनम् ।
ततः पुत्रमवाप्नोति तेजस्विनमनामयम् ॥
अनिष्टदर्शनेचैव तथा दुःस्वप्नदर्शने ।
अभिचारकृतैर्दोषै रलक्ष्म्या च समावृते ॥
विग्रहाद्युपसर्गे च भये च समुपस्थिते ।
तथा च ग्रहपीडायां भूतावेशकृतेषु च ॥
एवमादिषु चान्येषु दोषेषूपहितेषु वै ।
पूर्वोक्तं मण्डलं कृत्वा नवकुम्भं तथैव च ॥

---

१. 'वृष्टिकाम' इत्यारभ्य 'लेखयेत्' इत्यन्तः घ. पाठः ।

गन्धोदकेन सम्पूर्णं सर्वं मङ्गलसंयुतम्।
एलालवङ्गकर्पूर निम्बुजातीफलैर्युतम् ॥
देवमावाह्य कलशे त्वर्चयेत्तत्र होमयेत् ।
मन्त्रेणानेन तं देव मष्टोत्तरसहस्रकम् ॥
अभिमन्त्र्य ततस्तेन ह्यात्मनो वा परस्य च ।
अभिषेकं प्रकुर्वीत सर्वदोषैः प्रमुच्यते ॥
यस्तु मन्त्रंजपेन्नित्यं प्रातः स्नात्वा सहस्रकम्
श्रीरारोग्यं च तेजश्च वर्द्धते तस्य सर्वदा ॥
संवत्सरं जपेद्यस्तु क्षीराहारो जितेन्द्रियः ।
अर्चनं च यथाशक्ति कुर्वन्नयुत मन्वहम् ॥
संसिद्धिमतुलां गच्छे दणिमादिगुणैर्युताम् ।
किं तस्य मानुषैर्भोगैः प्रसन्ने वै जगत्पतौ ॥
बहुना किमिहोक्तेन तच्चित्तस्तत्परायणः ।
तद्भावभावितोमन्त्री जपेन्मुक्तो भवेन्मुनिः ॥
द्रुतचामीकरप्रख्यं शक्तिपाणिं षडाननम् ।
मयूरवाहनारूढं स्कन्दरूपं शिवं स्मरेत् ॥

इति नमकेषु यातेरुद्र इत्यस्य प्रयोगः ॥ अथ 'इमा रुद्राय' 'मृडानो-रुद्र' इत्यनयोः प्रयोगः ॥ अयं द्विर्च एको मन्त्रः ।

" आदौ कृच्छ्रं चरित्वैकं जपेन्नवसहस्रकम् ।
पुरश्चरणमेवं स्या दथ दर्शे चतुष्पथे ? ॥
अग्निमाधाय जुहुया द्दधिसारमिहायुतम् ।
गवादीनां भवेच्छान्ति रथान्यत्कर्म चोच्यते ॥
राजवाहनशान्त्यर्थं जलं स्पृष्ट्वाऽयुतं जपेत् ।
प्रत्यहं पायसा तेन वाहनानां महीक्षितः ॥
शालां सम्प्रोक्षयेत्पश्चात् तज्जलेन विमिश्रितं ।
कृत्वोपयोज्यं यत्किंचित् वाहनेभ्यः प्रदापयेत् ॥
एवं वाहनशान्तिः स्यात् त्तिरश्चां शान्तये पुनः ।
आज्यमिश्रतिलानां तु जुहुयादयुताहुतीः ॥
अन्येषां शान्तये होमो दूर्वाणामयुतं भवेत् ।
दिव्यसिंहासनासिनं स्तूयमानं महर्षिभिः ॥
प्रसन्नवदनं ध्याये त्सौम्यं सोमार्द्ध धारिणम् ।"

इतीमां रुद्राय मृडानो रुद्रेत्यनयोः प्रयोगः ॥ अथ मानो महान्तमित्यस्य प्रयोगः ॥

“ उपवासत्रयं कृत्वा जपेत्पञ्चसहस्रकम् ।
पुरश्चरणसिद्धिः स्यात्प्र युञ्जीताथ कर्मणि ॥
स्वीयस्त्रीबालवृद्धानां शान्तिमिच्छन्निदं चरेत् ।
प्रतिसंवत्सरं चार्द्रानक्षत्रे स्यादुपक्रमः ॥
यवानां तिलमिश्राणां जुहुयादयुताहुतीः ।
अश्वत्थसमिधा होम अयुतं सर्पिषा हुतम् ॥
एवं कृते स्वदारादिजनरक्षा प्रजायते ।
किञ्चान्यत्रापि शान्त्यादावयुतं जपमाचरेत् ॥
राजा तु सर्वशान्त्यर्थमार्द्रायामयुताहुतीः ।
होमयेत्प्रतिमासं तु कृत इत्थं महीपतेः ॥
अन्तःपुरादयःसम्यक् वर्द्धन्ते नात्र संशयः ।
बालेन्दुमुकुटं देवं तरुणादित्यविग्रहम् ॥
ध्यायेन्नन्दीश्वराकारं गणेश्वरसमावृतम् । ”

इति नमकेषु मानो महान्तमित्यस्य प्रयोगः । अथ मानस्तोक इत्यस्य प्रयोगः ॥

“ कृछ्रमेकं चरित्वाऽऽदौ पात्र औदुम्बरे घृतम् ।
निधाय कापिलं तस्य कुर्याच्चैवाभिमन्त्रणम् ॥
सहस्रसंख्यया तेन स्वाग्नौ वा मथितेऽपि वा ।
जुहुयादष्टसाहस्रीं महाव्याहृतिभिः शतम् ॥
हुत्वाशेषमशित्वा च त्रिरात्रं तु व्रती भवेत् ।
ततश्च चरुभुक्पञ्चसहस्राणि जपेत् पुनः ॥
गुरवे पंच निष्काणि दद्यादेवं कृते पुनः ।
पुरश्चरणसिद्धिस्स्यात् प्रयोगार्हस्ततो भवेत् ॥
आयुष्कामो महीपालो नित्यवत्स्वीयपावके ।
मथिते वाऽनले होमं कुर्यादयुतसंख्यया ॥
होमद्रव्यं तिलाः सिक्ताः सर्पिषैवात्र कर्मणि[1] ।

---

1 अत्र कश्चिदंशान्योऽप्यस्तीत्यर्थं ‘’ इति चिह्नं कृतं पुस्तके ॥

स्वरक्षेच्छुर्महीपालोब्राह्मणैः कर्म कारयेत् ।
अष्टाशत्यात्मकावृत्या थस्मकृत्वाऽभिमन्त्रितं ॥
तदादायाष्टकाष्ठासु (राजानमभितः स्थितैः) ।
ब्राह्मणैर्नित्यवत्कार्यं रक्षाकर्म महीपतेः ।
किरणां ? चात्र रक्षा स्यात् दिक्ष्वष्टस्वपि भस्मतः ॥
राज्यश्रीवृद्धिकामस्तु मन्त्रसिद्धै द्विं जै र्नृपः ।
कारयेदथवा कर्म सद्यः सिद्धै द्विजैः भवेत् ॥
सद्यः सिद्धिप्रकारस्तु लब्ध्वाऽऽचार्यादमुं मनुं ।
एकरात्रमुपोष्याथ त्रिरात्रं सततं जपेत् ॥
सद्यः सिद्धोभवेदेवं कर्मार्होपि प्रजायते ।
एकादश द्विजन्मानो रुद्रंध्यात्वऽयुताहुतीः ॥
दधिमध्वाज्यसम्पृक्तैः जुहुयात् कमलैः सितैः ।
एवं कृते राज्यलक्ष्मी वर्द्धते नात्र संशयः ॥
आयुष्कामो महीपालः कारयेदयुताहुतीः ।
दूर्वाणामाज्यपृक्ताना मेवं जीवेच्चिरं नृपः ॥
अथ राज्ञो जन्मदिने राजतान् कलशान् शुभान् ।
ताम्रेण निर्मितान्वापि सहस्राष्टकसम्मितान् ॥
अष्टौ शतानि वा पाथः परिपूर्णान्विनिक्षिपेत् ।
मङ्गलानि च वस्तूनि कलशेषु विनिक्षिपेत् ॥
नववस्त्रेण तान् सर्वान् वेष्टयेच्च पृथक् पृथक् ।
देवं तेषु समाराध्य शतकृत्वोभिमन्त्र्य च ॥
आचार्यः स्नापयेद्भूपं कुम्भाम्भोभिः पृथक् पृथक् ।
एवं कृते महीपालो मुच्यते सर्वकिल्बिषात् ॥
अथ राज्ञोभि वृध्यर्थं सहस्राष्टकसंख्यया ।
कारयेज्जपमेकेन विप्रवर्येण नित्यशः ॥
अभिवृद्धिर्भवेदेवमनेन जपकर्मणा ।
शान्तिमिच्छन्महीपालो रत्नागारादिमध्यतः ॥
वाहनायुधशालासु सौम्यभे मासि मासि च ।
शान्त्यर्थमयुतावृत्त्या जपं होमं च कारयेत् ॥

आयुष्कामो महीपाल अयुतं होममाचरेत् ।
अश्वत्थसमिधस्तद्वदपामार्गोद्भवा अपि ॥
दधिमध्वाज्यसम्पृक्ता होमद्रव्यमिह स्मृतम् ।
गतायुषोप्यनेनायु र्वर्द्धते होमकर्मणा ॥
द्यूते च व्यवहारे च मन्त्रमेतज्जपेन्नरः ।
एवं कृते प्रजायेत तत्कर्मण्यपराजितः ॥
सुवर्णकामना यस्य स त्रिरात्रमुपावसन् ।
निरन्तरं जपं कृत्वा चरुभोजी ततोऽयुतम् ॥
जुहुयान्मधुपृक्तानि विल्वान्येवं कृते ततः ।
सुवर्णानां सहस्रं तु लभतेनात्र संशयः ॥
कन्याकामस्तु जुहुया दयुतं कुमुदान्यसौ ।
दधिमध्वाज्यपृक्तानि विन्दते कन्यकां शुभाम् ॥
अथान्यदुच्यते कर्म चरुभोजी तु वत्सरम् ।
नित्यमष्टसहस्राणि जुहुयात्स्वीयपावके ॥
अष्टौ शतानि वा द्रव्यं कापिलं घृतमुच्यते ।
एवं कृते प्रमुच्येत महतः पातकादपि ॥
वश्यकामो मलयज मभिमन्त्र्य ललाटके ।
धारयेचन्दनक्षोदं सर्वे वश्या भवन्ति हि ॥
प्रतिस्वजन्मभं होमं कुर्यादष्टसहस्रकम् ।
होमद्रव्यं त्वपामार्ग समिधोऽनेन कर्मणा ॥
अपमृत्युं न विन्देत देवदेवप्रसादतः ।
वृष्टिकामः सूर्यवारे मन्त्रेणानेन भास्करम् ॥
आराधयेज्जपापुष्पै रयुतैरत्र कर्मणि ।
रक्तोष्णीषी रक्तवासा रक्तगन्धानुलेपनः ॥
भूत्वा स्वयं कृते सूर्यो महावृष्टिं प्रमुञ्चति ।
यो दूरमार्गगामी स गृहीत्वा दश शर्कराः ॥
अष्टसाहस्रिकावृत्त्या त्वभिमन्त्र्य च ताः पुनः
विन्यस्य दिक्षु दशसु गच्छेत् क्षेमी ततो भवेत
सत्कर्मणां समारम्भे सर्वविघ्नजिदृक्षया ।
अयुतं तु जपेदेवमन्तं गच्छेत्स कर्मणाम् ॥

पुत्रकामस्तु जुहुया ल्लक्षमाज्येन संयतः ।
ततो वंशकरं पुत्रं गुणिनं ? लभते ध्रुवम् ॥
यं यं जनं जेतुमिच्छेत् तं तं वै सिकताकृतिम् ।
विधाय तत्प्रतिकृतिं मूर्ध्निस्थित्वाऽयुतं जपेत् ॥
अवश्यं कर्मणानेन सर्वत्र विजयी भवेत् ।

दधानमेकादशधा विभक्तं
देहं विशुद्धस्फटिकप्रकाशम् ।
तेजोनिधिं शूलिनमिन्दुमौलिं
विचिन्तयेदत्र सदैव रुद्रम् " ॥

इति नमकेषु मानस्तोक इत्यस्य प्रयोगः ॥ अथ आरात्त इत्यस्य प्रयोगः ॥

" दिनत्रयमुपोष्याथ त्रिरात्रं सततं जपेत् ।
पुरश्चरणमेवं स्यात् प्रयुञ्जीताथ कर्मसु ॥
आयुष्कामः स्वकीयाग्नौ नित्यवज्जुहुयात् घृतम् ।
अष्टौ सहस्राण्यपि वा तथैवाष्टशतानि च ॥
दधिमध्वाज्यपृक्तानां दूर्वाणामपि चा हुतीः ।
पूर्वोक्तरीत्या जुहुया देवमायुः प्रवर्द्धते ॥
अथापरः प्रयोगोयं प्रतिजन्मर्क्षमात्मनः ।
प्रत्यार्द्रभं च कुर्वीत जपमष्टसहस्रकम् ॥
प्रत्यार्द्रभं प्रतिद्रव्यं जुहुयादयुताहुतीः ।
होमद्रव्याणि दूर्वाश्च तथाऽपामार्गसम्भवाः ॥
शमीतरुसमुद्भूताः समिधश्च तिलास्तथा ।
एतान्युक्तानिदध्याज्य मधुभिः स्युरथोनिशि ॥
यावत्पञ्चसहस्राणि जपे त्तावत्प्रदक्षिणम् ।
कुर्या देवं कृते दीर्घमायुराप्नोत्यसंशयम् ॥
चिरंजीवनकामस्तु राजा जन्मदिनेऽयुतम् ।
जुहुयाद्वक्ष्यमाणैस्तु द्रव्यैः प्रत्येकमादरात् ॥
दधिमध्वाज्यसम्पृक्ता अपामार्गशमीतिला: ।
दूर्वा अपि च होमार्हं द्रव्याण्यत्रोदितानि वै ॥

अनेन कर्मणा राजा दीर्घमायुरवाप्नुयात् ।
वह्नि होमे त्वशक्तानां होमः स्रोतसि जायते ॥
होममात्रेऽप्यशक्तानां जप एवेष्टसाधनम् ।
लक्ष्म्यायुःकामना यस्य जुहुयात्सोऽयुताहुतीः ॥
मध्वाक्तैस्तण्डुलैः शुक्लैः वर्द्धते तस्य चायुषः ।
श्रीकामोऽर्कस्य कुसुमै रयुतैः पूजयेच्छिवम् ॥
उच्चारयन्नमुं मन्त्रमेकैकं कुसुमं न्यसेत् ।
अनेन कर्मणा लक्ष्मीर्वर्द्धते नात्र संशयः ॥
आलये पश्चिमद्वारे देवस्यार्चालयेऽपि वा ।
प्रत्यार्द्रभं ब्रह्मचारी भूशायी सम्यतेन्द्रियः ॥
विगतक्षारलवणचरुभोजी जपेन्मनुम् ।
अभितस्तु महेशानमेकमेकं सहस्रकम् ? ॥
एवं कृते शतायुस्तु भवेत्सप्तसु जन्मसु ।
पूर्वोक्ताहारनियमे ह्यशक्तौ भैक्ष्यमाचरेत् ॥
कुर्वाणं सन्निधौ देव्या देवमानन्दताण्डवम् ।
हुताशनधरं ध्यायेत्तप्तकाञ्चनसन्निभम् ॥

नमकेषु आरात्त इत्यस्य प्रयोगः॥ अथ स्तुहि स्तुतं गर्तसद् दमित्यस्य प्रयोगः।

एकरात्रमुपोष्याथ त्रिरात्रं सततं जपेत् ।
पुरश्चरणमेवंस्यात् प्रयोगार्हस्ततो भवेत् ॥
विद्विड्विनाशकामस्तु जुहुयाल्लक्षमाहुतीः ।
विषतैलसमाक्तास्तु विकङ्कततरूद्भवाः ॥
समिधो द्रव्यमत्रस्यात् श्मशानाग्नौहुतिर्भवेत् ।
शत्रवो नाशमायान्ति वेगेनानेन कर्मणा ॥
अथान्यदुच्यते कर्म तत्र देवस्य सन्निधौ ।
भस्मपाणिः सपत्नस्य नामग्रहणपूर्वकम् ॥
शुचिर्जपेदमुं मन्त्रं संख्या त्वत्रायुतं भवेत्
एवं कृते रिपोर्देहे ज्वरो जायेत वै महान् ॥
श्वेतसिद्धार्थकैः शुद्धो जुहुयादयुताहुतीः ।
मसूरिकाख्यो जायेत रोगः शात्रवगात्रके ॥

शत्रोर्गृहेऽथवा तस्य क्षेत्रादिष्वपिवावटम् ।
खातयित्वात्रनिखने दमुं मन्त्रमुदीरयेत् ॥
शर्कराश्च तथा कल्प रोमास्थ्यादिश्च कुत्सितम् ।
एवं कृते सपत्नस्य नाशो वेगेन जायते ॥

उद्यद्भास्करकोटि-
प्रकाशमाकाशनिलयमतिभीमम् ।

भीतिहरमभयवरदं
ध्यायेद्रुद्रं सघोरं तनुम् ॥

शरयात्मा महेशानो ध्यातव्य इति केचन" ॥

इति स्तुहि श्रुतमित्यस्य प्रयोगः॥ अथ परिणो रुद्रस्येत्यस्यप्र योगः॥

" कृच्छ्रमेकं चरित्वादौ जपेच्च नव वासरान् ।
तत्र प्रतिदिनं पञ्च सहस्राणि जपो भवेत् ॥
पुरश्चरणमेवं स्यात् अथचेत्पुत्रकामना ।
दावानलसमालीढ पलाशखदिरोद्भवाः ॥
समिधो दधिमध्वाज्य पृक्ता वैश्वानरेऽयुतम् ।
जुहुयात् पश्चिमद्वारे महेशस्यालये शुभे ॥
एतत्कर्म सुगुप्तं स्यात् कर्मणानेन वै ध्रुवम् ।
लभते रुद्रसदृशं पुत्रं वंशकरं परम् ॥
अथापरः प्रयोगोऽत्र प्रारम्भः स्यादमादिने ।
कृष्णाष्टम्यामुतासौ स्या दार्द्रायामपिवा पुनः ॥
भवेतां दम्पती तत्र पूर्वेद्युश्चरुभोजिनौ ।
स्वगृहे वाथ गोष्ठे वा छायायां पिप्पलस्य वा ॥
कर्मैतदाचरेत्तस्य प्रक्रियैषा प्रकीर्तिता ।
मन्त्राक्षराणि यावन्ति तावतः कलशान् शुभान् ॥
तन्तुभिर्वेष्टितान् तीर्थपाथसा परिपूरितान् ।
वर्तुलं स्थापयेन्मध्ये तेष्वेकैकं महद्धटम् ॥
उच्चैस्तरं निधायाथ सोममावाहयेन्मृडम् ।
आयातु भगवान् देवः कैलासा दितिवैब्रुवन् ॥

आवाह्य गन्धपुष्पाद्यै रभ्यर्च्य च ततः परम् ।
आरभ्यमध्यकलशं कलशे कलशे पुनः ॥
मन्त्रादितो बिन्दुयुतं न्यसेदेकैकमक्षरम् ।
ततो नव सहस्राणि जपेन्मन्त्रं समाहितः ॥
ततो मधुघृताक्तानां श्यामाकानां तथा पुनः ।
लाजानां तु सहस्राणि जुहुयादष्टसंख्यया ॥
तत एकासने जायापती संस्थाप्य संयतौ ।
मध्यादिक्रमतः कुम्भान् तान्नादाय पृथक् पृथक् ॥
तत्तदक्षर रूपेण संस्मरन् पार्वतीपतिम् ।
स्नापयेत्तौ घटाम्भोभि र्ब्राह्मणानथ भोजयेत् ॥
[1]अष्टौ सहस्राण्यथवा तावन्त्येव शतानि वा ।
एकादशान्तं अथवा भोजयेत् शक्तितो द्विजान् ।
तत्कुम्थं वस्त्रव्रीह्यादीन् आचार्याय समर्पयेत् ।
किन्तु तं भोजयित्वास्मै दक्षिणां निष्कपञ्चकम् ।
दद्यान्निष्कत्रयं वाऽथ भुञ्जीयातां तु दम्पती ॥
एवं तयोर्भवेत्पुत्रो दीर्घायुः सुगुणालयः ।
पूर्वोक्तकर्माशक्तश्चेत् पश्चिमद्वारसंयुतौ ? ॥
महेशस्यालये मन्त्रं जपेदयुतसंख्यया ।
ततो जपन्मन्त्रममुमहोरात्रं प्रदक्षिणम् ॥
कुर्यात्तत्रोदयादस्त मया दस्तादथोदयात् ।
तत्र विघ्नाः प्रजायन्ते तस्माद्विघ्नेशमर्चयेत् ॥
पुरश्चरणसिद्धस्य कर्मैतत्पुत्रकामदम् ।
अन्यथा विपरीतं स्यात् गुरुं यत्नेन पूजयेत् ॥
अथापरः प्रकारोत्र दीक्षया दिवसानि तु ।
अष्टौ शतानि वाथैक चत्वारिंशद्दिनानि वा ॥
किञ्चैकविंशतिं तत्र पश्चिमद्वारसंयुते ।
देवालयेप्रतिदिनं चरुभोजी जपेन्मनुम् ॥
अष्टौ शतानि तावत्यः प्रदक्षिणवरक्रियाः ।
अश्वत्थद्रुममूलानि दृष्टिगम्यानि यानि वै ॥

---

१. 'अष्टौ' इत्यारभ्य 'समर्पयेत्' इत्यन्तं घ पाठः ।

तेषु पूर्वोत्तरान्मूला दारभ्याष्टसहस्रकम् ।
जपेद्यावन्ति मूलानि तत्र तत्र पृथक् पृथक् ॥
अथाश्वत्थ चतुर्दिक्षु सहस्राष्टकसंख्यया ।
दिने दिने जपेन्मन्त्रं एवंकर्म समापयेत् ।
दीक्षिता ब्राह्मणाः तान्वै भोजयेत्तर्पयेदपि
एवं कृते वंशकरं धर्मिष्ठं लभते सुतम् ॥
गजचर्मावृततनुं स्फुरत्प्रहरणोज्वलम् ।
सर्वपापहरं ध्यायेत् देवं कुंजरभेदिनं ? " ॥

इति नमकेषु परिणो रुद्रस्येत्यस्य प्रयोगः। अथ मीढुष्टमेत्यस्य प्रयोगः।

" एकरात्रं जपेत्पञ्च सहस्राणि सुसंयतः ।
पुरश्चरणसिद्धिःस्यात् प्रयोगार्हस्ततो भवेत् ॥
अर्थनाशभये प्राप्ते तथैव प्राणसंशये ।
तस्करादिभये चैव जुहुयात्सर्पिषाऽऽहुतीः ॥
पञ्चैव तु सहस्राणि भयेभ्यो मुच्यते भृशम् ।
मङ्गलायतनं देवं युवानमतिसुन्दरम् ॥
ध्यायेद्वनचराकार मागच्छन्तम् पिनाकिनम् " ।

इति नमकेषु मीढुष्टमेत्यस्य प्रयोगः। अथ विकिरिदेत्यस्य प्रयोगः।

" त्रिरात्रं चरुभोजीसन् सहस्राणि दशैव तु ।
जपेत्तदन्तेकुर्वीत सहस्राणि दशैव तु ॥
प्रदक्षिणान्यमुं मन्त्रं जपन्निशि शिवालये ।
पुरश्चरणसिद्धिः स्यात् प्रयुञ्जीताथ कर्मसु ॥
महाजनविरोधेतु विरोधस्यापनुत्तये ? ।
दधिमध्वाज्यसम्पृक्ता यज्ञार्हसमिधोऽखिलाः ॥
अयुतं जुहुयादेवं भयं तेभ्यो न जायते ।
जेतुकामस्तु सर्वान्वा अपामार्गसमिद्धुतिम् ॥
शतसाहस्रिकां कुर्यात्समिधस्तास्तु सर्पिषा ।
कपिलेन समक्ताःस्यु रेवं सर्वजयो भवेत् ॥
तिरश्चो जेतुकामश्च समिधां विल्वभूरुहः ।
दधिमध्वाज्यपृक्तानां जुहुयाल्लक्षमाहुतीः ॥

एवं कृते वराहादिः वश्यमाप्नोत्यसंशयः।
सलिलं जेतुकामस्तु जलमध्येस्वपावकं॥
स्थापयित्वा कापिलेन सर्पिषालक्षमाहुतीः।
जुहुयात्कर्मणानेन भयमद्भ्यो न जायते।
यद्यज्जेतुं मतिस्तत्तन्नामग्रहणपूर्वकम्॥
कापिलाज्येन जुहुया ल्लक्षमेकमतन्द्रितः।
यदुद्दिश्य भवेद्धोमो भयं तस्मान्न विन्दति॥
प्रसन्नवदनं सौम्यं रचितोद्वाहमण्डनम्।
अम्बया सहितं ध्यायेत्सुरसङ्घैरभिष्टुतम्"॥

इति नमकेषु विकिरिदेत्यस्य प्रयोगः। अथ सहस्राणि सहस्रधे-त्यस्य प्रयोगः।

"कृच्छ्रमेकं चरित्वाऽऽदौ जपेल्लक्ष सहस्रकम्।
पुरश्चरणमेवं स्यात्प्रयुञ्जीताथ कर्मसु॥
सचिवादिप्रधानानां पुरुषाणामुपद्रवे।
तच्छान्तये महीपालः कारयेदयुताहुतिम्॥
समिधस्तत्र शाल्मल्यो विकङ्कतभवा स्तथा।
व्रीहयश्च यवाश्चापि होमद्रव्यं तिला अपि॥
सर्वमेतद्धृताक्तं स्यान्नश्यन्त्येवमुपद्रवाः।
अथ मारणकामश्चेत् प्रधानपुरुषस्य च॥
समीपे दक्षिणामूर्ते र्जपेच्छतसहस्रकम्।
ततो वल्मीकसम्भूत मृदा लिङ्गं प्रकल्प्य च॥
मन्त्रेणानेनाभिषिञ्चे द्यावच्छीर्णं भवेद्धि तत्।
एवं कृते भवेन्मृत्युः प्रधानपुरुषस्य वै॥
यदिचेन्मरणादेनं रक्षितुं कांक्षते तदा॥
आदाय तां मृदं शीर्णा मापगायां विनिक्षिपेत्।
तत्तीरेऽथस्वकीयाग्नौ जुहुयादयुताहुतीः॥
होमद्रव्यं भवेदत्र घृताक्ताः शुक्लतण्डुलाः॥
मरणोपशमस्तस्य जायतेऽनेन कर्मणा॥
महाकान्तारगामी तु कृत्वा भस्माभिमन्त्रणम्॥
अष्टसाहस्रिकावृत्या तेन गात्रानुलेपनम्।
कृत्वागच्छेत्ततस्तस्य भीतिः कापि न जायते।

रक्षोभ्योऽभयकामस्तु सान्नं वैडालमामिषम् ॥
बलिं हरेच्चतुर्दश्यां कृष्णायां निशिसंयतः ॥
बलिदेशः श्मशानं स्या देवं रक्षोभयं नहि ॥
उग्रशासकभूपाल कोपोपहतिशान्तये ।
सौवर्णं शासकं कृत्वा जुहुयात्तस्य सन्निधौ ॥
अष्टौ सहस्राण्याज्येन कुकुटस्यामिषेण तु ।
बलिं हरेत्कृते चेत्थं शासकाद्विप्रमुच्यते ॥
दक्षिणासमुदायेन देयास्यादनकर्मणि ।
ऋत्विग्भिः साविभज्या स्यात्स्वस्व कर्मानुसारतः ॥
निष्कत्रयमथैकं वा निष्कं होमे तु दक्षिणा ।
वसनान्यपि देयं स्या द्दक्षिणात्वेन शक्तितः ॥
अथ दैवोपद्रवाविष्टो जुहुयात्तस्यशान्तये ।
सर्पिषाष्टसहस्राणि नश्येयुस्ते ह्युपद्रवाः ॥
सर्वपापहरं देवं सर्वाभरणभूषितम् ।
सर्वायुधधरं ध्याये त्सर्वलोकमहेश्वरम् " ॥

इति सहस्राणि सहस्रधेत्यस्य प्रयोगः । इति नमकेषु दशमोनुवाकः । अथ सहस्राणि सहस्रश इत्यारभ्य चतसृणां प्रयोगः । अत्र ऋकूचतुष्टयमप्येकधर्मसाधनम् ॥

"चान्द्रायणं चरित्वाऽऽदौ जपेत्पञ्चसहस्रकम् ।
पुरश्चरणसिद्धिःस्यात् प्रयुञ्जीताथ कर्मसु ॥
आभिचारिककामस्तु राजा होमं प्रकारयेत् ।
स्वदेशजातैर्विप्राग्र्यै र्लक्षसंख्याऽऽहुतिर्भवेत् ॥
शाल्मलीशालवेणूनां वेत्रस्य च शरस्य च ।
समिधस्त्वर्क ? तूलेन वेष्टिताः शशकस्य च ॥
रक्तेणाक्ताः इह ग्राह्या होमे द्रव्यतया पुनः ।
किञ्चस्निग्धेन सूक्ष्मेण पिष्टेन द्विषदाकृतिम् ॥
कृत्वा क्रमेण तां छित्वा सहस्राष्टकसंख्यया ।
जुहुयादित्थमाचीर्णे शत्रवो नाशमाप्नुयुः ॥
अभिचारदिनेष्वेतैर्मन्त्रैः कृत्वा दिने दिने ।
जुहुयात्पञ्चसाहस्रीं होमद्रव्यमथोच्यते ॥

दधिमध्वाज्य सम्पृक्ता दूर्वा इत्थं कृते सति ।
राज्ञः कारयितुस्तस्य दोषाः स्युर्नाभिचारिकाः ॥
दंष्ट्राकरालवदनं ज्वलज्ज्वलनमूर्धजम् ।
बिभ्राणं त्रिशिखं दीप्तं ध्यायेद्भुजगभूषणम् " ॥

इति नमकेषु सहस्राणि सहस्रश इत्यारभ्यर्क्चतुष्टयस्य प्रयोगः । अथ ये वृक्षेष्वित्यारभ्य ऋक्त्रयस्य प्रयोगः । अत्र पुरश्चरणादि सर्वं पूर्ववत् ज्ञेयम् । अथयेपथामिति द्वयोः प्रयोगः ॥

" कृछ्रमेकं चरित्वाऽऽदौ जपेत्पञ्चसहस्रकम् ।
पुरश्चरणमेवं स्या त्प्रयोगोऽथाभिधीयते ॥
पुत्रकामः स्वदाराणामृतौ गमनवासरे ।
स्वाग्नावष्टसहस्राणि जुहुयाद्द्रव्य मत्र तु ॥
कापिलाज्यविमिश्रंतु कापिलं पय उच्यते ।
हुत्वैवमृतुगामी स्या त्पुत्रो वंशकरो भवेत् ॥
महातीर्थफलेप्सुश्चेत् घृताक्तैस्तिलतण्डुलैः ।
हुत्वा चाष्टौ सहस्राणि गच्छेत्तीर्थमनालपन् ॥
तीर्थेस्नात्वा गृहानेत्य स्वाग्निमाराध्य वै ततः ।
वाग्यमं विसृजेत्तीर्थफलमृच्छेद्यथार्थतः " ॥

ध्यानन्तु सहस्राणि सहस्रश इत्यत्रोक्तं विज्ञेयम् ॥

इति ये पथामित्यनयोः प्रयोगः ॥ अथ य एतावन्तश्चेत्यस्य प्रयोगः । अत्र तु पुरश्चरणं ये पथामित्यत्रोक्तमनुसन्धेयम् । इति नमकेषु य एतावन्तश्चेत्यस्य प्रयोगः ? ॥ अथ नमो रुद्रेभ्य इत्यरभ्याऽऽसमाप्तेर्यो यजुष्को यन्त्रस्तस्य प्रयोगः ॥

" गृह्णीयात्संयतो दीक्षां दिवसेष्वेकविंशतौ ।
प्रथमे पञ्चके दुग्धं द्वितीये भक्षयेत् फलम् ॥
अथोपवासः पश्चाच्च पूर्ववत्पञ्चकद्वयम् ।
एवं कृत्वा ततः पश्चा द्धविष्याशी सदा जपेत् ॥
तावन्ति दिवसान्येवं ततःपञ्च दिनानि तु ।
गलद्घ्नजलेस्थित्वा जपित्वाऽथैकवासरम् ॥

अघमर्षणकर्मोक्तविधिना संयतो जपेत्।
दद्यात्सुवर्णनिष्काणि दशाऽऽचार्यस्य दक्षिणाम् ॥
शुश्रूषां वापि कुर्वीत द्रव्याभावे तु तत्समम्।
एवं कृते भवेत्सिद्धिः पुरश्चरणकर्मणः ॥
अन्नकामः स्वकीयाग्नौ नित्यवज्जुहुयात् घृतम् ॥
संख्या त्वष्टसहस्राणि भवेदष्टौ शतानि च ॥
यावज्जीवं लभेतान्नं बहुधाऽनेन कर्मणा।
अथापरः प्रयोगोत्र दर्शेस्वाग्नौ हुतिर्भवेत् ॥
द्रव्यं तु कापिलं सर्पिः संख्या त्वष्टसहस्रकम्।
अथर्वशिरसि प्रोक्त विधानेनार्चनं भवेत् ॥
तत उत्पद्यते कृत्या रक्ताङ्गी रक्तमूर्धजा।
रक्तनेत्रा तया सर्वं साधयेत्स्वात्मसंमतम् ॥
कर्मणोस्य समारम्भे अजारुधिरपूरितान्।
चतुरः कलशान् तत्र स्थापयित्वा तु संयतः ॥
तर्पयेदन्यथाऽऽत्मानं नाशयेन्नात्र संशयः।
भवेद्यस्य कलाज्ञानकामना सोऽयुताहुतीः ॥
जुहुयात्सर्पिषा वह्नौ कलाज्ञानं ततो भवेत्।
जाति स्मरणकामस्तु जुहुयादयुताहुतीः ॥
पायसा कापिलेनैव क्रमाज्जातिस्मरो भवेत्" ।

ध्यानप्रकारस्तु सहस्राणि सहस्रश इत्यत्रोक्तो विज्ञेयः ॥

इति नमकेषुनमोरुद्रेभ्य इत्यस्य प्रयोगः ॥ इति नमकप्रयोग एकादशानुवाकः। अथ पूर्वोक्तेषु प्रयोगेषु दक्षिणेयत्ता निरूप्यते।

"दक्षिणा ह्युत्तममध्यमाधमेति त्रिधा मता।
तत्रसौवर्णनिष्काणां दशसाहस्रिकोत्तमा ॥
तदर्द्धं मध्यमा प्रोक्ता तृतीया त्रिसहस्रिका।
उत्तमा त्रिशती वास्यात् द्विशतीमध्यमा मता ॥
शतमत्राधमा ज्ञेया प्रकारः कीर्त्यतेऽपरः।
उत्तमा तु चतुःषष्टिःस्तदर्द्धं मध्यमा स्मृता ॥

चतुर्विंशतिरन्या स्या दथान्यो विधिरुच्यते ।
सहस्रदक्षिणा देया दशपूरुषकर्तृके ॥
शतानि पञ्च देयानि ऋत्विक्पञ्चककर्तृके ।
अथैककर्तृके देयं शत त्रयमिति स्थितिः ॥
सर्वत्र द्विगुणं दद्या दाचार्याय तु दक्षिणाम् ।
बहुपूरुषनिष्पाद्य उत्तमा प्रतिपूरुषम् ॥
अथैककर्तृके कर्तु रेकस्यैवोत्तमा मता ।
राज्ञां तत्सदृशानां च दक्षिणा कथितोत्तमा ॥
अन्येषां मध्यमोदाति दक्षिणा दाननिर्णयः ।
अनुक्तदक्षिणाकेषु प्रयोगेष्वियमीरिता ॥
विभवे सति यो मोहान्नकुर्याद्विधिविस्तरम् ।
नैव तत्फलमाप्नोति प्रलोभाक्रान्तमानसः" ॥

इति दक्षिणेयत्ता ॥

"अत्रन्यूनातिरिक्तोक्ति प्रत्यवाय जिहीर्षया ।
स्तौमिस्तम्बेरमाधीशं चर्मनिर्मितवाससम् ॥

जय, जय, महाभैरव, महाभीम भूतभूषितमूल, कुण्डलिकुण्डलालङ्कृत, अतिघनविलसित तडिदुपमितवलदुरुतर करवाल । निखिल निगमोपगीयमान सुरवरकरनिकरविरचित चारुचरणशृङ्गार, करकमलकलितकपाल । सरासिजासनविस्तारित समस्तव्यस्त समस्तजगद्विस्तार संहार सम्भारसन्नद्ध निर्गुण निरवधिकपरिमाण नीहारपरीवार मरीचिविरिञ्चिव्यापार पात्रीजलललित जटाजूटाभिराम, दुरितहर, अपरदिगङ्गनासम्भोग सराग पतङ्ग भङ्ग्यालिङ्गितोत्तमाङ्ग, भ्रूमध्यनयन मथितमदन मद, मदोन्मत्तमधुकर झंकारसङ्काशनिज शृङ्गसंरावकिङ्किणी क्वणित ललित पदाहतिक्लिन्न महीमण्डलाधार, अण्डजपति प्रस्तूयमान ताण्डवाडम्बर, फूत्कारोत्कर्षध्वस्तदैत्यदानवसंघात, निरन्तरान्तरित शान्तान्तःकरण । अनवरत धीर ध्वान गम्भीर घर्घरगल गवय स्फूत्कार सम्भिन्न गह्वर, गुणराजि विराजमान धराधराधीशकन्यकाकान्तिसङ्क्रान्तनिजकलेबरैकदेश, अखिल जगदधीश, महेश । नमस्ते नमस्ते नमस्ते ॥

आदौ कर्मवशादुदञ्चदखिल त्रैलोक्य मूलाङ्कुरः
पश्चात्पल्लवितोत्तरङ्गविभव श्रेणि समुन्मेषकम् ।
अन्ते लोचनमुद्रणाविरचना भंगि प्रगल्भं ? महो
फाले लोचनमाविरस्तु पुरतः संसारसंमोहनम् ॥
आधारश्चतुराननस्य करकासम्बद्ध पाथःस्तृते
राधेयं गिरिकन्यका कुचतटा भोगस्य भाग्याकृतेः
आशापालकपाल मालमखिलं ब्रह्माण्ड भाण्डस्थिते
राशापाशविमोचनाय ऋणधान्यन्तर्मनस्तन्महः ।

इति नमकमन्त्राणां प्रयोगविधिः ॥ समाप्तं सकलं श्री रूद्रविधानं ॥

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नोपचितेऽथषष्ठ
स्तुङ्गस्तरङ्गोयमगादगाधः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे षष्ठस्तरङ्गः

## सप्तमस्तरङ्गः ।

अथ षोडशर्च पुरुषसूक्तविधिः । ऋग्विधाने ॥

" वक्ष्ये पुरुषसूक्तस्य विधानं त्वर्चनं प्रति ।
अग्निकार्यं जपविधिः स्तोत्रं चैव तदात्मकम् ॥
कुर्याद्यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ।
प्रथमं विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे तथा ।
पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे तथा ॥
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिदेशे तु दशमीं हृदये तथा ।
एकादशीं स्कन्धदेशे द्वादशीं वामबाहुके ।
त्रयोदशीं दक्षिणे च आस्यदेशे चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पश्चाद्धोमं समाचरेत् " ।

होमं समारभेदित्युपलक्षणम् । तस्माज्जपे पूजायां होमे वाऽय-मेव न्यासप्रकारः । एवं न्यासविधिं कृत्वा पञ्चाङ्गानि समाचरेत् । ब्राह्मणोस्येत्यादिकाभिः ऋग्भिः पञ्चाङ्गकल्पना। ब्राह्मणोस्य मुखमा-सीदित्याद्याः पञ्च ऋचः पञ्चाङ्गन्यासो ग्राह्यः । ताश्चाश्वलायनशारदा-पाठ क्रमयुक्ताः । हृदयं शिरः शिखा कवचमस्त्रं चेति पञ्चाङ्गानि । ब्राह्मणोस्य मुखमित्यृचं पठित्वा हृदयाय नम इति हृदये॥ 'चन्द्रमा मनस' इति पठित्वा शिरसे स्वाहेति शिरसि। नाभ्या आसीदन्त-रिक्षमिति पठित्वा शिखायै वषट् इति शिखायाम्। सप्तास्या-सन्निति पठित्वा कवचाय हुमिति कवचं। यज्ञेन यज्ञमिति पठित्वा अस्त्राय फटित्यस्त्रम्। एतच्च न्यासद्वयं सङ्कल्पानन्तरं कर्तव्यम्। तद्यथा। अमुकदेशे अमुककाले अमुककामनया पुरुषसूक्तस्य जपं सूक्तेन होमं विष्णवाराधनं वा करिष्य इति सङ्कल्प्य पूर्वोक्तं न्यासद्वयं विधायर्षिदैवतछन्दांस्यपि विदित्वा जपादिकमाधीयते ?॥

" आद्ययाऽऽवाहयेद्देव मृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्या त्पाद्यं चैव तृतीयया ॥
चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनं तथा ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥
यज्ञोपवीतमष्टम्या नवम्याऽऽभरणं तथा ।
दशम्या गन्धदानं स्या देकादश्या च माल्यकम् ॥
द्वादश्या धूपदानं स्यात् त्रयोदश्या च दीपकम् ।
चतुर्दश्या तु नैवेद्यं पञ्चदश्या नमस्क्रिया ॥
उद्वासनं तु षोडश्या उपचारास्तु षोडश ।
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनीयकम् ॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव च ।
अर्चितं तेन वै सर्वं त्रैलोक्यं सचराचरम् ॥
दक्षिणां तु यथा शक्त्या षोडशेन प्रदापयेत् " ।

पूजादिसाद्गुण्यार्थं या दक्षिणा दीयते तां षोडशेन यज्ञेन यज्ञमयजन्तेत्यनेन मन्त्रेण दद्यादित्यर्थः ॥

" ततः प्रदक्षिणं कृत्वा जपं कुर्यात्समाहितः ।
यथाशक्ति जपित्वा च सूक्तं चास्मै निवेदयेत् ॥

देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा ।
कारयेत्प्रथमर्चा तु प्रोक्षणं तु द्वितीयया ॥
तृतीययाऽग्निमादध्या चतुर्थ्या तु समिन्धनम्
पञ्चम्या त्वाज्यसंस्कारःश्चरोश्च श्रपणं तथा ॥
षष्ठयाऽनलमध्ये तु कल्पयेत्पद्ममासनम् ।
चिन्तयेत्तत्र देवेशं कालानलसमप्रभम् ॥
विवृतास्यं वाहशीर्षं रक्तास्यं रक्तलोचनम् ।

वाहो हयः एवं देवं ध्यात्वा सप्तम्याद्यादिभिः? पञ्चभि र्ऋग्भिः क्रमेण नैवेद्य ताम्बूलादिभिः पञ्चोपचारपूजां देवस्यानुज्ञया कुर्यादित्याह–

"ततो गन्धं च पुष्पं च धूपदीप निवेदनम् ।
अनुज्ञाप्य ततः कुर्यात् सप्तम्यादि यथाक्रमम् ॥
समिधः प्रत्यृचं पूर्वं जुहुया दभिधारिताः ।
ततो घृतेन जुहुया चरुणा च ततः पुनः ॥
एवं हुत्वा ततस्तस्य समीपे स्तोत्र मुच्चरेत् ।
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।
नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ।

ओं नमो भगवते वासुदेवाय शुद्धज्ञानस्वभावाय ।

देवानां दानवानां च सामान्य मसि दैवतम्
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥
एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्ष श्चानुमन्ता च गुणमायासमावृतः ॥
संसारसागरं घोर मनन्तक्लेशसाधनम् ।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥
न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥
नैव किञ्चित्परोक्षं ते न प्रत्यक्षोऽसि कस्यचित् ।
नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित्

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगिनां परमां सिद्धिं वदन्ति परमं विदुः ? ॥
अहं भीतोस्मि देवेश संसारेऽस्मिन् भयावहे ।
पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥
कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरेपि गते वापि वर्द्धते मे महद्भयम् ॥
त्वत्पादकमलादन्य न्नमेजन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥
विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमार्जितम् ।
जन्मान्तरेऽपि मे देव मा भूदस्य परिक्षयः ॥
दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम ।
यदिनाथश्च विन्देयं तावतास्मि कृती सदा ॥
अकामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् ॥
इत्येवमनया स्तुत्वा स्तुत्वा देवं दिने दिने ।
किङ्करोस्मीतिचात्मानं देवाय विनिवेदयेत्" ॥

जितं ते पुण्डरीकाक्ष नमस्तेत्यारभ्यैतावत्पर्यन्तं स्तोत्रम् ॥ अथ फलविशेषादितिकर्तव्यता विशेषप्रशंसा च ॥

"पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ।
आत्मज्ञानमिदं पुण्यं योगज्ञानमिदं परम् ॥
फलाहारो जपेन्नित्यं पश्यन्नात्मानमात्मनि ।
फलंभुक्त्वोपवसे न्मासमद्भिश्च वर्तयेत् ॥
अरण्ये निवसेन्नित्यं जपन्निममृषि मुनिः ।
ऋग्भिस्त्रिषवणं काले स्नायादप्सु समाहितः" ॥

ऋषि मन्त्रः ॥ इममृषिं पुरुषसूक्तात्मकम् । ऋग्भिस्त्रिषवणमिति । पुरुषसूक्तान्तर्गताभिः समस्ताभि ऋग्भिः । स्नानकाल एताभि ऋग्भिर्मार्जनमघमर्षणं च यथा शक्ति कुर्यादित्यर्थः ॥

"आदित्यमुपतिष्ठेत सूक्तेनानेन नित्यशः ।
आज्याहुतीरनेनैव हुत्वैव चिन्तयेदृषिम्" ॥

अत्रर्षिःसूक्तद्रष्टा नारायण एव ॥ तं चिन्तयेत् ॥ एवं मासं फलाहारं मासमुदकाहारं च कृत्वा त्रिणि वर्षाणि फलाहारः सन् पौरुषं सूक्तं जपेत् ॥ शक्तश्चेद्द्वादश वर्षाणि । एवं कृते साक्षाद्देवो दृश्यत इत्याह—

"ऊर्ध्वं मासात् फलाहार स्त्रिभिर्वर्षैर्जपेदिदम् ।
तद्भक्तस्तन्मना युक्तो दश वर्ष मनन्यभाक् ॥
साक्षात्पश्यति तं देवं नारायण मनामयम् ।
ज्ञानगम्यं परं सूक्ष्मं व्याप्य सर्व मवस्थितम् ॥
ग्राह्यमत्यन्तयत्नेन स्रष्टारं जगतोऽव्ययम् ।
अथनासाद्यमानोपि भक्तिं न परिहापयेत् ॥
भक्तानुकम्पी भगवान् जायते पुरुषोत्तमः ।
येन येन च कामेन जपेत प्रयतः सदा ॥
स स कामः समृद्धःस्यात् श्रद्दधानस्य कुर्वतः
होमं वाप्यथवा जप्य मुपहारमथो चरुम् ॥
कुर्वीत येन कामेन तत्सिद्धिमुपधारयेत् ।
जाति श्रैष्ठ्यं महद्वित्तं यशो लोके परां गतिम् ॥
पापेन विप्रमोक्षश्च भवेत्सर्वं न संशयः ।
अथाभिधीयते कर्म पुत्रकामस्य वैष्णवम् ॥
शुक्लपक्षे शुभे वारे सुनक्षत्रे सुगोचरे ।
द्वादश्यां पुत्रकामस्तु चरुं कुर्वीत वैष्णवम् ॥
दम्पत्योरुपवासःस्या देकादश्यां सुरालये ।
ऋग्भिः षोडशभिःसम्य गर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्र मचिरात्सन्तति क्षमम् " ॥

चरुं पुरुषसूक्तेनेति ॥ स्वगृह्योक्तविधिना पायसचरुं श्रपयन् पुरुषसूक्तं पठेत् ॥ एवं चरुं श्रपयित्वा पश्चात् पुरुषसूक्तेन चरुं जुहुयात् ॥ सूक्तेनेत्येकवचनात् सकलमपि सूक्त मविच्छिन्नं होमसाधनं न तु प्रत्येकमृचः । होमसंख्या च सहस्रम् ॥ एतद्दशगुणितो जपः । अयमर्थः । कृष्णैकादश्यामुपक्रम्यायुतं जपित्वा शुक्लैकादश्यां दम्पती उपोष्य द्वादश्यां चरुं श्रपयित्वा सहस्राहुतीर्जुहुयादिति ।

"अथापरः प्रकारोय मेकादश्यामभोजनम्।
दम्पत्योः पुरुषस्तत्र नित्यकर्माविरोधिनि॥
काले जपेदिदं सूक्त मेकादश्यां निरन्तरम्।
द्वादश्यां प्रयतो भूत्वा पयसा निर्वपेच्चरुम्॥
द्वादशद्वादशीष्वेवं पयसा निर्वपेच्चरुम्"।

एवमिति॥ एकादश्यामुपवासादिकं कृत्वेत्यर्थः॥

"हुत्वाऽऽज्यं विधिवच्चात्रऋग्भिः षोडशाभिर्बुधः।
कृतांजलिपुटो भूत्वा स्तवं ताभिः प्रयोजयेत्।
ताभिरिति षोडशभिःऋग्भिरित्यर्थः॥
समिधोश्वत्थवृक्षस्य हुत्वाऽऽज्यं जुहुयात्पुनः
उपस्थानं हुताशस्य ध्यात्वा च मधुसूदनम्"।

उपस्थानं हुताशस्येति॥ कृत्वेति वाक्यशेषः॥ अग्न्युपस्थानं चाग्नेयैर्मन्त्रैः।

"हविर्होमं ततः कुर्यात्प्रत्यृचं वाग्यतः शुचिः।
हविःशेषं नमकृत्वा नारी नारायणं पतिम्॥
भक्षयित्वा हविःशेषं लब्धाशीः संविशेत्क्षणम्"।

हविःशेषं भक्षयित्वेत्यनेनैव हुतावशिष्ट प्रतिपत्ति कर्मणि सिद्धे लब्धाशीरित्यनेनैवतु द्योतयति द्वादश्यामाहारान्तरपरित्यागेन पत्नी हविः शेषमेव लघु यथा तथा भुङ्क्त इति, संविशेत्क्षणमिति॥ क्षणं वामशायिनी स्यादित्यर्थः॥

"ततः कृत्वा त्विदं कर्म कर्तव्यं द्विजतर्पणम्।
द्वितीयां स्त्रीं निवर्तेत यावद्गर्भं न विन्दति"॥

यया भार्यया सहैतत्कर्म कृतं तां मुक्त्वा सति सम्भवेऽन्यां भार्यां न गच्छेत्। कियन्तं कालम्। यावदेषा गर्भं न विन्दति अनेकभार्याभिः सह कर्तृत्वे न दोषोन्यभार्यासङ्गमेपि। यदा त्वस्मिन्कर्मणि अननुप्रविष्टा भार्या ऋतुमती स्यात्॥ तथा कर्मण्यनुप्रतिष्ठा यावद्गर्भं न विन्दति तावदन्यां नोपेयात्। मन्त्रवतः शुक्लस्यान्यत्र गर्भाधानाक्षमत्वात्। मन्त्रसम्भृतस्य वीर्यस्यान्यत्र निषेके सहाधिकारिण्यां गर्भानुदया च॥ एवं च सति दृष्टहेतुनिमित्तत्वात्। अन्य-

स्त्रीगमननिषेधस्य ऋतौ भार्यामुपेयादिति नियमातिक्रमदोषोऽस्त्येव ॥ किं च स्मृति पुराणादिषु स्मृतेः प्राबल्यात् अस्त्येव नियमातिक्रमदोषः तथापि 'वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदे' दित्यनेन न्यायेन स्वल्पप्रायश्चित्ती भवति कुतः पुत्रार्थमेवान्यभार्या गमननिषेधात् ॥ भ्रूणहत्या मृतावृताविति भ्रूणहत्या प्रायश्चित्तस्य निमित्ती ॥ अपितु नियमातिक्रम मात्रजन्य दुरितयोगात्स्वल्पप्रायश्चित्तनिमित्ती । अतः प्रतिऋत्वेकमेकं प्राजापत्यं कल्पयेच्छक्तस्य । अशक्तस्य त्रिरात्रद्विरात्रादिः प्रकृतमनुसरामः ॥

"अपुत्रामृतपुत्रा च या च कन्यां प्रसूयते ।
क्षिप्रं सा जनयेत्पुत्रं मृष्यशृङ्गो यथाब्रवीत्" ।

इत्यृग्विधाने प्रोक्तः पुरुषसूक्तविधिः ॥ अथार्षादिषोडशर्चस्य पुरुषसूक्त(स्य)विधिः ॥ अथाऽऽर्षादिषोडशर्चस्य पुरुषसूक्तस्य नारायण ऋषिः ॥ पुरुषो देवता ॥ अनुष्टुप् छन्दः ॥ अन्त्या त्रिष्टुप् ॥ जपे होमेऽभिषेके वा विनियोगः ॥ अथ सूक्तम् ॥

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥
पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
एतावानस्य महिमाऽतो ज्यायांश्च पुरुषः ।
पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।
त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्राम त्साशनानशने अभि ॥
तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्चये ॥

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्यानारण्याग्राम्याश्चये ॥
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मा द्यजुस्तस्मादजायत ॥
तस्मादश्वा अजायन्त ये के चोभया दतः ।
गावो ह जज्ञिरे तस्मा त्तस्माज्जाता अजावयः ॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का वूरू पादावुच्येते ।
ब्राह्मणोस्य मुखमासी द्बाहू राजन्यः कृतः ।
ऊरू तदस्य य द्वैश्यः पद्भ्यां शूद्रो अजायत ।
चन्द्रमा मनसो जात श्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रा त्तथा लोकां अकल्पयन् ।
सप्तास्यासन् परिधयः त्रिसप्त समिधः कृताः ।
देवाय यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥
यज्ञेन यज्ञमयजन्त देवा स्तानि धर्माणि प्रथमान्यासन् ।
तेह नाकं मामिमानः सचन्त यत्रपूर्वेसाध्याः सन्तिदेवाः" ॥

इत्याश्वलायन पाठानुसारेण पुरुषसूक्तम् ॥ अथ विष्णुसहस्रनामानि ॥

श्रीवैशम्पायन उवाच ॥

"श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥

श्रीयुधिष्ठिर उवाच ॥

किमेकं दैवतं लोके किंवाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तु र्जन्मसंसारबन्धनात् ॥

श्रीभीष्म उवाच ॥

"जगत्प्रभुं देवदेव मनन्तं पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण पुरुषः सततोत्थितः ॥

तमेवचार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायंस्तुवन्नमस्यंश्च यजमान स्तमेव च ॥
अनादि निधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्द्धनम् ।
लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं दैवतानां च भूतानां योऽव्ययः पिता ॥
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥
तस्य लोक प्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥

श्रीकृष्णदिव्यसहस्रनाम्नामनुष्टुप् छन्दः ॥ श्रीवेदव्यासो भगवानृषिः ॥ श्रीकृष्णः परमात्मा देवता ॥ अमृतांशोद्भवो भानुरिति बीजम् ॥ देवकीनन्दनः स्रष्टेति शक्तिः ॥ उद्भवक्षोभणो देव इति परमो मन्त्रः ॥ शङ्खभृन्नन्दकीचक्रीति कीलकम् ॥ शार्ङ्गधन्वा गदाधर इत्यस्त्रम् ॥ अथन्यासः = ओं विश्वं विष्णुर्वषट्कार इत्यंगुष्ठाभ्यां नमः । ओं अमृतांशूद्भवो भानुरिति तर्जनीभ्यां नमः । ओ ब्रह्म विद्ब्राह्मणो ब्रह्मीति मध्यमाभ्यां नमः । सुवर्णबिन्दुरक्षोभ्यइत्यनामिकाभ्या नमः । आदित्यो ज्योतिरादित्य इति कनिष्ठिकाभ्यां नमः। ओं शार्ङ्गधन्वा गदाधर इति करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। ध्यानं॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाकारं गगनसदृशं मेघवर्णं शुभांगम् । लक्ष्मीकान्तं कमल

नयनं योगिहृत्ध्यान गम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैक-नाथं ॥ श्रीकृष्णप्रीत्यर्थे समस्तपापक्षयार्थे वाऽभिलषितकामनार्थे वा विनियोगः ॥

"ओं विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥
योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥
सर्वः शर्वः शिवः स्थाणुः भूतादिर्निधि रव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥
स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठस्थविरो ध्रुवः ॥
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञ कृतिरात्मवान् ॥
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिः सृतः ॥
वसुर्वसुमनाः सत्यः सामात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥
रुद्रो बहुशिरा बभ्रूर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविद्व्यङ्गो वेदाङ्गो वेदवित्कविः ॥
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः
चतुरात्मा चतुर्व्यूहः श्चतुर्दंष्ट्र श्चतुर्भुजः ॥
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥
उपेन्द्रो वामनः प्रांशु रमोघः शुचिरूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥
महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥
अमृत्युः सर्वदृक्सिंहः सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥
गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥
अग्रणीः ग्रामणी श्रीमान् न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥
आवर्तनो निवृत्तात्मा संवृतः संप्रमर्दनः ।
अहः संवर्तको वह्नि रनिलो धरणीधरः ॥
सुप्रसादः प्रसन्नात्मा विश्वधृक् विश्वभुक् विभुः ।
सत्कर्ता सत्कृतिःसाधु र्जह्नुर्नारायणो नरः ॥
असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृत् शुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥
वृषाही वृषभो विष्णुः वृषपर्वा वृषोदरः ।
वर्द्धनो वर्द्धमानश्च विविक्त श्रुतिसागरः ॥

सुभुजो दुर्द्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्ध स्पष्टाक्षरो मन्त्र श्चन्द्रांशुर्भास्करद्युतिः ॥
अमृतांशूद्भवो भानुः शशि बिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥
भूतभव्य भवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः?-कामः कामप्रदः प्रभुः ॥
युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनं तजित् ? ॥
इष्टो विशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोध कृत्कर्ता विश्वबाहुर्महीधरः ॥
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपां निधिरधिष्ठान मप्रमत्तः प्रतिष्ठितः ॥
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥
अशोक स्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूल शतावर्तः पद्मी पद्मनिभेक्षणः ॥
पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धि ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिं जयः ॥
विक्षिरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्स्पष्ट स्तुष्टः पुष्टः शुभेक्षणः ॥
रामो विरामो विरतो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतां श्रेष्ठो धर्मोधर्मविदुत्तमः ॥

वैकुण्ठः पुरुषः प्राण प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥
विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोनार्थो महाकोशो महाभोगो महाधनः ॥
अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥
यज्ञ इज्यो महेज्यश्च क्रतुःसत्रं सतां गतिः ।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ॥
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥
स्वाप नः स्ववशोव्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥
धर्मगुप् धर्मकृद्धर्मी सदसत् क्षरमक्षरम् ।
अविज्ञाता सहस्रांशु र्विधाता कृतलक्षणः ॥
गभस्तिनेमिः सत्वस्थः सिंहोभूतमहेश्वरः ।
आदिदेवो महादेवो देवेशोदेवभृद्गुरुः ? ॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतकृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्वतां पतिः ॥
जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥
अजो महार्हःस्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥
महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥
महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥

वेधा स्वाङ्गो जितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥
भगवान् भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥
सुधन्वा खण्डपरशु र्दारुणो द्रविणप्रदः ।
दिवस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
सन्यासकृत्समः शान्तो निष्ठा शान्तिः परायणः ॥
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥
अनिवर्त्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः
श्रीधरः श्रीकरः श्रेयः श्रीमान् लोकत्रयाश्रयः ॥
स्वक्षः स्वङ्गः सदानन्दी नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिः छिन्नसंशयः ॥
उदीर्णः सर्वतश्चक्षु रनीशः शाश्वतः स्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥
कालनेमिर्महावीरः शौरिः शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥
कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णु र्वीरोऽनन्तो धनञ्जयः ॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्द्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ।

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसर्वसुमना हविः ॥
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामनः ॥
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्द्धरोथापराजितः ॥
विश्वमूर्तिर्महामूर्ति र्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥
एकोनैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥
सुवर्णवर्णो हेमाङ्गो वराङ्ग श्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥
आमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधामेधजो धन्यः सत्यमेधा धराधरः ॥
तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥
चतुर्मूर्तिश्चतुर्बाहु श्चतुर्व्यूह श्चतुर्गतिः ।
चतुरात्मा चतुर्भाव श्चतुर्वेदविदेकपात् ॥
समावर्त्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥
शुभाङ्गो लोकसारङ्गः सुतन्तुः तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥
उद्भवः सुन्दरः सुन्दो रत्ननामः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाहृदो महागर्तो महाभूतो महानिधिः ॥
कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोनिलः ।
अमृतांशोऽमृतवपु सर्वज्ञः सर्वतो मुखः ॥
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थ श्चाणूरान्ध्रनिषूदनः ॥

सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥
अणुर्बृहत्कृशःस्थूलो गुणभृन्निर्गुणो महान् ।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः ॥
भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥
सत्ववान् सात्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्द्धनः ॥
विहायसङ्गतिर्ज्योतिः सुरुचिर्हुतभुक् विभुः ।
रविर्विलोचनः सूर्यः सवितारविलोचनः ॥
अनन्तो हुतभुग्भोक्ता सुखदोनैकदोग्रजः ।
अनिर्वणःसदामर्षी लोकाधिष्ठान मद्भुतः ॥
सनात्सनातनतमः कपिलः कपिरव्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥
उत्तारणो दुष्कृतिहा पुण्यो दुस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रोगभीरात्मा विदिशो व्यादिशो दिशः ॥
अनादि र्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिः भीमो भीमपराक्रमः ॥
आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।
तत्वं तत्वविदेकात्मा जन्ममृत्युजरातिगः ॥

भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञ गुह्य मन्नमन्नाद एव च ॥
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥
सर्वप्रहरणायुधों नम " इति ॥

वनमाली गदीशार्गी शङ्खी चक्री च नन्दकी । श्रीमान्नारायणो
विष्णुः वासुदेवोऽभिरक्षतु इतीदं कीर्तनं यस्य केशवस्य महात्मनः ।

नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितं ।
यइदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत्
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ।
वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत् ॥
वैश्यो धनसमृद्धःस्या च्छूद्रः सुखमवाप्नुयात् ।
धर्मार्थी प्राप्नुयाद्धर्म मर्थार्थी चार्थ माप्नुयात् ॥
कामानवाप्नुयात्कामी प्रजार्थी चाप्नुयात्प्रजाः ।
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ॥
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ।
यशः प्राप्नोतिविपुलं यातिप्राधान्यमेव च ॥
अचलां श्रियमाप्नोति श्रेयःप्राप्नोत्यनुत्तमम् ।
न भयं क्वचिदाप्नोति वीर्यं तेजश्चविन्दति ॥
भवत्यरोगी द्युतिमान् बलरूपगुणान्वितः ।
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ।
दुर्गाण्यपि तरत्याशु पुरुषः पुरुषोत्तमम् ॥
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ।
वासुदेवाश्रयोमर्त्यो वासुदेवपरायणः ॥

सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ।
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥
जन्ममृत्युजराव्याधिः भयंनैवोपजायते ।
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥
युज्येतात्मा सुखक्षान्तिः श्रीधृति स्मृति कीर्तिभिः ।
न क्रोधो न च मात्सर्यं न लोभो नाऽशुभा मतिः ॥
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ।
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ॥
वासुदेवस्य वीर्येण विधृतानि महात्मनः ।
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ॥
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ।
इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः ॥
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ।
सर्वागमानामाचारः प्रथमं परिकल्प्यते ॥
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ।
ऋषयः पितरो देवाः महाभूतानि धातवः ॥
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ।
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञानं एतत् सर्वः जनार्दनात् ॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितं ।
पठेद्यइच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥
न ते यान्ति पराभवमिति ॥

सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ।
न वासुदेवभक्ताना मशुभं विद्यते क्वचित् ॥
जन्ममृत्युजराव्याधिः भयंनैवोपजायते ।
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ॥
युज्येतात्मा सुखक्षान्तिः श्रीधृति स्मृति कीर्तिभिः ।
न क्रोधो न च मात्सर्यं न लोभो नाऽशुभा मतिः ॥
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ।
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ॥
वासुदेवस्य वीर्येण विधृतानि महात्मनः ।
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ॥
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ।
इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः ॥
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ।
सर्वागमानामाचारः प्रथमं परिकल्प्यते ॥
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ।
ऋषयः पितरो देवाः महाभूतानि धातवः ॥
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ।
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञानं एतत् सर्वः जनार्दनात् ॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितं ।
पठेद्यइच्छेत्पुरुषः इतेयः प्राप्तुं सुखानि च ॥
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥
न ते यान्ति पराभवमिति ॥

## अथापामार्जनस्तोत्रम्

ओं श्रीदाल्भ्य उवाच ॥

"भगवन् प्राणिनः सर्वे विषरोगाद्युपद्रवैः ।
दुष्टग्रहोपघातैश्च सार्वकालमुपद्रुताः ॥
आभिचारिककृत्याभिः स्पर्शरोगैश्च दारुणैः ।
सदा संपीडयमानास्तु तिष्ठन्ति मुनिसत्तम ॥
केन कर्मविपाकेन विषरोगाद्युपद्रवाः ।
न भवन्ति नृणां तन्मे यथावद्वक्तुमर्हसि" ॥

पुलस्त्य उवाच ॥

"व्रतोपवासैर्यैर्विष्णु र्नान्यजन्मनि तोषितः ।
ते नरा मुनिशार्दूल ग्रहरोगादि भागिनः ॥
यै र्न तत्प्रवणं चित्रं सर्वदैव नरैः कृतम् ।
विषज्वरग्रहाणां ते मनुष्या दाल्भ्य भागिनः ॥
आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति ।
तत्तदाप्नोत्यसन्दिग्धं परत्राच्युततोषकृत् ॥
नाधीन् प्राप्नोति न व्याधीन्न विषग्रह बन्धनम् ।
कृत्यास्पर्शभयं वापि तोषिते मधुसूदने ॥
सर्व दुःखशमस्तस्य सौम्यास्तस्य सदा ग्रहाः ।
देवानामप्यधृष्योसौ तुष्टो यस्य जनार्दनः ॥
यः समः सर्वभूतेषु यथात्मनि तथा परे ।
उपवासादिना तेन तोष्यते मधुसूदनः ॥
तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः ।
अरोगाः सुखिनो भोगान् भोक्तारो मुनिसत्तम ॥
न तेषां शत्रवो नैव स्पर्शरोगाभिचारकम् ।
ग्रहरोगादिकं वाऽपि पापकार्यं न जायते ॥
अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि तान् ।
रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः" ॥

**दाल्भ्य उवाच ॥**

" अनाराधितगोविन्दा ये नरा दुःख भागिनः ।
तेषां दुःखाभिभूतानां यत्कर्तव्यं दयालुभिः ॥
पश्यद्भिःसर्वभूतस्थं वासुदेवं महामुने ।
समदृष्टिभिरीशेशं तन्मम ब्रूह्यशेषतः " ॥

**पुलस्त्य उवाच ॥** (१)

" गृहीत्वा तु समूलाग्रान् कुशांच्छुद्धांश्च रोगिणः ।
मार्जयेत्सर्वगात्राणि कुशाग्रैर्दाल्भ्य शान्तिकृत् ॥
रोगग्रहविषार्तानां कुर्याच्छान्तिमिमां शुभाम् ।
शरीरे यत्र तिष्ठन्ति कुशाग्रजलबिन्दवः ॥
नश्यन्ति सर्वपापानि गरुडेनेव पन्नगाः ।
विष्णुभक्तो विशेषेण शुचिस्तद्गत मानसः ॥
वाराहं नारसिंहं च वामनं च त्रिविक्रमम् ।
ध्यात्वा समाहितो भूत्वा नामान्यङ्गेषु विन्यसेत् ।
पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे ॥
प्रद्युम्नः पश्चिमायां तु वासुदेवस्तथोत्तरे ।
ऐशान्यां रक्षको विष्णुराग्नेय्यां तु जनार्दनः ॥
नैर्ऋत्यां पद्मनाभस्तु वायव्यां मधुसूदनः ।
ऊर्ध्वे गोवर्द्धनः पातु अधरायां त्रिविक्रमः ॥
एताभ्यो दशदिग्भ्यश्च सर्वतः पातु केशवः ।
अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम् ॥
मध्यमायां हृषीकेश मनामिकायां त्रिविक्रमम् ।
कनिष्ठायां न्यसेद्विष्णुं करमध्ये तु माधवम् ॥

---

(१) सौवर्णं राजतं ताम्रं मृण्मयं वा नवं दृढम् । अव्रणं कलशं शुद्धं स्थापयेत् तण्डुलोपरि । तत्रोदकं समानीय शुद्धं निर्मलमेव च । एकं शतं च दर्भाग्रान् स्थापयेत् कलशोपरि । तत्रान्तरे सुवर्णं च पञ्चगव्यानि दापयेत् । श्वेतवस्त्रेण संवेष्ट्य पञ्च गव्यानिक्षिपेत् । वाराहं नारसिंह च वामनं च प्रयत्नतः । पूजयेत् तत्र सकलैरुपचारैः समन्त्र कैः अपामार्जनकं वक्ष्ये न्यास पूर्वमिहोदितम् । श्रोतु कामोऽसि वैदाल्भ्य श्रृणुत्वं सुसमहितः । कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः । कुशाग्रे शंकरं विद्यात् त्रयोदेवा व्यवस्थिताः । ( अयं पाठः पाल्घाट मुद्रितपुस्त कापाठः ।

शिखायां केशवं न्यस्य मूर्ध्निनारायणं न्यसेत् ।
माधवं ये ललाटे तु गोविन्दं तु भ्रुवोः स्थितम् ॥
चक्षुर्मध्ये न्यसेद्विष्णुं श्रवणे मधुसूदनम् ।
त्रिविक्रमं कपोल योर्वामनं कर्णमूलयोः ॥
दामोदरं दन्तपङ्क्त्यां वराहं चिबुके तथा ।
जिह्वायां वासुदेवं तु त्वक्स्थितं गरुडध्वजम् ॥
हृषीकेशमुत्तरोष्ठे पद्मनाभं तथाधरे ।
वैकुण्ठं कण्ठमध्ये तु अनन्तं नासिकोपरि ॥
दक्षिणे तु भुजे विप्र विन्यसेत्पुरुषोत्तमम् ।
वामके तु महायोगिन् राघवं हृदि विन्यसेत् ॥
पीतवासे सर्वतनौ ? हरिं नाभ्यान्तु विन्यसेत् ।
करे तु दक्षिणे विप्र ततः सङ्कर्षणं न्यसेत् ॥
वामे रिपु हरं विद्या त्करमध्ये जनार्दनम् ।
पृष्ठे क्षितिधरं विद्या दच्युतं स्कन्धमूलयोः ॥
वक्षस्थले माधवं तु कक्षयोर्योगशायिनम् ।
स्वयम्भुवं मेढ्रमध्ये ऊर्वोश्चैवगदाधरम् ॥
चक्रायुधं जानुमध्ये जङ्घयोरच्युतं तथा ।
गुल्फयोर्नरसिंहं तु पादपृष्ठेऽमितौजसम् ॥
अङ्गुल्यां श्रीधरं न्यस्य पङ्कजाक्षं हि सन्धिषु ।
रोमकूपे गुडाकेशं कृष्णं रक्तास्थिमज्जसु ॥
नखे तु माधवं न्यस्य न्यसेत्पादतलेऽच्युतम् ।
मनोबुद्धिरहंकारे विन्यस्य च जनार्दनम् ॥
एवं न्यासविधिं कृत्वा साक्षान्नारायणो भवेत् ।
तनुर्विष्णुमयी यस्य यावत्किञ्चिन्न भाषते ॥
एवं न्यासविधिं कृत्वा यत्कार्यं शृणु तद्विज ।
वैष्णवेन तु कर्तव्यं सर्वसिद्धि प्रदायिना ॥
पूजाकाले तु देवस्य स्नानकाले तथैव च ।
होमारम्भे तु कर्तव्यं त्रिसन्ध्यासु च नित्यशः ॥
अभयं सर्वभूतेभ्यो विष्णुलोकं स गच्छति ।
विष्णुलोकं स गच्छत्यों नमः " ॥ ओं नमः

परमार्थाये[1] त्याद्यपामार्जनमन्त्रस्य पुलस्त्य ऋषिः अनुष्टुप् छन्दः श्री नृसिंहो देवता, । हरामुकस्य दुरितति बीजम् ॥ अच्युतानन्द गोविन्देति शक्तिः ॥ तप्तहाटककेशान्तेति कीलकम् । ज्वलत्पावकलोचनेति कवचम्, वज्राधिकनखस्पर्शेति व्यापकम् । हा हा हुं फट्का रे, यत्नम्, वराहनरसिंहप्रीत्यर्थे जपे विनियोगः ।

"ओं नमः परमार्थाय पुरुषाय महात्मने ।
अरूपबहुरूपाय व्यापिने परमात्मने ॥
निष्कल्मषाय शुद्धाय ध्यानयोगरताय च ।
वराहनरसिंहन्तु वामनं विष्णुमेव च ।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यति मेवचः
त्रिविक्रमाय रामाय वैकुण्ठाय नराय च ।
नमस्कृत्वा प्रवक्ष्यामि यत्रत्सिध्यति मेव चः ॥
वराहनरसिंहेश वामनेश त्रिविक्रम ।
हय ग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥
अपराजितचक्राद्यै श्चतुर्भिः परमायुधैः ।
अखण्डितानुभावैस्त्वं सर्वदुष्टहरो भव ॥
हरामुष्य दुरिष्टं च दुष्कृतं दुरुपोषितम् ।
मृत्युबन्धार्तिभयदं दुरिष्टस्य च यत्फलम् ॥
पराभिध्यानसहितैः प्रयुक्तं चाभिचारकम् ।
गरस्पर्शमहारोग प्रयोगं जरया जर ॥
हरये वासुदेवाय नमः कृष्णाय खड्गिने ।
नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥
नमः कमलकिञ्जल्क पीतनिर्मलवाससे ।
महाहवरिपुस्कन्ध घृष्टचक्राय चक्रिणे ॥
दंष्ट्रोद्धृताक्षितिधृते त्रयीमूर्तिमते नमः ।
महायज्ञवराहाय शेषभोगो[2]रुभोगिने ॥
तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्राधिकनखस्पर्श दिव्यसिंह नमोस्तु ते ॥

---

१ 'अस्य श्री अपामार्जनस्तोत्रमहामन्त्रस्य', पाठभेद.

२, भोगेन्द्रशायिने ! पाठ पाठः ।

काश्यपायाति ह्रस्वाय ऋग्यजुः साममूर्तये ।
तुभ्यं वामनरूपाय क्रमते गां नमोनमः ॥
वाराहशेषदुष्टानि सर्वपापफलानि वै ।
मर्द मर्द महादंष्ट्र मर्द मर्द च यत्फलम् ॥
नरसिंह करालास्य दन्तप्रान्तानलोज्वल ।
भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्तिनाशन ॥
ऋग्यजुः सामगर्भाभिर्वाग्भिर्वामनरूपधृक् ।
प्रशमं सर्वदुःखानि नयत्वस्य जनार्दनः ॥
एकाह्निकं द्वाह्निकं वा तथा त्रिदिवसज्वरम् ।
चातुर्थिकं तथात्युग्रं तथैव सततज्वरम् ।
दोषोत्थं सन्निपातोत्थं तथैवागन्तुकंज्वरम् ।
शमंनयाशु गोविन्द छिन्धिछिन्ध्यस्य वेदनाम् ॥
नेत्रदुःखं शिरोदुःखं दुःखं चोदरसम्भवम् ।
अनुश्वासमनिश्वासं परितापं सवेपथुम् ॥
गुदघ्राणांघ्रिरोगांश्च कुष्टरोगं तथा क्षयम् ।
श्वित्रादीन्नखजान्रोगान् त्वगस्थ्यन्तर्बहिः स्थितान् ॥
कामलादींस्तु रोगांश्च प्रमेहांश्चातिदारुणान् ।
भगन्दरातिसारांश्च मुखरोगांश्च वल्गुलिम् ॥
अश्मरीमूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् ।
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥
कफोद्भवा श्च ये रोगा ये चान्ये सान्निपातिकाः ।
आगन्तवश्च ये रोगाः लूतादि स्फोटकादयः ॥
ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः ।
विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन तु ॥
क्षयं गच्छन्तु दोषास्ते चक्रेणाभिहता हरेः ।
अच्युतानन्तगोविन्द नामोच्चारणभीषिताः ॥
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ।
सत्यं सत्यं पुनः सत्य मुद्धृत्य भुज मुच्यते ॥
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ।
स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम् ॥

दन्तोद्भवं नखोद्भूत माकाशप्रभवं विषम् ।
लूतादिप्रभवं यच्च विषमत्यन्तदुःखदम् ॥
शमनं यातु तत्सर्वं कीर्तितोऽस्य जनार्दनः ।
ग्रहान् प्रेतग्रहांश्चैव तथा वै डाकिनी ग्रहान् ॥
वेतालांश्चपिशाचांश्च गन्धर्वान् यक्षराक्षसान् ।
शकिनीपूतनाद्यांश्च तथा वैनायकग्रहान् ॥
मुंडमंडलिकान् क्रूरान् रेवतीं वृद्धरेवतीम् ।
वृद्धिकाख्यान् ग्रहां श्चोग्रान् तथा मातृग्रहानपि ॥
बालस्य विष्णोश्चरितं हन्तु बालग्रहानपि ।
वृद्धानां ये ग्रहाः केचित् ये च बालग्रहाः क्वचित् ॥
नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने ।
सदा करालवदनो नरसिंहो महारवः ॥
ग्रहशेषानशेषां श्च करोतु जगतो हि सः ।
नरसिंह महासिंह ज्वालामालोज्वलानन ॥
ग्रहानशेषान् सर्वेश खाद खादग्निलोचन ।
ये रोगा ये महोत्पाता यद्विषं ये महाद्विषः ? ॥
यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ।
शस्त्रक्षतेषु ये दोषा ज्वालागर्दभकादयः ॥
तानि सर्वाणि सर्वात्मन् परमात्मन् जनार्दन ।
किञ्चिद्रूपं समास्थाय वासुदेवा शुनाशय ॥
क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालाति भीषणम् ।
सर्वदुष्टप्रशमनं कुरु देववराच्युत ॥
सुदर्शन महाज्वाल छिन्दि छिन्धि च मारय ।
सर्वदुष्टानि रक्षांसि क्षपयारि विभीषण ॥
प्राच्यां प्रतीच्यां दिशि च दक्षिणोत्तरतस्तथा ।
रक्षां करोतु सर्वात्मन् नरसिंह स्वगर्जितैः ॥
भुव्यन्तरिक्षे च तथा पार्श्वतः पृष्ठतोऽग्रतः ।
रक्षां करोतु भगवान् बहुरूपी जनार्दनः ॥
यथा विष्णु र्जगत्सर्वं सदेवासुरमानुषम् ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥

यथा विष्णोः स्मृतं सद्यः संक्षयं याति पातकम् ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥
परमात्मा यथा विष्णुः वेदान्तेष्वपि गीयते ।
तेनसत्येन सकलं यन्मयोक्तं तथास्तु तत् ॥
शान्तिरस्तु शिवं चास्तु प्रणश्यत्वसुखं च यत् ।
वासुदेवशरीरोत्थैः कुशैः सम्मार्जितं मया ॥
अपामार्जतु गोविन्दो नरो नारायणस्तथा ।
तवास्तु सर्वदुःखानां प्रशमो वचनाद्धरेः ॥
शान्ति ? समस्तरोगास्ते ग्रहाःसर्वे विषाणि च ।
भूतानि च प्रयान्तीशे संस्तुते मधुसूदने ॥
एतत्समस्तरोगेषु भूतग्रहभयेषु च ।
अपामार्जनकं शस्तं विष्णुनामाभिमन्त्रितम् ॥

एते कुशाः विष्णुशरीरसम्भवाः ।
जनार्दनोहं स्वयमेव चागतः ।
हतं मया दुष्टमशेष मस्य
स्वस्थो भवत्येष यथा वचो हरेः ॥

शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु ।
यदस्य दुरितं किञ्चित्तत्क्षिप्तं लवणार्णवे ॥
स्वास्थ्यमस्य शिवं चास्तु हृषीकेशस्य कीर्तनात् ।
यत एवागतं पापं तत्रैव प्रतिगच्छतु ॥
एतद्रोगादि पीडासु जन्तूनां हितामिच्छता ।
विष्णुभक्तेन कर्तव्यं अपामार्जनकं परं ॥
यत एवागतं पापं तत्रैव प्रतिगच्छतु ।
एतद्रोगादि पीडासु जन्तूनां हितमिच्छता ॥
विष्णुभक्तेन कर्तव्य मपामार्जनकं परम् ।
एतेन सर्वदुःखानि प्रशमं यान्त्यसंशयः ॥
सर्वभूतहितार्थाय कुर्यात्तस्मात्सदैव हि" ।

इत्यपामार्जनस्तोत्रं समाप्तम् ॥ अथ विष्णुहृदयस्तोत्रम् ॥ अस्य स्तोत्रस्य सङ्कर्षण ऋषिः ॥ अनुष्टुप् त्रिष्टुप् गायत्री च यथायोगं

छन्दः ॥ श्रीविष्णुः परमात्मा देवता ॥ अभिलषितार्थे विनियोगः ॥
सङ्कर्षण उवाच ॥

' ममाग्रतः सदा विष्णुः पृष्ठतश्चापि केशवः ।
गोविन्दो दक्षिणे पार्श्वे वामे च मधुसूदनः ॥
उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले ।
अवान्तरदिशो याः स्यु स्तासु सर्वासु माधवः ॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोपि वा ।
नरसिंहकृता गुप्ति र्वासुदेवं मयोह्ययम् ॥

अव्यक्तं चास्य योनिं वदन्ति
व्यक्तं देहं दीर्घमायुर्गतिं च ।
वह्निर्वक्त्रं चन्द्रसूर्यौ च नेत्रे
दिशः श्रोत्रे घ्राणमाहुश्च वायुम् ॥
वाचं वेदा हृदयं नभश्च
पृथ्वीपादौ तारका रोमकूपाः ।
साङ्गोपाङ्गान्यधिदेवताश्च
विद्या ह्युपस्थं हि तथा समुद्रम् ॥
तं देवदेवं शरणं प्रजानां
यज्ञात्मकं सर्वलोकप्रतिष्ठम् ।
अजं वरेण्यं वरदं वरिष्ठं
ब्रह्माणमीशं पुरुषं नमस्ते ॥

आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥
महाभारतमाख्यानं कुरुक्षेत्रं सरस्वतीम् ।
केशवं गांच गङ्गां च कीर्तयन्नावसीदति ॥

ओं भूः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं भुवः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं सुवः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं भूर्भुवः स्वः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
वासुदेवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥

ओं सङ्कर्षणाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं प्रद्युम्नाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं अनिरुद्धाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं केशवाय पुरुषा(य पुरुषरूपाय) वासुदेवाय नमो नमः ॥
ओं नारायणाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं प्रभावोद्भवाय (पुरुषाय) पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं माधवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं गोविन्दाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं विष्णवे पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं मधुसूदनाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं त्रिविक्रमाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं वामनाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं श्रीधराय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं हृषीकेशाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं पद्मनाभाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं दामोदराय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं सत्याय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं ईशानाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं तत्पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं सत्पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥
ओं प्रभावेन्दुविष्णुसहस्रनेत्राय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ॥

य इदं विष्णुहृदयमधीते ब्रह्महत्यापूतो भवति ॥ सुरापानात्पूतो भवति ॥ सुवर्णस्तेयात्पूतो भवति ॥ पतितसम्भाषणात्पूतो भवति ॥ असत्य संभाषणात्पूतो भवति ॥ अगम्यागमनात्पूतो भवति ॥ वृषलागमनात्पूतो भवति ॥ अपेयपेयात्पूतो भवति ॥ अभक्ष्य-भक्षणात्पूतो भवति ॥ अब्रह्मचारी ब्रह्मचारी भवति ॥ एतेन क्रतुशतसहस्रेणेष्टं भवति ॥ गायत्र्याः षष्ठि शत-सहस्राणि जप्तानि भवन्ति ॥ चत्वारो वेदाश्चाधीता भवन्ति ॥

सर्वेषु देवेषु जातो भवति ॥ सर्वेषु तीर्थेषु स्नातो भवति ॥ यदि कस्यचिन्नब्रूयाच्छ्वित्री भवति ॥ अष्टौ ब्राह्मणान् ग्राहयित्वा विष्णलोकमवाप्नोति ॥ मानसे न मृत्युर्भविष्यति न नश्यति मन्त्रः ॥ यत्र यत्रेच्छेत्तत्र तत्रोपजायते ॥ स्मरति वात्मानं भगवान् महाविष्णुरित्याह" ॥ इति विष्णुहृदय स्तोत्रं समाप्तम् ॥

अथ विनायक शान्ति पद्धतिः ॥ शातातपीय कर्मविपाकपरिभाषायां पूर्वं श्लोकद्वयं प्रदर्शितम् ॥

तद्यथा ॥ "रुद्रजपो लक्षपुष्पैः पूजयित्वा त्र्यम्बकम् ।

एकादशजपाद्रुद्रा दशांशं गुग्गुलेन तु ॥

हुत्वाऽभिषेचनं कुर्यान्मन्त्रैर्वारुणदैवतैः ।

शान्तिके गणशान्तिश्च ग्रहशान्तिकपूर्वक" मिति ॥

तथा रोगप्रतिमादानविध्यनन्तरं अपरः श्लोकः प्रदर्शितः ॥

"दानैर्दयादिभिरपि द्विजदेवतागो

देवार्चनाप्रणतिभिश्च जपैस्तपोभिः ।

इत्युक्तपुण्यनिचयैरपनीयमानाः

प्राक् पापजातमशुभं प्रशमं नयन्ति" ॥

एतच्छ्लोकत्रय व्याख्यान प्रसङ्गेन वेदपारायणविध्यादयो विष्णुहृदयस्तोत्र पर्यन्ताः प्रदर्शिताः ॥ अथ 'शान्तिके गणशान्तिश्च ग्रहशान्तिकपूर्वक' मित्यनेन विनायकशान्तिर्नवग्रहशान्तिश्चेत्युभयमुपलक्षितम् ॥ तत्र गणशान्तिरभिधीयते ॥ याज्ञवल्क्यः ॥

"विनायकः कर्मविघ्न सिध्यर्थं विनियोजितः ।

गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥"

एवं विनायकस्याधिकारकं व्यापारमभिधीयते । न गृहीतस्य स्वप्नदर्शनानि प्रत्यक्षदर्शनानि चाह ॥

"तेनोपसृष्टोयस्तस्य लक्षणानि निबोधत ।

स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति ॥

काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।

अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्र च तिष्ठति ॥

---

( अस्याद्वितीयावृत्तिपाठः घ, पुस्तन दृश्यते )

व्रजन्नपि तथाऽऽत्मानं मन्यतेऽनुगतं परैः ।
विमना विफलारम्भः संसीदत्यनिमित्ततः ॥
तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।
कुमारी न च भर्तार मपत्यं गर्भमङ्गना ॥
आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ।
वणिक् लाभं न चाप्नोति कृषिं वापि कृषीवलः ” ॥

एवं विनायकगृहीतस्य चिह्नान्यभिधाय विनायकोपसर्गपरिहारकं कर्माह ॥

“ स्नपनं च प्रकर्तव्यं पुण्येऽह्नि विधिपूर्वकम्
गौरसर्षपकल्केन साज्येनोत्सादितस्य च ॥
सर्वौषधैः सर्वगन्धै र्विलिप्तशिरसस्तथा ।
भद्रासनोपविष्टस्य स्वस्ति वाच्य द्विजाः शुभाः
अश्वस्थानाद्गजस्थानात् वल्मीकात्सङ्गमाद्ध्रदात्
मृत्तिकां रोचनां गन्धान् गुग्गुलुं चाप्सु निक्षिपेत्
या आहृता एकवर्णै श्चतुर्भिः कलशै र्ह्रदात् ।
चर्मण्यानडुहे रक्ते स्थाप्यं भद्रासनं ततः ॥
सहस्राक्षं शतधार मृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥
भगन्ते वरुणो राजा भगन्देवो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।
ललाटे कर्णयोरक्ष्णो रापस्तत् घ्नन्तु सर्वदा ॥
स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण च ।
जुहुयान्मूर्धनि कुशान् सव्येन परिगृह्य तु ॥
मितश्च सम्मितश्चैव तथा शालकण्टकौ ।
कूष्माण्डो राजपुत्रश्चेत्यन्ते स्वाहासमन्वितैः
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः ” ।

अन्ते स्वाहासमन्वितैर्मूर्ध्नि जुहुयादित्यन्वयः ॥ तथा–विधैर्बलिमन्त्रै र्बलिं दद्यादित्य द्ध्याहृत्य याज्ञ्यं बहिर्बलिप्रकारमाह ॥

"दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वतः ।
कृताकृतान् तण्डुलांश्च पललोदनमेव च ॥
मत्स्यान् पक्वांस्तथैवामान् मांसमेतावदेव तु ।
पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥
मूलकं पूरिकापूपान् तथैवोण्डेरकस्रजः ।
दध्यन्नं पायसञ्चैव गुडपिष्टं समोदकम् ॥
एतान् सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ।
विनायकस्य जननी मुपतिष्ठेत्ततोम्बिकाम् ॥
दूर्वासर्षपपुष्पाणां दत्वार्घं पूर्णमञ्जलिम्" ।

कृताकृताः सकृदवहताः ॥ पललोदनस्तिलपिष्टमिस्र ओदनः ॥ आमा-अपक्वाः ॥ एतावदेव तु पक्वमपक्वञ्च मांसमित्यर्थः ॥ पुष्पं चित्रं रक्तपीतादि ॥ त्रिविधा सुरा गौडी पैष्टी माध्वी च ॥ मूलकन्दाकारो भक्षविशेषो मूलकञ्च ॥ उण्डेरकस्रजः ॥ उण्डेरकाः पिष्टविकारा नानाविधाः, तैः प्रोता स्रज इत्युच्यते ॥ गुडपिष्टं गुड-मिश्रं शाल्यादि पिष्टम् ॥ अन्यत्प्रसिद्धम् ॥ उपस्थानमन्त्रमाह ॥

" रूपं देहि यशोदेहि भगं भवति देहि मे ।
पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
ब्राह्मणान् भोजये द्द्या द्वस्त्रं युग्मं गुरोरपि " ॥

असमर्थश्चेत् गुरोराचार्याय वस्त्रयुग्ममात्रमपि दक्षिणां दद्यात् ॥ समर्थश्चेत् स्वसामर्थ्यानुसारेण ॥ वित्तशाठ्यं न कारये दिति स्मरणात् ॥ इति याज्ञवल्क्य प्रोक्ता विनायक शान्तिः ॥ अथास्यैव प्रयोगः ॥

" अथोच्यन्तेऽत्रसम्भारा रोचनापञ्चमृत्तिकाः ।
अश्वस्थानाद्गजस्थाना द्वल्मीकात्सङ्गमाद्ध्रदात् ॥
चन्दनागरुकस्तूरी कर्पूराद्याः सुगन्धयः ।
गौरसर्षपकल्केन गव्याज्येन विमिश्रितः ॥
गुग्गुल श्चापिसंशुद्धः सर्वौषधिगणस्तथा ।
सुरामांसी वचाकुष्ठं शैलेयं रजनीद्वयम् ॥

शठीं चम्पकमुस्ता च सर्वौषधिगणः स्मृतः ।
चत्वारः कलशा एकवर्णा अस्फुटिताव्रणाः ॥
ह्रदोदकमुतापिस्या न्निम्नगासङ्गमोदकम् ।
सग्रीवापुच्छमारक्तं चर्म चानडुहं तथा ॥
श्रीपर्णी काष्ठपीठं च सहकारस्य पल्लवाः ।
अश्वत्थपल्लवा वास्युः सुगन्धि सुमनांस्यपि ॥
स्रजः शोभनगन्धाश्च विचित्रकुसुमानि च ।
कलशावेष्टनार्थं तु नववस्त्रचतुष्टयम् ॥
पीठस्यावेष्टनार्थं तु शुभ्रवस्त्रमथापरम् ।
गणेशाम्बिकयोरर्थे वस्त्रयुग्मं सुशोभनम् ॥
आचार्यदक्षिणार्थं तु महार्हं वसनद्वयम् ।
पञ्च वर्णानि पिष्टानि स्वस्तिकस्य विनिर्मितः ।
स्रुवः कुशाश्चरुस्थाली पाकार्थं तण्डुलादिकम् ।
किञ्चिद्वन्ति क्रिया ? कृसः तण्डुलाश्चापरे तथा ॥
तिलपिष्टेन संयुक्त ओदनः शूर्प एव च ।
पक्वाश्च मत्स्याश्चा पक्वा मांसं पक्वमपक्वकम् ।
गौडी पैष्टी तथा माध्वी चेत्येवं त्रिविधा सुरा ।
मत्स्यादिकसुरान्ते च निषिद्धं यस्य यच्च तत् ? ।
न ग्राह्यं तु विशेषेण द्विजैस्त्याज्या सुरा सदा ।
यजमानस्तु शूद्रश्चे दद्विजैस्तान्नियोजयेत् ॥
प्रत्यक्षमूलकं वास्या द्रुत भक्षस्तथाकृतिः ।
अपूपा पूरिका श्चैव तथैवोण्डरकस्रजः ।
वर्तुलैश्चतुरस्रैश्च दीर्घैः पिष्टविकारकैः ।
निर्मिताःस्रज उच्यन्त उण्डेरकसमाख्यया ॥
दध्यन्नं पायसं चैव पिष्टं च गुडमिश्रितम् ।
लड्डुकां श्च तथा दूर्वा सर्षपागौरसंज्ञिताः ? ॥
गणेशप्रतिमा चैव गौर्याश्च प्रतिमा तथा ।
एवं सम्भृतसम्भारः शान्तिं कुर्याच्छुभे दिने" ॥

विनायकशान्तिं कर्तुकामः स्वस्य चन्द्रताराबलोपेते शुभे दिने कृतबाह्याभ्यन्तरशौचो नित्यकर्मानन्तरं अमुकप्रयोजनार्थमेतत्कर्म

करिष्य इति सङ्कल्प। श्रुताध्ययनसम्पन्नं ब्राह्मणमस्मिन् कर्मणि त्व माचार्यं कुर्विति गन्धपुष्पाक्षतादिभिर्वृणीत । अथर्त्विग्भिः सह आचार्यः कर्म करोति । गोमयेनोपलिप्ते स्वलङ्कृते देशे पञ्चवर्णैः पिष्टैः भद्रासनमेकं स्वस्तिकं कारयेत् ॥ तस्य स्वस्तिकस्य पूर्वादिदिक्षु चतुरः स्वस्तिकान् कारयेत् कलशस्थापनार्थम्। तत्र मध्यस्वस्तिकोपरि रक्तमानडुहं चर्मोत्तर लोम प्राचीनग्रीवं संस्थाप्य तस्योपरि श्रीकाष्ठनिर्मितं पीठं संस्थाप्य तत्पीठं श्वेतवस्त्रेणाच्छादयेत् ॥ ततश्चतुर्दिक्षु स्वस्तिकेष्वव्रणस्फुटितान् कलशान् अनेक वर्णां श्चतुरश्चन्दनचर्चितान् स्रग्दामवेष्टितकण्ठान्नवाहतवस्त्रभूषितान् कलशान् धान्यराशौ निधाय ह्रदोदकेन नदीसङ्गमोदकेन वा कलशान् पूरयित्वा ततः "उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हन मे पापं यन्मया दुष्कृतं कृत" [तै, आ, प्र, ६, अ, १] मित्यन्तेन मन्त्रेण कलशेषु पञ्च मृदः संस्थाप्य "गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रिय"[,,] मिति मन्त्रेण चन्दनागरु कस्तूरीं कर्पूरादीन् गन्धान्रोचनां च गुग्गुलुं च निक्षिप्य सहकारादि प्रशस्तपल्लवेष्वन्यतमानि पल्लवानि कलशमुखेषु यथाशोभं विनिक्षिपेत् ॥ ततश्चत्वारो ऋत्विजः? पूर्वादिदिगवस्थितकलशेषु "त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वान्द्वेषांसि प्रमुमुग्ध्यस्म" दित्यनेन मन्त्रेण वा स्वशाखापरिपठित वरुणप्रकाशकैर्मन्त्रान्तरै र्वा ओं भूर्भुव स्वरिति व्याहृतिभिर्वा वरुणाय नम इति वा नाममन्त्रेण वारुणमावाह्य षोडशोपचारपूजां पञ्चोपचारपूजां वानिर्वर्त्य पूर्वोक्ता 'आनो भद्राः क्रतवो यन्तु विश्वत' इत्यादिकं वा 'शंनो वातः पवता मातरिश्वा' इत्यादिकां वाऽन्यां वा स्वस्वशाखापरिपाठितां वा शान्ति पठेयुः ॥ एतस्मिन्नेव समय आचार्यो भद्रासनस्योत्तरभाग ऐशान्यां विनायकं तज्जननीमम्बिकां च पीठादिषु प्रतिष्ठाप्य वक्ष्यमाण मन्त्राभ्यामावाहन प्रभृति निवेद्यपर्यन्तां पूजां कुर्यात् ॥ मन्त्रौ तु ॥ "तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात्" ॥ विनायकमन्त्रः ॥ "सुभगायै विद्महे काममालिन्यैच धीमहि ।

तन्नो गौरी प्रचोदयात् " अम्बिकामन्त्रः ॥ अथ गृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य चरुं श्रपयित्वा ततो गवाज्यलोडीकृतेन गौरसर्षपकल्केनोद्वर्तिताङ्गं सर्वौषधिचूर्णैस्तथा चन्दनागरु कस्तूरिकादिभिश्च विलिप्तशिरसं यजमानं भद्रासने उपविश्य गृह्योक्तमन्त्रेण स्वस्तिवाचनं कुर्वीत ऋत्विगादिब्राह्मणसहित आचार्यः ॥ स्वस्तिवाचनानन्तरं च जीवत्पतिपुत्राभिरूपगुणशालिनीभिः सुवेषाभिः स्त्रीभिः कृतमङ्गलं यजमानमभिषिंचेदाचार्यः ॥ तत्र पूर्वे दिशावस्थितं कलशमादाय 'सहस्राक्षं शतधार मृषिभिः पावनं कृतम् तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते' ॥ इत्यनेन मन्त्रेणाभिषिञ्चेत् ॥ ततो दाक्षिणदिगवस्थितं कलशमादाय 'भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददु' रित्यनेन मन्त्रेण ॥ तदनन्तरं पश्चिमदेशावस्थितं कलशमादाय । 'यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि । ललाटे कर्णयो रक्ष्णो रापस्ता घ्नन्तु ते सदे' त्यनेनाभिषिञ्चेत् ॥ तत उदग्देशावस्थितं कलशं गृहीत्वा पूर्वोक्तैः सहस्राक्षमित्यादिभिस्त्रिभिर्मन्त्रैः-रभिषिञ्चेत् । एवमभिषिच्य सव्यपाणिगृहीतकुशान्तरिते यजमानमूर्धनि सार्षपंतैलमौदुम्बरेण स्रुवेणादाय वक्ष्यमाणैर्मन्त्रैर्जुहुयात् ॥ 'ओं मिताय स्वाहा, ओं सम्मिताय स्वाहा, ओं शालाय स्वाहा, ओं कण्टकाय स्वाहा, ओं कूष्माण्डाय स्वाहा, ओं राजपुत्राय स्वाहा' एवं षड्भिर्मन्त्रैर्मूर्ध्नि हुत्वा तदनन्तरं पूर्वपक्वेन चरुणा पूर्वोक्तैः षड्भिर्मन्त्रैस्तस्मिन्नेवाग्नौ चरुं हुत्वाऽग्नेरिन्द्रादिष्वभिषेकशालायां चेन्द्रादि लोकपालेभ्यस्तत स्तन्नाममन्त्रैर्बलिं दद्यात् ॥ नाममन्त्रास्तु 'इन्द्राय नमः, अग्नये नमः, यमाय नमः, वरुणाय नमः, वायवे नमः, सोमाय नमः, ईशाय नमः, ब्रह्मणे नमः, अनन्ताय नमः' ॥ अथ यजमानः स्नात्वा शुक्लमाल्याम्बरधरो गुरुणासहितो विनायकायाम्बिकायै च कृताकृतांस्तण्डुलांश्च पललौ दनमेव चेत्यादिना निर्दिष्टं कृताकृतद्रव्यजातमुपहारं दत्वा ततः शिरसा भूमिं गत्वा कुसुमसहितेनोदकेन प्रत्येकं पूर्वोक्तविनायकाम्बिका गायत्रीभ्यामर्घं दत्वा तथा दूर्वा सर्षपपुष्पाञ्जलिं दत्वा विनायकमम्बिकां चोपतिष्ठेत् ॥ उपस्थानमन्त्रस्तु ' रूपं देहि यशो देहि भगं भगवति देहि मे । पुत्रान् देहि

धनं देहि सर्वकामांश्च देहि म ' इति ॥ अत्र मन्त्रे भगवन् देहिमे भगमित्यूहं कृत्वा प्रथमतो विनायक मुपस्थाय, पश्चाद्यथापठितेन मन्त्रेणाम्बिकामुपतिष्ठेत् ॥ ततश्चाचार्यः शूर्पकुशानास्तीर्योपहार-शेषं तत्र निधाय चतुष्पथं गत्वा तत्र वक्ष्यमाणमन्त्रैर्बलिं दद्यात् ॥ मन्त्रस्तु । बलिं गृह्णन्तु मे देवा आदित्या वसवस्तथा मरुतश्चाऽश्विनौ रुद्राः सुवर्णाः पन्नगाः ग्रहाः ॥ असुरा यातुधानाश्च पिशाचाः मातरो नगाः । शाकिंन्यो यक्षवैताला योगिन्यः पूतनाः शिवाः । जम्भकाः सिद्ध गन्धर्वा माला विद्याधरा नगाः । जगतः शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः । मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्तास्ते भूतप्रेताः सुखावहाः ' ॥ इति चतुष्पथ बलिदानमन्त्राः ॥ अनन्तरमाचार्याय वस्त्रद्वयसहितां दक्षिणां स्वशक्त्यनुसारेण भूरिदक्षिणामप्यृत्विगादिभ्योऽन्येभ्यो ब्राह्मणेभ्यो दत्वा ब्राह्मणान् भोजयेत् ॥ इति विनायकशान्तिः ॥ अथ नवग्रह-यज्ञः ॥ अथ याज्ञवल्क्यः ॥

"श्रीकामः शान्तिकामो वा ग्रह यज्ञं समारभेत् ।
वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नपि " ॥

ग्रहानाह ॥ " सूर्यःसोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥

ग्रहप्रतिमानिर्माण द्रव्याण्याह ॥

"ताम्रकात् स्फाटिका द्रक्तचन्दनात् स्वर्णकादुभौ ।
रजतादयसः सीसा त्कांस्यात्कार्याः ग्रहाःक्रमात्
स्वर्णै वा पटेलेख्या गन्धैर्मण्डलकेषु च ? । "

अथ पूजाविधिमाह ॥

"यथा वर्णैः प्रदेयानि वासांसि कुसुमानि च ।
गन्धामलयजाश्चैव धूपो देयश्च गुग्गुलुः ।
कर्तव्या मन्त्रवन्तश्च चरवः ? प्रतिदैवतम् " ।

ग्रहमन्त्रमाह ॥ 'आ कृष्णेन,' इमन्देवा', 'अग्निमूर्धा', 'उद्बुध्यस्व', 'ब्रहस्पते अति', 'अन्नात्परिस्रुत', 'शन्नो देवी', 'काण्डात्', 'केतुं कृण्वन्' ॥ होमाय समिधमाह ॥

"अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः ।
उदुम्बरः शमी दूर्वाः कुशाश्च समिधः क्रमात्" ॥

होमसंख्या माह ॥

" एकैकस्याष्टशतमष्टाविंशतिरेव वा ।
होतव्यामधुसर्पिर्भ्यां दध्ना क्षीरेणवायुताः" ॥

नैवेद्यार्थं ब्राह्मणभोजनार्थं च द्रव्याण्याह ॥

" गुलोदनंपायसञ्च हविष्यंक्षीरपैष्टिकम् ।
दध्योदनं हविश्चूर्णं मांसंचित्रान्नमेव च ॥
दद्याद्ग्रहक्रमादेव द्विजेभ्यो भोजनं बुधः ।
शक्तितो वा यथालाभं सत्कृत्यविधिपूर्वकम्" ॥

गुडमिश्र ओदनो गुडौदनः ॥ हविर्हविष्यं च समुत्पन्नादि ॥ क्षीरषाष्टिकं क्षीरमिश्रः षष्टिकौदनः ॥ हविः घृतोदनः चूर्णं तिलचूर्णमिश्र ओदनः ॥ मांसं भक्ष मांसमिश्रोदनः ॥ चित्रान्नं नानाविध ओदनः ॥ गुडादीनामभावे यथालाभमोदनादि ॥ सन्मानपूर्वकं नैवेद्यार्थं ब्राह्मणभोजनार्थं च दद्यादित्यर्थः ॥ दक्षिणामाह ॥

"धेनुः शङ्खस्तथानड्वान् हेमवासो हयः क्रमात् ।
कृष्णा गौ रायसं छाग एता वै दक्षिणाः स्मृताः ॥
यश्च यस्य यदादुष्टः सतं यत्नेन पूजयेत् ।
ब्राह्मणै श्च वरो दत्तः पूजिताः पूजयिष्यथः ॥
ग्रहाधीना नरेन्द्राणा मुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतः तस्मात्पूज्यतमा ग्रहाः" ॥

इति याज्ञवल्क्यप्रोक्ता ग्रहशान्तिः ॥

अथ नवग्रहयज्ञप्रयोगः ॥ 'शुभे दिने नित्यकर्मानन्तरं 'अमुकप्रयोजनार्थं नवग्रहमखेन यक्ष्य' इति सङ्कल्प्य स्वगृह्योक्तविधिना स्वस्तिवाचनं विधायाचार्यवरणानन्तरं ब्रह्माणां चाथवा चतुरो ब्राह्मणानृत्विजो वृणीत ॥ तथा च स्कन्दपुराणे ॥

"नवग्रह मखे कुर्या दृत्विजश्चतुरान् शुभान् ।
अथवा चैकमभ्यर्च्येत् विधिना ब्रह्मणा सह" ॥

इति ॥

एतच्चोपलक्षणम् ॥ अतश्चाष्टोत्तरसहस्रसंख्यया होमं कर्तुं चिकीर्षति । तर्हि कर्मणो निर्वाहाय ग्रहसंख्याकानृत्विजो वृणीत ॥ सर्वत्राचार्यब्रह्माणौ नियतौ ॥ अत्रायं वरणप्रयोगः ॥ वरणकाल एक ऋत्विग्देय वस्त्रालङ्कारादि द्विगुण मुदङ्मुखोपवेशिताय गुणवत्तमायैकस्मै ब्राह्मणाय दत्वा स्वयं पूर्वाभिमुखः सन् 'अहं ग्रहयज्ञेन यक्ष्ये । तत्रैभिश्चन्दनताम्बूलहेमालङ्कार वासोभिराचार्यत्वेन त्वामहं वृण' इति ॥ 'वृतोस्मीत्यलंकारैः इत्याचार्यो ब्रूयात् ॥ एवं तदर्धालङ्कारान्इतरेभ्यो दत्वाऽस्मिन् कर्मण्यृत्विक्त्वेन त्वामहं वृण' इति वृणीत ॥ तत्राचार्यादयः कर्म कुर्युः ॥ कुण्डादिनिर्माणप्रकारस्तु स्कन्दपुराणे ॥

"नवग्रहमखे कुण्डं हस्तमात्रं समंभवेत् ।
चतुरस्रमधो हस्तं योनिवक्त्रं समेखलम् ॥
चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता ।
मानहीनाधिकं कुण्डं मनेकभयदं भवेत्" ॥

हस्तमात्रं समं भवेत् ॥ चतसृष्वपि दिक्षु कुण्डस्य हस्तमात्रप्रमाणं भवतीत्यर्थः ॥ अधो ? हस्तं खातमपि हस्तमात्रं भवतीति यावत् ॥ योनिवक्त्रं कुण्डस्य पश्चिमदिग्भाग उपरितनमेखलयाः मध्ये वक्ष्यमाण लक्षणोपेता या योनिः सैव वक्त्रं यस्य तत्तादृक् ॥ गजोष्ठसन्निभयोनिवक्त्रं वा। पिप्पलपत्राकृति योनिवक्त्रं वा कुण्डं भवेत् ॥ भवति तद्वदुच्छ्रिता विस्तारवदेव चतुरङ्गुल विस्तृतसमुच्छ्रिता ॥ अयमेको मेखलापक्षः ॥ मेखलात्रितयं चात्र कुर्वीत ॥ तथा च चिन्तामणौ ॥

"द्विरङ्गुलोच्छ्रिता कार्या प्रथमा मेखला बुधैः ।
त्रिरङ्गुलोच्छ्रिता तद्वद्द्वितीया समुदाहृता ॥
उच्छ्रायविस्ताराभ्यां च तृतीयां चतुरङ्गुला ।
द्व्यङ्गुलस्तत्र विस्तारः पूर्वयोरपि शिष्यते" ॥

पूर्वयोः प्रथमाद्वितीयामेखलयोः । योनिलक्षणमपि तत्रैव ॥

"वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलविस्तृता" ।

षड्वा सप्तेति विकल्पः ॥

"कूर्मपृष्ठोन्नता मध्ये पार्श्वयो श्चाङ्गुलोच्छ्रिता ।
गजोष्ठसदृशी तद्व दायता छिद्र संयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते ।
मेखलोपरिसर्वत्र अश्वत्थ दलसन्निभा" ॥

अश्वथ्थदलसदृशावयवा योनिर्भवतीत्यर्थः॥ लक्षण लक्षित कुण्डकरणाशक्तौ स्थण्डिलं चतुरस्रं हस्तपरिमितं प्रकल्पयेत् स्थण्डिलं वा प्रकल्पये दिति स्थण्डिलस्याप्यग्न्यधिष्ठानत्वेन विधानात् ॥ एवं कुण्डं स्थण्डिलं वा कृत्वा तस्योत्तरपूर्वविभागे ग्रहादिस्थापनार्थं स्थण्डिलं वेदिं वा विदधीत ॥

तथा स्कन्दपुराणे ॥ तस्य चोत्तरपूर्वेण । स्थण्डिलं हस्तमात्रकं । द्विवप्रं चतुरस्रच वितस्त्योछ्रयसंमितं ॥ द्विवप्रमित्यनेन वेदिकानिर्माणं उच्यते ॥ अतएव मत्स्यपुराणे—गर्तस्योत्तरपूर्वेण वितास्तिद्वय विस्तृतां ॥ वप्रद्वयवृतां वेदिं वितस्त्युछ्रयसंमिताम् स्थापनाय च देवानां चतुरस्रामुदक्प्लवाम् ॥ गर्तस्य कुण्डस्योत्तरपूर्वेणेशानभागे वप्रद्वयं मेखलाद्वयम् ॥ तत्र त्र्यङ्गुलोच्छ्रायः प्रथमवप्रः॥ त्र्यङ्गुलोछ्रायो द्वितीयो वप्रः ॥ विस्तारस्तु द्वयोरप्यङ्गुलपरिमितः ॥ उदक्प्लवामुदक्निम्नाम् ॥ एवं स्थण्डिलं वेदिंवा विनिर्माय फलपुष्पादियुतं वितानं तत्रोपरि कुर्वीत ॥ अथ गृह्योक्तविधिनाऽग्न्यधिष्ठानेऽग्निं प्रणीय ग्रहायतने ग्रहादीन् देवान् स्थापयेत् ॥ तथा च मत्स्यपुराणे ॥

" अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् ।
देवतास्तत्रसंस्थाप्य विंशतिर्द्वादशाधिकाः " ॥

तस्यां वेदिकायां तत्र शुक्ल तण्डुलैः समन्ततः ? । पूजयित्वा ततो मध्ये ताम्रवर्णै स्तण्डुलैः सूर्यस्य मण्डलाकारमधिष्ठानं कुर्वीत ॥ तस्मान्मण्डलादाग्नेय दिग्भागे शुक्लतमैरक्षतै श्चतुरस्रमधिष्ठानं सोमाय ॥ सूर्यमण्डलाद्दक्षिणतो रक्तचन्दनलिप्तैरक्ताक्षतैस्त्रिकोणाकार मधिष्ठानं मङ्गलाय ॥ सूर्यस्य मण्डलादैशान्यां सुवर्णवर्णैरक्षतैः बाणाकृतिमधिष्ठानं बुधाय ॥ सूर्यमण्डलादुत्तरतः सुवर्णवर्णैरक्षतैर्दीर्घं चतुष्कोणमधिष्ठानं गुरवे ॥ मध्यमण्डलात्पूर्वतः शुक्लतमैरेव तण्डुलैः पञ्चकोणमधिष्ठानं भार्गवाय॥ मध्यमण्डलात्प-

श्चिमतः कृष्णवर्णैस्तण्डुलै धनुराकृतिरधिष्ठानं शनैश्चराय। मध्य-मण्डलात् निऋऋति कोणे सीसाख्य द्रव्यवर्णैः अक्षतैः कृष्णवर्णैर्वा-नैर्ऋत्यदिग्भागे शूर्पाकारमधिष्ठानं राहवे॥ मध्यमण्डलाद्वायव्य-दिग्भागे शुभैस्तण्डुलै धूम्रवर्णै र्वा ध्वजाकारलक्षणमधिष्ठानं केतवे कुर्वीत॥ ततश्च मण्डलाकार चतुरस्रत्रिकोणबाणाकृति दीर्घ चतुरस्र पञ्चकोण चापाकृति शूर्पाकृति ध्वजाकारेषु ताम्रस्फटिकरक्तचन्दन सुवर्ण रजत लोहसीस कांस्य मयेषु मध्यमाङ्गुलिमध्यपर्वप्रमाणो-न्नतेषु सूर्यादि प्रतिमानिर्माण द्रव्येषु वक्ष्यमाणप्रकारेणोल्लिखितान् सूर्यादीन् मध्यमाग्नि दक्षिणेशानोत्तरपूर्वपश्चिमनैर्ऋतवायुदिग्भागेषु विदधीत॥ तत्रापरो विशेषः स्कन्दपुराणोक्तः॥

"शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ।
प्रत्यङ्मुखः शनिःसोमः शेषा दक्षिणतो मुखाः"॥

अथवाऽऽदित्याभिमुखानेवेतरग्रहादीन् स्थापयेत्॥ तथा चिन्तामणौ॥

"आदित्याभिमुखाःसर्वे साधिप्रत्यधिदेवताः।
स्थापनीया मुनिश्रेष्ठ नान्तरेण पराङ्मुखाः"॥

अधिदेवतासहिताः सोमादिग्रहाः साधिप्रत्यधिदेवता इत्युच्यन्ते॥ नान्तरेणेति॥ आदित्यस्यान्यस्य च स्थापितग्रहमध्येऽन्यो ग्रहो न स्थापनीय इत्यर्थः॥ नच पराङ्मुखाः स्थापनीया इत्यर्थः॥ स्कन्द-पुराणे॥

"भानुन्तु मण्डलाकारं सोमं तु चतुरस्रकम्।
अङ्गारकं त्रिकोणं च बुधं बाणाकृतिं तथा॥
गुरुश्च पट्टिशाकारं पञ्चकोणं तु भार्गवम्।
धनुषाकारमन्दं च शूर्पाकारं तु राहवे॥
ध्वजाकारश्च केतव" इति॥

भानुन्तु मण्डलाकारमित्यादि॥ अत्रभान्वादि शब्दैस्तत्तद्वर्णाक्षतै-र्विरचितग्रहायनानि वर्तुल चतुरस्रादीनि धिष्ण्यानि लक्ष्यन्ते॥ तथा सूर्यादिमूर्त्युल्लेखनाधिकरणानि ताम्रादिनिर्मितानि वर्तुल चतुरस्रा-दीनि वस्तून्यपि दीर्घं गुरु चतुरस्रमिति गुरुं तदुल्लेखनाधिकरणं

तदायतनं दीर्घं चतुष्कोणं च कुर्वीत ॥ पञ्चास्रं पञ्चकोणम् । याज्ञवल्क्यः ॥

"ताम्रात् स्फटिका द्रक्तचन्दनात्स्वर्णकादुभौ ।
रजतादयसः सीसात् कांस्यात्कार्याः ग्रहाः क्रमात् ।
स्वस्ववर्णैर्वापटे लेख्या गन्धैर्मण्डलकेषु वा." ॥

स्ववर्णैस्ताम्रादिवर्णैर्वर्णकै स्ताम्रवर्णः । वर्णकाभावे रक्तवर्णकेन वा सूर्यमूर्तिर्लेख्या ॥ गन्धैस्तत्र ग्रहवर्णैः ॥ मण्डले तत्तद्ग्रहस्थापनायतने ॥ मत्स्यपुराणे ॥

"मध्ये तु भास्करं विद्यात् लोहितं दक्षिणेन तु ।
उत्तरेण गुरुं विंद्यात् बुधं पूर्वोत्तरेण तु ॥
पूर्वे तु भार्गवं विंद्या त्सोमं दक्षिणपूर्वके ।
पश्चिमे च शनिंविंद्या द्राहुं दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुं स्थापयेच्छुक्लतण्डुलैः" ।

दक्षिणेनेत्येनप्प्रत्ययः ॥ एनपा द्वितीयेत्यनेन सूत्रेण भास्करमिति द्वितीथा । भास्करं दक्षिणेन भास्करस्यदक्षिणभागे ॥ लोहितमङ्गारकम् ॥ विद्याज्जानीयात् ॥ अथवा समर्थे एनप् प्रत्ययः ॥ मध्ये तु भास्करं विद्यात् तस्य दक्षिणेन लोहितं विद्यात् ॥ दक्षिणप्रदेश इत्यर्थः ॥ एवमुत्तरत्रापि ॥ पूर्वोत्तरेण ईशानदिग्भागे ॥ दक्षिणपूर्वक आग्नेय्यां दिशि ॥ दक्षिणपश्चिमे नैर्ऋतदेशे ॥ पश्चिमोत्तरतो वायव्ये ॥ शुक्लतण्डुलै ग्रहस्थापनादेशं तण्डुलाः शुक्लतण्डुलाः ॥ उपरितत्तद्वर्णतण्डुलैरुपलक्षितेषु प्रदेशेष्वादित्यादीन् स्वस्वायतनानतिक्रमेणस्थापयेत् निदध्यात् अथवा तत्तद्वर्णोपलक्षितेषु प्रदेशेषु ग्रहप्रतिमां निधाय पश्चात् शुक्लतण्डुलैः कृत्वास्थापयेत् । प्रतिष्ठां कुर्यात् ॥ ग्रहाणामपि लक्षणानि ॥ मत्स्यपुराणे ॥

"पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंस्थश्च द्विभुजः स्यात् सदा रविः ॥
श्वेतः श्वताम्बरधरः शक्तिशूलगदाधरः ।
दशाश्वरथसंस्थश्च गदापाणिश्च चन्द्रमाः ॥

रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदः स्याद्धरात्मजः ॥
पीतमाल्याम्बरधरः कर्णिकारदलद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ” ॥

गुरुशुक्रयो र्लक्षणमाह ॥

“ देवदैत्यगुरू तद्व त्पीतश्वेतौ चतुर्भुजौ ।
दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥
इन्द्रनीलद्युतिः शूली वरदोगृध्रवाहनः ।
बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥
करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥
धूम्राद्विबाहवः सर्वे गदिनो विकृताननाः ।
गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः” ॥

नवग्रहसाधारण धर्मान् पादत्रयेण चतुर्थचरणेन केतुसंख्याश्चाह ॥

“सर्वे किरीटिनः कार्याः ग्रहा लोकहितावहाः ।
अङ्गुलेनोच्छ्रिताःसर्वे शतमष्टोत्तरं सदा” ॥

शतमिति केतूनामानन्त्यप्रदर्शनार्थम् नतु नियमार्थम् ॥ पूज्यात्वेकैव मूर्तिः ॥ शिष्टाचारात् ॥ गोभिलीय नवग्रहे ॥

“द्वादशाङ्गुलंलिखेदर्कं सोमं तु द्विगुणं लिखेत् ।
भृगुंनवाङ्गुलश्चैव गुरुश्चैव षडङ्गुलम् ॥
बुधं भूमिसुतं चैव सौरिञ्च द्व्यङ्गुलं लिखेत् ।
सोमादर्द्धाङ्गुलं राहुं केतुमध्यर्द्धमङ्गुलम् ” ॥

ग्रहावाहनाधिकारः । एवमग्निप्रणयनानन्तरं ग्रहवेदिकायामुक्तस्थानेषु सूर्यादिप्रतिमा व्याहृतिभिरावाह्य स्थापयेत् ॥ अत्रायं प्रयोगः ॥ प्रणवस्य ब्रह्मार्ऋषिः ॥ देवी गायत्री छन्दः ॥ परमात्माऽग्निर्वार्देवता ॥ व्याहृतीनां क्रमेण जमदग्नि भरद्वाज भृगव ऋषयः ॥ अग्निवायुसूर्या देवताः॥ सूर्याद्यावाहनार्थे विनियोगः॥ “ ओं भूर्भवः स्वः कलिङ्गदेशोद्भव काश्यपगोत्र सूर्य एह्यागच्छेत्यावाह्येह तिष्ठेति रक्तपुष्पाक्षतैः स्थापयेत् ॥ ओं भूर्भुवस्सुवः यमुनातीरोद्भव सोम इहागछेत्यावाहाद्य श्वेतपुष्पाक्षतैः इह तिष्ठेतिस्थापयेत् ॥ ओं

भूर्भुवस्वरवन्तीसमुद्भव भरद्वाजसगोत्र भौम, इहागच्छेत्यावाह्य पीतपुष्पाक्षतैः स्थापयेत् ॥ ओं भूर्भुवस्वः मगधदेशोद्भवात्रेयसगोत्र बुध इहागच्छेत्यावाह्य पीतपुष्पाद्यैरिह तिष्ठेति स्थापयेत् ॥ ओं भूर्भुवस्वः सिन्धुदेशोद्भव आङ्गीरस गोत्र बृहस्पते इहागच्छेत्यावाह्य पीतपुष्पाक्षतैरिह तिष्ठेति स्थापयेत् ॥ ओं भूर्भुवः सुवः भोजकटदेशोद्भव भार्गवगोत्र शुक्र इह आगछेत्यावाह्य श्वेतपुष्पाक्षतैः इह तिष्ठेतिस्थापयेत् ओं भूर्भुवः स्वः सौराष्ट्रजकश्यपसगोत्र शनैश्चरेहागच्छेत्यावाह्य कृष्णपुष्पैरिहतिष्ठेति स्थापयेत् ॥ ओं भूर्भुवःस्वः विराटपुरोद्भव पैठीनसगोत्र राहो इह आगच्छेत्यावाह्य कृष्णपुष्पाक्षतैरिहतिष्ठेति स्थापयेत् ॥ ओं भूर्भुवः स्वरन्तर्वेदिसमुद्भव जैमिनिसगोत्र केतो इहागच्छेत्यावाह्य धूम्रपुष्पाक्षतैरिह तिष्ठेति स्थापयेत् " ॥ यथोक्तकुसुमतण्डुलाभावे यथालाभोपपन्नैः कुसुमतण्डुलैः स्थापयेत् ॥ स्कन्दपुराणे ॥

" जन्मभूर्गोत्रमेतेषां वर्णस्थान मुखादि च।
योऽज्ञात्वाकुरुते शान्तिं ग्रहास्तेनावमानिताः ॥
उत्पन्नोर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः।
अङ्गारकस्त्ववन्त्यान्तु मगधायां हिमांशुजः ॥
सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा।
शनैश्चरस्तु सौराष्ट्रे राहुर्वैराटिकेपुरे ॥
अन्तर्वेद्यां तथा केतु रित्येता ग्रहभूमयः।
आदित्यः काश्यपेगोत्रे आत्रेय श्चन्द्रमा भवेत् ॥
भारद्वाजो भवेद्भौम ताथात्रेय श्च सोमजः।
शक्र पूज्याङ्गिरागोत्रः शुक्रो वै भार्गवस्तथा ॥
शनिः काश्यप एवाथ राहुः पैठीनसिस्तथा।
केतवो जैमिनेयाश्च ग्रहा लोकहितावहाः ॥
भान्वङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ।
सोमपुत्रो गुरुश्चैव तावुभौपीतकौ स्मृतौ ॥
कृष्णं शनैश्चरं विद्या द्राहुश्चित्राश्च केतवः।
वर्णरूपगुणैर्युक्तान् व्याहृत्याऽऽवाहयेत्तुतान्" ॥

एवं सूर्यादीनावाह्य संस्थाप्याधिदेवताः स्थापयेत् ॥ ओं भूर्भुवः स्वः ईश्वर आगच्छेह तिष्ठेति श्वेतपुष्पाक्षततण्डुलैः सूर्यस्य दक्षिणपार्श्वे ईश्वरम् ॥ ओं उमे इहागच्छेह तिष्ठेति सोमस्य दक्षिणे पार्श्वे उमाम् ॥ ओं स्कन्द इहा० भौमस्य दक्षिणपार्श्वे स्कन्दम् ॥ ओं विष्णो० बुधस्य दक्षिणे पार्श्वे विष्णुम् ॥ ओं ब्रह्मन्० गुरोर्दक्षिणपार्श्वे ब्रह्माणम् ॥ ओं इन्द्र० शुक्रस्य दक्षिणे पार्श्वे इन्द्रम् ॥ ओं यम० शनैश्चरस्य दक्षिणे पार्श्वे यमम् ॥ [1]ओं काल राहोर्दक्षिणे पार्श्वे कालं, ओं चित्रगुप्त० केतोर्दक्षिणे पार्श्वे चित्रगुप्तम्। एतान् पुष्पाक्षतैः स्थापयेत्। ततश्च प्रत्यधिदैवताः स्थापयेत्। ओं भूर्भुवः सुवः अग्ने इहागच्छ तिष्ठेति श्वेतपुष्पाक्षतैः सूर्यस्य वामभागे अग्निं सोमस्य वामपार्श्वे आपः, भौमस्य वामपार्श्वे भूमिं बुधस्य वामपार्श्वे विष्णुं जीवस्य वामपार्श्वे इन्द्रं शुक्रस्य वामपार्श्वे इन्द्राणीं शनैश्चरस्य वामपार्श्वे प्रजापतिं राहोर्वामपार्श्वे सर्पान् केतोः वामपार्श्वे ब्रह्माणं श्वेतकुसुमाक्षतैः स्थापयेत्।

अधिदेवता दक्षिणतो वामे प्रत्यधिदेवताः स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक्। इति संग्रहकारः। चिन्तामणौ अधिदेवतास्थापनं प्रकारान्तरेण दर्शितम्। सूर्यस्यैवोत्तरे शम्भुं उमां सोमस्य दक्षिणे। स्कन्दमंगारकस्यैव दक्षिणस्यान्निवेशयेत्। सौम्यात्पश्चिमतो विष्णुं ब्रह्मा जीवस्य पूर्वतः। इन्द्रमिन्द्राशतो विद्धि मन्दस्याग्नेयतो यमः। राहोः पूर्वोत्तरे कालं सर्वभूतभयावहम्। केतोर्नैर्ऋतदिग्भागे चित्रगुप्तन्निवेशयेत् ॥ एवं ग्रहाधिदेवताप्रत्यधिदेवतानन्तरं विनायकादि पंचदेवताः स्थापयेत्। ओं भूर्भुवः सुवः। विनायक इहागच्छ। इह तिष्ठ। इति राहोरुत्तरभागे विनायकं स्थापयेत्। शनैश्चरस्य उत्तरभागे दुर्गाम्। सूर्यस्य उत्तरभागे वायुम्। राहोर्दक्षिणपार्श्वे आकाशम्। केतोर्दक्षिणपार्श्वे अश्विनिकुमारौ स्थापयेत्।

---

१. ओं काल इत्यारभ्य मत्स्यपुराणे इत्यन्तः मातृकापुस्तके विगलितः पालघाटपुस्तकतो योजितः।

" विनायकं तथा दुर्गां वायुमाकाशमेव च ।

आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ " ॥

सङ्ग्रहकार:--

" राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम् ।

गणेशदुर्गावायूंश्च राहुकेत्वोश्च दक्षिणे ॥

आकाशमश्विनौ चेति पञ्चैतान् स्थापयेत् ततः " ।

अथवा पञ्चैतांश्चोत्तरतः स्थापयेत् एवं द्वात्रिंशद्देवता आवाह्य स्थापयित्वा नाममन्त्रैः पूजयेत् । तद्यथा । ओं सूर्याय नमः इदमासनं; ओं सूर्याय नम इदं पाद्यं; ओं एष अर्घः, ओं आचमनीयं; ओं इदं स्नानं; ओं इदमाचमनीयं पुनः; ओं इदं वस्त्रं; ओं इदमनुलेपनं; ओं इमानि पुष्पाणि; ओं एष धूपः; ओं एष दीपः; ओं इदं नैवेद्यं एवं सूर्यं पूजयित्वा ' ओं सोम ' इत्यादि प्रणवादिनमोन्तैर्नाममन्त्रैः पूर्वोक्तद्वात्रिंशद्देवताः आवाहनादिक्रमेणैव पूजयेत् । अथवा वक्ष्यमाणैस्तद्देवताप्रकाशकैः वैदिकमन्त्रैरासनाद्युपचारान् कुर्वीत । तत्राचमनीयदानानन्तरं पञ्चामृतैः स्नानं कारयेत् ॥ एवं पूर्वोक्तैर्नाममन्त्रैः पूजा करणेऽपि समानम् । अतः सूर्याय नमः सूर्यं पयसा स्नपयामीत्यनेन प्रकारेण पञ्चामृतैरभिषेकः कार्यः ॥ एवं सोमादीनामपि । तत्रायं क्रमः दुग्धदध्याज्यशर्करामधूनि दुग्धदध्याज्यमधुशर्करा इति वा । आप्यायस्वेत्यस्य मन्त्रस्य गौतम ऋषिः सोमात्मकं पयो देवता । गायत्री छन्दः क्षीरस्नाने विनियोगः । ओं आप्यायस्व समेतुते विश्वतस्सोमवृष्ण्यं-भवावाजस्यसंगथे ॥ इति क्षीरस्नानम् । ओं दधिक्राव्णेति मन्त्रस्य दधिक्रावा ऋषिः ॥ सुरभ्युत्पन्नदधि देवता ॥ अनुष्टुप् छन्दः ॥ दधिस्नाने विनियोगः ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्यवाजिनः । सुरभिनो मुखाकरत् प्रण आयूँषितारिषत् ॥

दधिस्नानं परिकल्पयेत् ॥ शुक्रमसीत्यस्य यजुषः प्रजापतिः ऋषिः ज्योतीरूपं आज्यं देवता । आज्यस्नाने विनियोगः ॥ शुक्रमसिज्योतिरसि तेजोऽसि इत्याज्यस्नानम् ॥ स्वादुः पवस्वेत्यस्य मंत्रस्य, वेनऋषिः, सोमात्मिका शर्करा देवता, जगतीछन्दः शर्करास्नाने विनियोगः ॥ ओं स्वादुः पवस्वदिव्याय जन्मने । स्वादुरिन्द्राय सुहवीतुनाम्ने ॥ स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमां अदाभ्यः ॥ इति शर्करास्नानम् ॥ मधुवाता इत्यस्य मन्त्रस्य गौतमऋषिः ॥ मधु देवता ॥ गायत्री छन्दः ॥ मधुस्नाने विनियोगः ॥ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः इति मधुस्नानम् ॥ एवं पञ्चामृतस्नानानन्तरं स्नानपुनराचमनवस्त्रदानान्तां सपर्यां विधायानन्तरमिन्द्रादींनष्टौ लोकपालान् सूर्याभिमुखानावाह्य पूजयेत् शिष्टसमाचारात् । अत्र मन्त्राः । इन्द्रेतिमन्त्रे मधुछन्द ऋषिः ॥ इन्द्रो देवता ॥ गायत्री छन्दः ॥ पूजायां विनियोगः ॥ महां इन्द्रो वज्रबाहुः षोडशीशर्मयछतु । स्वस्तिनो मघवाकरोतु हन्तुपाप्मानंयोऽस्मान्द्वेष्टि मन्त्रः ॥ अग्निं दूतमिति मेधातिथि ऋषिः ॥ अग्निर्देवता ॥ गायत्री छन्दः । मन्त्रः ॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥ यमाय सोममितिमन्त्रस्य यम ऋषिः यमो देवता । अनुष्टुप् छन्दः ॥ यमपूजायां विनियोगः ॥ यमाय सोमं सुनुत यमाय जुहुताहविः । यमऽंहयज्ञो गछत्यग्निदूतो अरंकृतः ॥ मन्त्रः ॥ मोषूण इत्यस्यमन्त्रस्य कण्व ऋषिः । निर्ऋतिर्देवता । गायत्री छन्दः ॥ निर्ऋतिपूजायां विनियोगः ॥ मोषूणः परापरा निर्ऋतिर्दुर्हणावधीत् । पदीष्ट तृष्णयासह ॥ त्वन्नो अग्ने वरुणेत्यस्य मन्त्रस्य वामदेव ऋषिः ॥ वरुणो देवता ॥ [1]अनुष्टुप् छन्दः ॥ वरुणपूजायां विनियोगः ॥

त्वंनो अग्न वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः । यजिष्ठो वह्नितम श्शोशुचानो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् ॥ तव-

---

१, त्रिष्टुप छन्दः इति घ, पुस्तकपाठः ।

वाय वृतस्यत इत्यस्य विश्व ऋषिः॥ वायुर्देवता ॥ गायत्री छन्दः ॥ वायुपूजायां विनियोगः । तव वायवृतस्यतेत्वष्ठुर्जामातरद्भुत । अवस्यावृणीमहे ॥ इति मन्त्रः ॥ सोमो धेनुमित्यस्य गौतम ऋषिः ॥ सोमो देवता ॥ त्रिष्टुप् छन्दः ॥ सोमपूजायां विनियोगः ॥ सोमो धेनुं सोमो अर्वन्तमाशुं । सोमोवीरं कर्मण्यंददति । सादन्यं विदथ्यं सभेयं पितु श्रवणं योददाशतस्मै ॥ इति मन्त्रः ॥ तमीशान-मित्यस्य गौतम ऋषिः ॥ ईशानो देवता [1]गायत्री छन्दः ॥ ईशानपूजायां विनियोगः ॥ तमीशानं जगतः तस्थुषस्पतिं धियं जिन्वमवसेहूमहेवयं । पूषानो यथा वेदसामसद्वृधे रक्षिता-वायुरदब्धस्स्वस्तये॥ ते च मन्त्रा उपलक्षणार्थाः ॥ अत इन्द्रादिप्रकाश-कैर्वैदिकैर्मन्त्रैरिन्द्रादिपूजाः कार्याः ॥ अथवेन्द्राय नम इत्यादि तद्देवतानाममन्त्रैर्वा लोकपालानर्चयेत् ॥ एवं लोकपालान् संपूज्या-दित्यादीनां ग्रहाणां तत्तद्वर्णान् रक्तचन्दनप्रभृतीन् गन्धान् तत्त-द्वर्णानि पुष्पाणि समभ्यर्च्य अधिदेवतादिलोकपालान्तानां श्रीचन्दनं यथोपपन्नानि कुसुमानि समर्पयेत् ॥ अथवा पूर्वोक्तचन्दनाद्यभावे आदित्यादीनां सर्वेषामपि यथालाभोपपन्नं चन्दनं च पुष्पाणि च समर्पयेत्॥ ततो धूपदानम्॥ चिन्तामणौ "दिवाकरकुजाभ्यां हि दापयेद्रक्तचन्दनम् । चन्द्रे च भार्गवे चैव [2]श्रीखण्डं च प्रदापयेत्" ॥ चतुरस्त्रं कुङ्कुमसहितः श्रीखण्डः ॥

"कुङ्कुमेन तु संयुक्तं चन्दनं जीवसौम्ययोः ।
अगरुं चन्दनं दद्याद्राहुकेत्वर्कजेषु च ॥
ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाहरेत् ।
रवेः कुन्दरुकं धूपं शशिनस्तु घृताक्षताः ॥
भौमे सर्जरसश्चैव अगरुं च बुधे स्मृतम् ।
सिल्हकं गुरवे दद्याच्छुक्रे बिल्वागरुं तथा ॥
गुग्गुलुं मन्दचारे तु लाक्षां राहोश्च केतवे "।

---

१. घ, पु.-जगती ।
२. सितवर्णं प्रदापयेत् घ, पु, पाठान्तरः दृश्यते ।

कुन्दरुकं सल्हकरसः॥ सिल्हकः पिण्डकः॥ सल्हकीरस इत्यर्थः॥ बिल्वागरुः बिल्वफलमज्जासहितोगरुः॥ मन्दचारः-शनैश्चरः॥ राहुकेत्वोश्च लाक्षा॥ पूर्वोक्तकुन्दरुकादिधूपाभावे सर्वेषां गुग्गुलुरेव धूपः॥ तथा च याज्ञवल्क्यः "धूपोदेयश्चगुग्गुलु" इति॥ आदित्यादीनां कुन्दरुकादिधूपदानेन तदधिदेवताप्रत्यधिदेवतयोरपि त एव धूपाः॥ विनायकादीनां गुग्गुलुरेव॥ तस्य सर्वसाधारणत्वात्॥ एवं धूपदानानन्तरं दीपं दत्वा नैवेद्यं वक्ष्यमाणं दद्यात्॥

"गुडोदनं रवेर्दद्यात्सोमाय घृतपायसम्।
लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकम्॥

दध्योदनं गुरोर्दद्याच्छुक्राय घृतमोदनम्।
मिश्रितं तिलमाषैश्च नैवेद्यं च शनैश्चरे॥

राहोर्माषोदनं दद्यात् केतोश्चित्रोदनं तथा।"

इति॥ हविष्यान्नं उत्पन्नं नीवारादि॥ क्षीरषष्टिकं क्षीरमिश्रः षष्टिकोदनः। अथवा क्षीरषष्टिकाद्यन्नप्रभेदैः तदोदनः क्षीरषष्टिकोदनः॥ पूर्वोक्तविधिनैवेद्याभावे यथालाभोपपन्नमोदनादि निवेदयेत्॥ यथाह याज्ञवल्क्यः॥ "शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वक" मिति॥ एवमधिदेवतादीनां तत्तद्ग्रहनैवेद्यं यथालाभमोदनादि समर्पयेत्॥ विनायकस्य तु मोदकसहित ओदनादिः॥ एवं नैवेद्यं दत्वा ताम्बूलदानानन्तरं ग्रहवेदिकाया ईशानादिदिग्भाग "अव्रणकलशं बहिर्दध्यक्षतविभूषितं चूतादिपल्लवाच्छन्नं-चूताश्वत्थवटोदुम्बरप्लक्षपल्लवसंयुक्तं फलवस्त्रयुगान्वितं अन्तः प्रक्षिप्तपञ्चरत्नं शुभनिर्मलजलपरिपूर्णं सप्तमृत्तिकाभिः सर्वौषधिभिश्चोपेतं दृढं कलशमक्षतानामुपरि स्थापयेत्॥ तत्र कलशे वरुणमावाहयेत्॥ तथा गङ्गादीनि तीर्थानि च॥ तथा च मत्स्यस्कन्दपुराणयोः

"प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् ।
चूतपल्लवसंछन्नं फलवस्त्रयुगान्वितम् ।
पञ्चरत्नसमायुक्तं पञ्चभङ्गयुतं तथा ॥
स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ।
गङ्गाद्याः सरितः सर्वाः समुद्रांश्च सरांसि च ॥
पञ्च भंङ्गाश्च रत्नानि पूर्वोक्ताः पञ्च पल्लवाः ।
गजाश्वरथ्यावल्मीकसङ्गमात् ह्रदगोकुलात् ॥
मृदमानीय विप्रेन्द्र सर्वौषधिजलान्वितम् ।
स्नानार्थं विन्यसेत्तत्र यजमानस्य शास्त्रवित् ॥
सुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठी बप्पक मुस्ता च सर्वौषधिगणः स्मृतः" ॥

अथ वरुणावाहनमन्त्रः ॥ तत्वायामीत्यस्य मन्त्रस्य शुनःशेप ऋषिः ॥ वरुणो देवता ॥ त्रिष्टुप् छन्दः ॥ वरुणावाहनादौ विनियोगः ॥ ओं तत्वायामि ब्रह्मणावन्दमानस्तदाशास्ते यजमानो हविभिः । अहेडमानो वरुणेहवोध्युरूशंसमान आयुः प्रमोषीः ॥ [तै. सं. का. २, प्र. १, अ. ११] ॥ एतच्च प्रदर्शनार्थम् ॥ अतोन्यैरपि वरुणप्रकाशकैर्वैदिकैर्मन्त्रैर्वरुणाय नम इति नाममन्त्रेण वरुणमावाह्य पूजयेत् ॥ अथ गङ्गाद्यावाहनमन्त्रः ॥

" सर्वे समुद्राः सरित स्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः " ॥

एवमादित्यादिदेवतावाहनादिवरुणस्थापनान्तं कर्म निर्वर्त्य पूर्वप्रतिष्ठापिताग्नौ वक्ष्यमाणविधिवत् होमकर्म समारभेत् ॥ तत्रान्वाधानप्रयोगः ॥ अस्मिन् कर्मण्यादित्याद्याः नव प्रधानदेवताः रूद्राद्याः नवाधिदेवताः, अग्न्याद्याः नव प्रत्यधिदेवताः विनायकाद्या इतरा अङ्गदेवताः ॥ समिच्चर्वाज्यतिलव्रीहयो हविः ॥ अथवा समिच्चर्वाज्यानि हविः चर्वाज्यामिश्रितं तन्त्रं साङ्गेन कर्मणा सद्यो यक्ष्य इति समिधावग्नौ निक्षिपेत् ॥ एवमन्वाधानं विधाय निर्वापः कार्यः ॥ तत्रायं प्रयोगः ॥ देवस्यत्वा सवितुः प्रसवे अश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यां सूर्यायत्वा जुष्टं निर्वपामीति चतुरो मुष्टी न्निरुप्यैवं सोमाय मङ्गलायत्वेत्यादिप्रकारेण ग्रहेभ्यश्चतुरश्चतुरोमुष्टी-

१. सटी चंपक घ, पु, पाठः ।

न्निरूप्येतरासां सर्वासां देवतानां कृते देवेभ्यो जुष्टं निर्वपामीति चतुरोमुष्टीन्निर्वपेत् ॥ यदा तु प्रतिग्रहमष्टोत्तरशतं सहस्रं वा होमं कर्तुमिच्छति तदा मुष्टिचतुष्टयनिर्वापसम्पादितद्रव्यस्य होमापर्याप्तत्वेन पूर्वोक्तनिर्वापानन्तरं होमपर्याप्तं द्रव्यं तूष्णीं निर्वपेत् ॥ एवं निरूप्य देवतार्थत्वात् त्रिः प्रक्षाल्य चरुं श्रपयित्वाभिघार्योदगुद्वास्य प्रत्यभिघारयेत् ॥ याज्ञवल्क्यः ॥ "कर्तव्या मन्त्रवन्तश्चरवः प्रतिदैवत"मिति ॥ एवं चरुश्रपणानन्तरं यथागृह्यं परिस्तरणाद्याज्यसंस्कारान्तकर्मकरणानन्तरं यजमानो यष्टव्यः ॥ देवतोद्देशेन होमीयद्रव्यत्यागं कुर्वीत ॥ याजमानिकत्वात् स्वत्वत्यागस्य युगपदनेकर्त्विक् साध्ये कर्मणि प्रत्याहुतिस्वत्वत्यागस्य कर्तुमशक्यत्वात् ॥ तत्रायं प्रयोगः ॥ सूर्य सोम भौम बुध गुरु शुक्र शनैश्चर राहुकेतु रुद्रोमास्कन्दविष्णु ब्रह्मेन्द्रयमकाल चित्रगुप्ताग्नि जलभूविष्णु शक्रेन्द्राणी प्रजापति सर्प ब्रह्म गणपति दुर्गा वायव्योमाश्विभ्यो गृह्योक्ताधारदेवताभ्यश्च प्रायश्चित्ताहुतिदेवताभ्यः स्विष्टकृदग्नये चेदं सम्पादितं समिच्चर्वाज्यव्रीहितिलयवादि मया त्यक्तमित्यभिलपेत् ॥ केचन गृहपाकादोदनमुद्धृत्य ग्रहादीनुद्दिश्य जुह्वति ॥ तत्र शिष्टाचार एव प्रमाणम् ॥ एवमुद्दिश्य त्यागे कृत इध्ममादायाज्यभागौ चक्षुषी हुत्वा सूर्यादिग्रहानुद्दिश्य होमार्थं सम्पादितेन समिदादिद्रव्येण प्रतिग्रहं प्रतिद्रव्यं दशदशाहुतीर्हुत्वा अधिदेवतादीनुद्दिश्य प्रत्येकं तिस्र स्तिस्र एकैकां वाऽऽहुतीर्हुत्वा चतसृभिर्व्याहृतिभिश्चतस्र आहुतीर्हुत्वा पश्चात् प्रतिग्रहमष्टाविंशतिरष्टोत्तरशतं अष्टोत्तरसहस्रं वा आवहितक्रमेण होमः कार्यः ॥ तत्रापि समिच्चर्वाज्यतिलादय इति क्रमः ॥ समिदाज्यचरुतिलादय इति वा ॥ अधिदेवतादीनामप्रधानदेवतात्वाद्धोमे न्यूनसङ्ख्यात्वस्वीकरणम् ॥ आसां समिधः पालाश्य एव ॥ मत्स्यपुराणे ॥ क्वचन याज्ञवल्क्यश्च ॥

"अर्कः पालाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः स्मृताः ॥
एकैकस्याष्टशतमष्टाविंशतिरेववा ।
होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः" ॥

अनेन वचनेन मध्वाज्यदध्नां समिदञ्जने समुच्चयोवगम्यते ॥
याज्ञवल्क्यस्तु विकल्पमाह ॥

"होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा पुनः" ॥

इति ॥ स्मृतिपुराणयोः स्मृतेः प्राबल्यात् पुराणवाक्यस्थश्चशब्दो वा-शब्दार्थो ग्राह्यः ॥ तथा मध्वादीनि समिदञ्जनेन विकल्पितानि ॥
चिन्तामणौ ॥

"समिधश्चात्र कर्तव्या अष्टोत्तरसहस्रकाः ।
अष्टोत्तरशतं वाथ अष्टाविंशतिरेव वा ॥
समिधां लक्षणं वक्ष्ये सङ्ख्यामासां तथैव च ।
विशीर्णा विदला ह्रस्वाः वक्राः ससुषिराः कृशाः ॥
अतिस्थूलातिदीर्घाश्च समिधः कार्यनाशनीः ।
विशीर्णाऽऽयुः क्षयं कुर्या द्विदला पुत्रनाशिनी ॥
सुषिरा व्याधिजननी कृशाच रिपुवर्द्धनी ।
दीर्घा विदेशगमनी स्थूला चात्मविनाशनी ॥
अकृशा सुसमा स्थूला सार्द्रा च सुपलाशिनी ।
प्रादेशान्ताधिकान्यूनाः समिधः सर्वकर्मणि ॥
अर्को नाशयते व्याधिं पालाशः सर्वकामदः ।
खदिरश्चार्थलाभाय अपामार्गः सुदर्शनः ॥
अश्वत्थः सर्वकामाय सौभाग्योदुम्बरस्तथा ।
शमी शमयते पापं दूर्वाऽऽयुःसुविवर्द्धनी ॥
कुशा धर्मार्थकामानां रक्षणं रक्षसां विदुः ।
अष्टोत्तरं तु साहस्रं शतमष्टाधिकं तथा ॥
अष्टाविंशतिरष्टौ वा एकैकस्य तु होमयेत् ।
होमान्ते दक्षिणां दद्यात् शान्त्यर्थं पुष्टिवर्द्धनीम्" ॥

मत्स्यपुराणे ॥

"देवानामपि सर्वेषामुपांशुपरमार्थवित् ।
स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् ॥
होतव्यं च घृताद्यत्र चरु भक्तादिकं पुनः । मन्त्रैर्दशाहुतीर्दद्यात् होमं व्याहृतिभिः पुनः ॥ मन्त्रैर्दशाहुतिरित्यादि होमार्थं संपादितेन समिदादिना ग्रहेभ्यः प्रत्येकं दशदश आहुतीर्दद्यात् । अधिदेवतादीनां

प्रत्येकं तिस्रस्तिस्र एकैकां वा दद्यादित्यर्थः । होमं व्याहृतिभिः पुनरितिभूस्स्वाहेत्याद्याभिश्चतसृभिश्चतस्र आहुतयो देयाः ॥

" उदङ्मुखाः प्राङ्मुखा वा कुर्युर्ब्राह्मणपुङ्गवाः ।
मन्त्रवन्तश्च कर्तव्याश्चरवः प्रतिदैवतम् ॥
हुत्वा तु तांश्चरून् सम्यक् ततो होमं समारभेत् ।
आकृष्णेनेति सूर्याय होमः कार्यो द्विजन्मना ॥
इमं देवेति सोमाय ब्राह्मणो जुहुयात् पुनः ।
अग्निर्मूर्धेति भौमस्य उद्बुध्यस्वे बुधस्य च ॥
बृहस्पतेऽति जीवस्य शुक्रस्यान्नात्परिस्रुतः ।
शन्नो देवीः शनेर्मन्त्रः काण्डात्काण्डाच्च राहवे ॥
केतुं कृण्वन्तु केतूनां ग्रहमन्त्राः प्रकीर्तिताः ।
रुद्रं त्र्यम्बकमन्त्रेण यवाद्यैर्होममाचरेत् ॥
आपोहिष्ठेत्युमायाश्च स्योनेति स्वामिने तथा ।
विष्णोरिदं विष्णुरिति ब्रह्मा ब्रह्मेति मन्त्रतः ॥
त्रातारमिन्द्रम्मन्त्रेण इन्द्राय जुहुयात् पुनः ।
तथा यमस्य च आयं गौरिति होमः प्रकीर्तितः ॥
कालस्य ब्रह्मजज्ञान मिति मन्त्रः प्रशस्यते ।
चित्रगुप्तस्य मंत्रस्तु "चित्रावसो" प्रकीर्तितः ॥
अग्निं दूतमिति मन्त्रेण वह्नौ च जुहुयाद्बुधः ।
उदुत्तमं वरुणेति अपां मन्त्रः प्रकीर्तितः ॥
भूमेः पृथिव्यन्तरिक्ष मिति वेदेषु पाठतः ।
सहस्रशीर्षा पुरुषः विष्णोर्मन्त्र उदाहृतः ॥
इन्द्रायेन्दुमिति मन्त्रः शक्रस्य च प्रकीर्तितः ।
[1]श्रीश्चतेति मन्त्रेण इति देव्याः समारभेत् ॥
प्रजापतेः पुनर्होमः प्रजापत इतिस्मृतः ।
नमो अस्तु सर्पेभ्य इति सर्पाणां मन्त्र उच्यते ॥
एष ब्रह्मायक्रत्विय इति ब्रह्मण्युदाहृतः ।
विनायकस्य चातून इति मन्त्रो बुधैः स्मृतः ॥

१ उत्तानपर्णे सुभगे इति घ, पु, पाठः

जातवेदस मन्त्रेण दुर्गायां जुहुयाद्धविः ।
यावाङ्कशेति मन्त्रेण अन्तरिक्षं तु पश्चिमे ॥
वायोजेतेति मन्त्रेण वायुमन्त्र उदाहृतः ।
दस्रा युवाकवेति तु अश्विभ्यां मन्त्रमुच्चरेत् ॥
पूर्णाहुतिश्च मूर्द्धानं दिव इत्यभिपातयेत् ” ।

अथ होममन्त्रः ॥ आकृष्णेनेति मन्त्रस्य हिरण्यस्तूप ऋषिः ॥ सविता देवता ॥ त्रिष्टुप् छन्दः ॥ सूर्यप्रीतये समिदादिसम्पादि तद्रव्यहोमे विनियोगः ॥ आकृष्णेनेति मन्त्रः माध्यंदिन पाठः ॥ तैत्तरीयाणां तु आसत्येन रजसावर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनादेवो याति भुवनाविपश्यन् ॥ इमं देवेति सोममन्त्रस्य गौतम ऋषिः ॥ सोमो देवता ॥ त्रिष्टुप् छन्दः ॥ सोमप्रीतये समिदादिकं पूर्ववत् ॥ इमं देवेति माध्यंदिन पाठः मन्त्रः । तैत्तरीयाणां तु आप्यायस्वसमेतुते विश्वतस्सोम-वृष्णियं । भवा वाजस्य संगथे ॥ अग्निर्मूर्द्धेति मन्त्रस्य विरूप ऋषिः। अंगारको देवता । गायत्री छन्दः अंगारकप्रीतये समिदादिसंपादित-द्रव्यहोमे विनियोगः । अग्निर्मूर्द्धा दिवः ककुत् पतिः प्रथिव्या अयं–अपां रेतांसि जिन्वति ॥ उद्बुध्यस्वेति बुधमन्त्रस्याग्नि ऋषिः ॥ बुधो देवता ॥ त्रिष्टुप् छन्दः ॥ बुधप्रीतये ॥ उद्बुध्यस्वेति मन्त्रः । बृहस्पत इति मन्त्रस्य गृत्समद ऋषिः ॥ बृहस्पतिर्देवता ॥ अनुष्टुप् छन्दः ॥ बृहस्पति प्रीतये० ॥ बृहस्पत इति मन्त्रः ॥ अन्ना-त्परिस्रुत इति वैश्वदेवकाण्डान्तः पातित्वाद्विश्वे देवा ऋषयः ॥ शुक्रो देवता ॥ षट्पदा जगती छन्दः ॥ शुक्रप्रीतये० अन्नात्परिस्रुत-मिति मन्त्रः ॥ स्वाहा ॥ अधिकं तैत्तिरीयशाखे वोक्तम् ॥ शन्नो देवीरिति शनैश्चरमन्त्रस्य सिन्धुद्वीप ऋषिः ॥ शनैश्चरो देवता ॥ उष्णिक् छन्दः ॥ शन्नो देवीरिति मन्त्रः ॥ कयान श्चित्र इति राहु-मन्त्रस्य वामदेव ऋषिः ॥ राहुर्देवता ॥ गायत्री छन्दः ॥ राहुप्रीतये० ॥ कयानश्चित्र इति मन्त्रः ॥ काण्डात्काण्डाद्धा ॥ केतुं कृण्वन्निति केतुमन्त्रस्य मधुछन्दा ऋषिः ॥ केतवो देवता ॥ गायत्री छन्दः ॥ केतुप्रीतये० ॥ सम्पादितः सर्वमन्त्रैश्च ॥ केतुं कृण्वन्निति मन्त्रः ॥ इति ग्रहमन्त्राः ॥ अथाधिदेवतामन्त्राः ॥ त्र्यम्बकमिति रुद्रमन्त्रस्य

वसिष्ठ ऋषिः॥ रुद्रो देवता॥ अनुष्टुप् छन्दः॥त्र्यम्बकमिति मन्त्रः॥ श्रीश्ववदक्रन्दः॥ विष्णोरराटम्॥ आ ब्रह्मन्॥ सजोषमिन्द्रः॥ यमाय त्वा॥ कार्षिरसि चित्रावसो॥ ग्रहदेवता अधिदेवताश्चा-स्मिन्माते॥अथाधिदेवताः॥ सनः॥ आपो अघविदसि॥ इदं विष्णुः॥ इदं देवीं॥ प्रजापतेन॥ नमोस्तु ब्रह्मजज्ञानम्॥ अधिदेवता वसि-ष्ठोक्ता मन्त्राः॥ अथ प्रत्यधिदेवता॥ आनो भद्रानुवाकेन वसिष्ठेन प्रदर्शिता॥ अथ विनायकादि पञ्च देवता मन्त्राः॥ आतून इत्यस्य विनायकमन्त्रस्य कुसीद तुरशीदी ऋषिः॥ विनायको देवता॥ गायत्रीं छन्दः॥ विनायकप्रीतये० ॥ आतून इति मन्त्रः॥ जातवेदस इति दुर्गामन्त्रस्य कश्यप ऋषिः॥ (प्राक्तनमन्त्रस्यैतत् द्विः लिखितम् पुस्तके) दुर्गा देवता॥ त्रिष्टुप् छन्दः॥ दुर्गाप्रीतये०॥ जातवेदस इति मन्त्रः॥ वायो ये ते वायुमन्त्रः॥ या वां कशेति मन्त्रः आका-शस्य॥ दस्रा युवा कव अश्विनीकुमारयोर्मन्त्रः॥ एषा उषामन्त्रस्य प्रस्कण्व ऋषिः॥ अश्विनौ देवता॥ त्रिष्टुप् छन्दः॥ अश्विप्रीतये०॥ एषा उषा अपूर्व्या व्युच्छति प्रिया दिवः स्तुषेवां अश्विना बृहत स्वाहा॥ एभिर्मन्त्रैस्सूर्याद्यानां देवतानां पूर्वोक्तप्रकारेण होमं कृत्वा जयादि होमकरणपक्षे जयादीन् हुत्वा प्रायश्चित्ताहुतीर्हुत्वा मूर्धानं दिव इत्यनेन पूर्णाहुतिं जुहुयात्॥ मूर्धानं दिव इत्यस्य मन्त्रस्य भरद्वाज ऋषिः॥ वैश्वानरो देवता॥ त्रिष्टुप् छन्दः पूर्णाहुतिहोमे विनियोगः॥ मूर्धानं वासोर्द्धारां पातायोपरि

"औदम्बरीमथार्द्रां च ऋज्वीं कोटरवर्जिताम्।
बाहुमात्रां स्रुचं कृत्वा ततः स्तम्भद्वयोरपि॥
घृतधारां तथा सम्यगग्नेरुपरि पातयेत्"।

अत्रायं प्रकारः॥ बध्वोपरिस्तम्भविधृतामौदुम्बरीभक्तिप्रमाणां स्रुचं निधाय तदुपरि शृङ्खलाविधृतेन निर्मलघृतपूरितेन कुम्भे-नाधो यवमात्रछिद्रेणाज्यं मुञ्चताऽग्नेरुपरि वासोर्द्धारां च पात-येत्॥ तस्यां घृतधारायां स्रुक् प्रणालितयाऽग्नौ पतन्त्या माग्नेयादीनि सूक्तानि श्रावयेत्॥ तत्राग्नेया अग्निमीडे पुरोहित-मित्यादि मधुछन्दा आर्षं गायत्रीं छन्दस्कम्॥ वैष्णवन्तु विष्णोर्नु-

कमित्यादि षडर्चं दीर्घतमसमार्षमनुष्टुप् छन्दस्कम् ॥ रौद्रं च आते पितरिति पञ्चदशर्चं गृत्समदार्षं त्रैष्टुभम् ॥ ऐन्द्रवं स्वादिष्ठे वि दशर्चं गायत्रं महावैश्वानरम् ॥ महावैश्वानराख्यं आरण्यके षष्ठे प्रपाठे सामद्वयम् ॥ एतच्च वैश्वानराख्यमार्षं वैश्वानरदैवतं जगती पङ्क्तिं बृहती छन्दस्कम् ॥ ज्येष्ठसाम तु मूर्धानं दिव इत्यस्यामृचि गीतम् ॥ तच्च भरद्वाजार्षं वैश्वानरदेवतार्षं त्रैष्टुभम् ॥ तमानं दिव इति मन्त्रः ॥ इयञ्च पूर्णाहुतिः फलसहिता भवति ॥ केचन स्विष्ट-कृद्धोममिच्छन्ति ॥ अतः स्विष्टकृद्धोमपक्षे प्रायश्चित्ताहुतिपूर्वं जयादिहोमानंतरं स्विष्टकृद्धोमः ॥ जयादि होमाकरणपक्षे प्राय-श्चित्ताहुतिभ्यः पूर्वमेव स्विष्टकृत् ॥ यथाह गोभिलः “ प्राक् स्विष्टकृत आवाप ” इति ॥ अस्यार्थः ॥ आवापः प्रक्षेपः ॥ ग्रहयज्ञे च समिदादिहोमा विहिताः ॥ जयादयो हि कर्मसमृद्धिकामेन हूयन्ते ॥ अतः समृद्धिकामो नात्र प्रक्षिप्यन्त इत्यारा जयादयः ॥ एवमन्यत्राप्यावापशब्दो विज्ञेयः ॥ आवापः स्विष्टकृतः स्विष्टकृद्धोमात्प्राग्भवति ॥ अग्नये स्विष्टकृते स्वाहेति स्विष्टकृद्धोममन्त्रः कूष्माण्डहोमप्रकरणोक्तमन्त्रो ग्राह्यः ॥ अतश्च स्विष्टकृद्धोमान् हुत्वा ततः स्विष्टकृतं च हुत्वा फलभूयस्त्वकामो वसोर्द्धारां जुहोति ॥ तत्प्रकारस्तु चिन्तामणौ “घृतकुम्भं वसोर्द्धारां विहिताः चमकानुवाका रुद्रविधान प्रकरणदर्शितः ॥ तेषामाग्नेयादि मानकत्वात् ॥ गो अग्नेत्यात्मकस्य साम्नो लिखितुमशक्यत्वा चेनान्याग्नेयादिसूक्तानि पाठतो न क दर्शितानि ॥ यानि चाग्निमीडे विष्णोर्नुकां आते पितः स्वादिष्ठयेती कतः सूक्तानि अग्रे दर्शितानि तानि तानि प्रदर्शितार्थानि ॥ अत अन्यान्यपि अग्न्धादिदैवत्यानि स्वशाखासमाम्नातानि यथान्यासं पठेत् ॥ ये च सूर्यसोमादि प्रका-शकाश्च ॥ आ कृष्णेनेत्यवमादयो मन्त्राः पूर्वप्रदर्शिता स्तेऽप्युपलक्ष-णार्थाः ॥ तस्मात्स्वशाखापरिपाठिताः सूर्यसोमादिप्रकाशका यथोपासं होमादिकर्मसु ग्राह्याः ॥ तत्तथा तदार्षादिकमपि विज्ञेयम् ॥ अथ प्रकृतोपयुक्ता मीमांसा प्रस्तूयते ॥ तद्यथा ॥ चत्वारो विधयः ॥ उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिरिति ॥ अज्ञात-तज्ञापनं उत्पत्तिविधिः ॥ एतच्च मीमांसायां द्वितीयाध्यायप्रमेयं ॥

शेषन्त्वाज्ञापनं विनियोगविधिः ॥ एतच्च तृतीयाध्यायप्रतिपाद्यम् ॥ प्रयोगविधिः-इतिकर्तव्यताविधिः॥ अङ्गानां क्रमादिविधिरित्यर्थः ॥ एतत्तु चतुर्थपञ्चमाध्यायप्रमेयम्॥ अधिकारविधिः-कर्मपदसंबोधनं कर्तृविशेषविधिरिति यावत्-अयं च विधिः षष्ठाध्यायप्रमेयः ॥ एवं स्थिते यत्र पृथग्वाक्यान्युत्पन्नविनियोगादिविधायकानि विद्यन्ते तत्र चत्वारोपि विधयश्चतुर्भिर्वाक्यैः सम्पद्यन्ते ॥ यत्र त्रीण्येव वाक्यानि तत्र यथायोगं त्रिभिरेव वाक्यैर्विधिचतुष्टयनिर्वाहः ॥ यत्र तु द्वे तत्र तु द्वाभ्यां विधिचतुष्टयनिष्पत्तिः ॥ यत्रचैकं तत्रैकमेव वाक्यं विध्यवस्थाचतुष्टयमनुभवतीत्येवं मीमांसकनिर्णयः॥ एवमेव प्रकृतेऽपि आवाहनप्रभृति विसर्जनान्तरेषूपचारेषु यत्र यत्र पृथक् मन्त्राः विहिताः तत्र तत्र तैः मंत्रैः ते उपचाराः कर्तव्याः येषु येषु उपचारेषु विशेषेण न विनियुक्ता मन्त्राः तेष्वप्युपचारेषु तत्तद्देवता-प्रकाशका आवाहनहोमादिषु विनियुक्ता एव मन्त्राः कर्तुरिच्छया शेषतां भजन्ते ॥ यद्यप्यग्निर्मूर्धा दिव इत्यादयो मन्त्रा अग्न्यादि प्रकाशकत्वेनाग्न्यादिदैवत्या न साक्षाद्भौमादिप्रकाशकास्तथापि गार्हपत्यमुपतिष्ठत इतीन्द्रप्रकाशकाः या ऋचस्तु गार्हपत्योपस्थाने शेषत्वबोधनादि यथाकथञ्चिदिन्द्रादिपदानामिदि परमैश्वर्ये इत्या-द्यर्थचिन्तनेन योगपूज्याःगार्हपत्ये वृत्तिरिवाग्निर्मूर्धा दिव इति मन्त्रो भौमाय कीर्तयेदित्यादिभिः पूर्वप्रदर्शितवाक्यैरग्निर्मूर्धेत्यादि मन्त्रा-णां भौमादिशेषत्वबोधनादग्न्यादिपदानां भौमादिषु यथाकथञ्चि-द्वृत्तिरवगन्तव्या साच वृत्तिरेवं गत्यर्थादगिधातोरग्निशब्द उत्पन्नः ॥ भौमोपि गमनशीलः ॥ अथवाऽग्निवर्णत्वाद्भौमस्याग्निशब्दवा-च्यत्वम् ॥ उद्बुध्यस्वाग्न इत्यत्राप्यग्निशब्दः पूर्ववत् बुधे वर्तते ॥ ततो भूयिष्ठत्वाद्वा उद्बुध्यस्वेत्यस्मिन् पदे बुधवर्णश्रुते-र्वाऽप्यक्षरसाम्यान्निर्ब्रूयादिति श्रुतेः॥ यथा पश्यकः कश्यपो भवतीति श्रुतिः॥ अन्नात्परिस्रुत इत्यस्मिन् मन्त्रे विपानं शुक्रमन्धस इति शुक्रपदं नामसाम्याच्छुक्रे वर्तते ॥ शन्नो देवीरिति मन्त्रे शनिनाम-स्मारकस्य शं न इति वर्णद्वयस्य विद्यमानत्वात् स मन्त्रः शनिद्यो-तकः ॥ कयानश्चित्र आभुवदित्यत्र चित्रपदं श्रूयते ॥ चित्रस्य राहुः यतः शिरसा लक्ष्यते ॥ अनयैव दिशाऽन्यत्रा प्यूहनीयम् ॥

एवं तत्तद्देवताप्रकाशकत्वमवगन्तव्यम् ॥ या तेनेत्युच्यते सा देवतेति सर्वानुक्रमणिकापरिभाषायामभिधानात् ॥ अन्यथाऽन्या पूज्याऽन्यमन्त्राभिधेयेतिविरोधः स्यात् ॥ अथ प्रकृतमनुसरामः ॥ एवं पूर्णाहुत्यनन्तरं वसुधारां विधाय गृह्योक्तप्रकारेण पूर्णपात्रविमोकादि कर्म कृत्वा पूर्वस्थापितवारुणकलशमादाय वक्ष्यमाणमन्त्रैर्वक्ष्यमाणलक्षणोपेतैर्द्विजैः सपत्नीकपुत्रादि परिवृतस्य यजमानस्याभिषेकः कार्यः ॥ तथा च मत्स्यपुराणे—

"अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।
पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखैः ॥
अव्यङ्गावयवैर्ब्रह्मन् हेमस्रग्दामधूपितैः ।
यजमानस्य कर्तव्यं [1]स्नपनं मूर्ध्नि तै र्द्विजैः"

अभिषेकमन्त्रेणेत्येकवचनं मन्त्रोपाध्यभिप्रायेण ॥ वाद्यमङ्गलगीतकैरिति सहार्थे तृतीया ॥ कुम्भेन तेनैवेति । तेन । पूर्वं ईशानदिग्भागस्थापितेन ॥ एवकारेण कलशान्तरेण तदुदकं नीत्वाऽभिषेको निषिध्यते ॥ प्राङ्मुखैरिति स्नपनकर्तृकर्त्विग्विशेषणम् ॥ अयमभिप्रायः ॥ यदि यजमानः पूर्वाभिमुखस्तर्हि द्विजा उत्तराभिमुखाः ॥ ईशानदिङ्मुखा वा ॥ दिक्त्रयस्यापि माङ्गलिकत्वात् ॥ चतुर्भिरित्येतच्च वृतर्त्विज उपलक्षणार्थम् ॥ अथाभिषेकमन्त्राः ॥ तत्र वैदिकैः स्वशाखोक्तमन्त्रा ग्राह्याः ॥ स्मार्तमन्त्रा स्तुः—

"सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथ स्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्च धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥
कीर्तिर्लक्ष्मी र्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः तुष्टिः कान्तिश्च मातरः ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधो जीवसितार्कजाः ॥

---

१. ' चतुर्भिः स्नपनं द्विजैः ' इति घ पुस्तकपाठः समीचीनः

ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये" ॥

एवं स्नापयित्वा पूर्वोपकल्पितैः सर्वौषधिगन्धादिभिः सपत्नीकं यजमानं स्नापयेत् ॥ सर्वौषधादिभिः स्नानाय तैर्मस्तकप्रभृति गात्राण्यनुलिप्य पश्चान्निर्मलोदकेन स्नानम् ॥ ततः शुक्लाम्बरधरः सन्नग्नेः पश्चादवस्थित ऋत्विग्भ्यो दक्षिणां दद्यात् ॥ मत्स्यपुराणे—

"ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
सर्वौषधैः सर्वगन्धैः स्नापितो वेदपुङ्गवैः ॥
यजमानः सपत्नीक ऋत्विजश्च समाहिताः ।
दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः" ॥

अत्रायं दक्षिणादानप्रकारः ॥ वरणक्रमेणोदङ्मुखोपविष्टायर्त्विजे प्राङ्मुख उपविष्टो यजमानः कुशयवजलपाणिःसन् वक्ष्यमाणं तत्तद्देवतामन्त्रं पठित्वा कृतस्यैतस्य कर्मणः साद्गुण्यार्थममुकगोत्रायामुकशर्मणेऽमुकवेदाध्यायिनेऽमुकद्रव्यं संप्रदद इतिवा द्रातुमुत्सृजामीतिवा वदेदिति दक्षिणा अपि ॥ मत्स्यपुराणे—

"सूर्याय कपिलां धेनुं दद्याच्छाङ्खं तथैन्दवे ।
रक्तं धुरन्धरं दद्या द्भौमाय ककुदान्वितम् ॥
बुधाय जातरूपञ्च गुरवे पीतवाससी ।
श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ॥
आयसं राहवे दद्या त्केतुभ्यः छागमुत्तमम् ।
सुवर्णेन समा कार्या यजमानेन दक्षिणाः" ॥

धुरन्धरोऽनड्वान् ॥ जातरूप= सुवर्णः ॥ सुवर्णेन समा इति सूर्यस्य दक्षिणा धेनो यावती मूल्येन या या दक्षिणा न्यूना भवति

तावत्तावन्मूल्यं सुवर्णं तस्याः तस्याः पूर्णां तत्तत्समकालमेव दातव्यम्॥ नचात्र सुवर्णमन्त्राः पृथक् पृथक् पठनीयाः॥ "सुवर्णमथवा दद्याद्गुरुर्वा येन तुष्यति। स्वमन्त्रेण प्रदातव्याः सर्वाः सर्वस्य दक्षिणा" इति चिन्तामणौ दर्शनात्॥ एतच्चाल्पधनविषयम्॥ प्रभूतधनेन स्वस्य मूल्यसमं सुवर्णं दातव्यम्॥ गवाद्यभावे तु तन्मूल्यसुवर्णं दातव्यम्॥ तत्राप्यल्पधनेन प्रथमोपात्त गोमूल्यं; तत्राप्यशक्त श्चेत् "गवामभावे निष्कं स्या त्तदर्द्धं पादमेव चे" ति दिशा सर्वत्र परिकल्पनीयं॥ तत्र क्रमेण मन्त्रा अपि मत्स्यपुराणे॥

कपिलादानमन्त्रः "कपिले सर्वदेवानां पूजनीयासि रोहिणि।
तीर्थदेवमयी यस्मा दतः शान्तिं प्रयच्छ मे"॥

अथ शङ्खदानमन्त्रः॥

"पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानान्तु मङ्गलम्।
विष्णुना विधृतो नित्य मतः शान्तिं प्रयच्छ मे"॥

अथर्षभदानमन्त्रः॥

"धर्मस्त्वं वृषरूपेण जगदानन्दकारक।
अष्टमूर्तेरधिष्ठान मतः शान्तिं प्रयच्छ मे"॥

हिरण्यदानमन्त्रः॥ "हिरण्यगर्भगर्भस्त्वं हेमबीजं विभावसोः। अनन्तपुण्यफलदं अतश्शान्तिं प्रयच्छ मे"॥

पीतवस्त्रदानमन्त्रः॥

"पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम्।
प्रदानात्तस्य मे विष्णुरतः शान्तिं प्रयच्छ मे"॥

अश्वदानमन्त्रः॥

"विष्णुरश्वस्य रूपेण यस्मादमृतसम्भवः।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे"॥

धेनुदानमन्त्रः॥

"धेनुस्त्वं पृथिवी सर्वा यस्मात्केशवसन्निभा।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे"॥

लोहदानमन्त्रः॥

" यस्मादायस कर्माणि अदाधाराणि सर्वदा ।
हे लोह लाङ्गलादीनि तस्माच्छान्ति प्रयच्छमे " ॥

छागदानमन्त्रः ॥

" यस्मात्त्वं छाग यज्ञाना माहुतित्वे व्यवस्थितः ।
यानं विभावसोर्नित्य मतः शान्ति प्रयच्छ मे " ॥

तत्तत् ग्रहोक्तमुख्यदक्षिणाभावे सर्वेभ्य आदित्येभ्यो यथा शक्त्य-लङ्कृतामेकैकां गां दद्यात् ॥

तत्र गोदानमन्त्रः ॥

" गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्मात्सुखं मेस्या दिहलोके परत्र च " ॥

सर्वेष्वपि दक्षिणापक्षेषु पूर्वोक्तदक्षिणाव्यतिरेकेण शय्या-रत्नानि भूमिमृत्विग्भ्योवाऽन्येभ्यो ब्राह्मणेभ्यो दक्षिणा देया ॥ एतच्च विभवे सति ॥ तत्र शय्यादानमन्त्रः ॥

"यस्मादशून्यं शयनं केशवस्य शिवस्य च ।
शय्या ममाप्यशून्यास्तु तस्माज्जन्मनि जन्मनि" ॥

रत्नदानमन्त्रः ॥

"यथा रत्नेषु सर्वेषु सर्वे देवाः प्रतिष्ठिताः ।
तथा शान्ति प्रयच्छन्तु रत्नदानेन मे सुराः " ॥

अथ भूमिदानमन्त्रः ॥

"यथा च भूमिदानस्य कलां नार्हन्ति षोडशीम् ।
दानान्यन्यानि मे शान्ति भूमिदानाद्भवत्विह" ॥
एवं सम्पूजयेद्भक्त्या वित्तशाठ्यविवर्जितः ।
वस्त्रकाञ्चनरत्नाद्यै र्माल्यगन्धानुलेपनैः" ॥

एवं ग्रहादीन् सम्पूज्य दक्षिणादानान्तं कर्म कृत्वा वह्निं प्रदक्षिणीकृत्य ग्रहवेदिकासमीपं गत्वा सूर्यादीन् प्रदक्षिणीकृत्य च तेभ्यः पुष्पाञ्जलिं दद्यात् ॥ विसर्जयेत् ॥ अथ विसर्जनमन्त्रः ॥

"यान्तु देवगणाःसर्वे पूजामादाय पार्थिवात् ।
इष्टकामप्रदानार्थं पुनरागमनाय च" ॥

पार्थिवात्प्रदेशाद्यान्त्वित्यर्थः ॥

"अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥
यस्य पीडाकरो नित्य मल्पवित्तस्यवा ग्रहः ।
तन्तु यत्नेन सम्पूज्य शेषानभ्यर्चयेद्बुधः" ॥

तन्तु यत्नेनेति पीडाकरं ग्रहम् ॥ यत्नेन प्रयत्नेन ॥ पीडाकरं ग्रहं पूर्वोक्तरीत्याऽधिदेवताप्रत्यधिदेवतासहितं पूजयित्वा शेषानपि ग्रहान् पुष्पाञ्जल्यादिभिर्यथाशक्ति सम्पूजयेत् ॥ इयं च प्रतिकूल-ग्रहपूजा तत्तद्वासरे कर्तव्या ॥ राहुकेत्वोः पृथक्त्वाभावान्मन्दवारो ग्राह्यः॥ "शनैश्चरादीन् मन्दवारे तु पूजयेत् प्रयतोनरः" इति बौधायनकारिकातः ॥

"ग्रहा गावो नरेन्द्रा श्च ब्राह्मणा स्तु विशेषतः ।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः ॥
तस्मान्न दक्षिणाहीनं कर्तव्यं भूतिमिच्छता ।
विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥
निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाश्रितेषु वै" ।

इति नवग्रहयज्ञः ॥

अथ कर्मविपाकोपयुक्तमथादि सुवर्ण रजत धान्य भूमि-प्रमाणम् । तत्र याज्ञवल्क्यः ॥

"जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ।
तेऽष्टौ लक्षास्तुतास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षट्के यवोमध्यं तु ते त्रयः ।
कृष्णलाः पञ्चते माष स्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम् ।
त्रयः कृष्णल"

इत्यादि ॥ ते मध्यं यवास्त्रयः कृष्णलः ॥ कृष्णलो गुञ्जा ॥ ते कृष्णलाः पञ्च माषकः ॥ ते माषाः षोडश सुवर्णः ॥ चत्वारः सुवर्णाः पलम् ॥ पञ्च सुवर्णाः पलं वा ॥ अगस्त्यप्रोक्तोपि ॥

"यवःस्यात्सर्षपैः षड्भि गुंञ्जा च स्यात्त्रिभिर्यवैः।
गुञ्जाभिः पञ्चभिश्चैको माषकः परिकीर्तितः॥
भवेत् षोडशभिर्माषैः सुवर्णस्तैः पुनः स्मृतः।
चतुर्भिः पलमेतस्य दशशो धरणं विदुः॥

एतस्य पलस्य दशैव धरणं विदुः। दशपलानि धरमित्यर्थः॥ तथा च मनुः॥ "पलं सुवर्णश्चत्वारः पलानि धरणं दशे"ति सुवर्णप्रमाणम्॥ अथ रूप्यप्रमाणम्। याज्ञवल्क्यः॥

"द्वे कृष्णलेरूप्यमाषो धरणं षोडशैव ते।
शतमानन्तु दशभि र्धरणैः पलमेव च॥
निष्कः सुवर्णाश्चत्वार" इति॥

द्वे कृष्णले द्वे गुञ्जे पूर्वोक्तरूप्यमाषो भवति॥ मध्यमयवषट्कपरिमित एको रूप्यमाषो भवतीत्यर्थः॥ ते माषाः षोडश धरणम्॥ दशभिर्धरणैः शतमानमित्युच्यते॥ तदेव पलमभिधीयते॥ चत्वारः सुवर्णा निष्कः॥ अत्र रजतप्रमाणे हेमप्रमाणोक्तसुवर्णशब्दोपादानं हेमप्रमाणोक्तमाषप्राप्त्यर्थः॥ अत्र पञ्चकृष्णलिको माषः॥ न कृष्णलद्वयपरिमितः॥ तैःषोडशभिर्माषै रेणुकः सुवर्णः॥ ते च सुवर्णाश्चत्वारो निष्कम्॥ हेमप्रमाण भूतचतुस्सुवर्णमानोन्मितं रजतं निष्क इत्यर्थः॥ मनुः॥

"द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः।
ते षोडश स्याद्धरणं पुराणश्चैव राजतः॥
धरणानि दश ज्ञेयः शतमानस्तु राजतः॥
चतुः सौ वर्णिको निष्को विज्ञेयस्तु प्रमाणतः" ॥

समधृत इति मध्यमयवप्रमाणधृत इत्यर्थः॥ यत्र तैः सुवर्णोनिष्क इत्यभिधीयते॥ सौवौ निष्कं दद्यादित्यादिषु तत्र हेमप्रमाण भूतसुवर्णचतुष्टयोन्मितं हेमद्रव्यमेव हेमनिष्कशब्दवाच्यम्॥ न रजतद्रव्यम्॥ अथ धान्यादिप्रमाणम्॥ स्कन्दपुराणे

"यवगोधूमधान्यानि तिलाः कङ्कुकुलत्थकाः।
माषामुद्गामसूराश्च निष्पावाः सकुलत्थकाः॥

श्यामाका श्चैव नीवाराः जार्तिलाः सगवेधुकाः।
कोविदारसमायुक्ता तथा वेणुयवाश्चये॥
ग्राम्यारण्याः स्मृताह्येता ओषध्यश्च चतुर्दश"

वाराहपुराणे

"पलद्वयन्तु प्रसृतं मुष्टिमेकं पलं स्मृतम्।
अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौतुपुष्कलम्॥
पुष्कलानि तु चत्वारि आढकः परिकीर्तितः।
चतुराढको भवेद्द्रोण एतन्मानस्य लक्षणम्"॥

भविष्यत्पुराणे

"पलद्वयं तुप्रसृतं द्विगुणंकुडुबं मतम्।
चतुर्भिःकुडुबैःप्रस्थः प्रस्थाश्चत्वार आढकः॥
आढकैस्तैश्चतुर्भिस्तु द्रोणस्तु कथितो बुधैः।
कुम्भो द्रोणद्वयं सूर्पः खारी द्रोणस्तु षोडश॥
पलश्च कुडुबप्रस्थ आढको द्रोण एव च।
धान्यमानेषु बोद्धव्यः क्रमशोऽमी चतुर्गुणाः॥
द्रोणैःषोडशभिःखारी विंशत्या कुम्भ एव च।
कुम्भैस्तु दशभिर्वाहो धान्यसङ्ख्या प्रकीर्तिता"॥

विंशत्या कुम्भ इति विंशतिद्रोणैरित्यर्थः॥ अत्र धान्यसङ्ख्येत्युपलक्षणम्॥ एतदेव द्रवद्रव्यविषयेपि॥ स्कन्दपुराणे पलद्वयेन प्रसृथ मानवमिति॥ द्रोणद्वयं कुम्भ इत्येक पक्षः॥ कुम्भस्यैव शूर्प इति संज्ञान्तरम्॥ विंशत्या द्रोणैः कुम्भ इत्येकः पक्षोऽपरः॥ पलसहस्रपरिमाणः कुम्भ इति दानविवेकः॥ द्वादशपलाधिकपञ्चशतपरिमाणः कुम्भ इत्यपरे॥ एते च पक्षा देशकालशक्त्याद्यपेक्षया योज्याः॥ त्रिकाडयादिनिखंडौ च ष्पाद्यानिघण्टिवै (?)

"मानं तुलाङ्गुलिप्रस्थैः गुञ्जापञ्चाद्यमाषकः।
तेषोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्॥
सुवर्णविस्वो हेम्नोक्ष कुरुविन्दुस्तु तत्पले।
तुलास्त्रियांपलशतं भारः स्याद्विंशतिस्तुला॥
आचिना दश भाराःस्यु शाटको भार आचितः"।

इति धान्यादिकमानम् ॥ अथ भूमिमानम् ॥ मार्कण्डेयपुराणे

"परमाणुः परं सूक्ष्मं त्रसरेणुर्महीरजः ।
बालाग्रं चाप्यलिख्या च यूका चाथ यवोऽङ्गुलम् ॥
क्रमादष्टगुणानाहु र्यवानष्ट ततोऽङ्गुलम् ।
षडङ्गुलपदं प्राहु र्वितस्तिर्द्विगुणः स्मृतः ॥
द्वौ वितस्ती ततो हस्तो ब्रह्मतीर्थद्विजेष्टनात् ।
चतुर्हस्तो धनुर्दण्डो नाडिका तद्युगेन तु ॥
क्रोशो धनुःसहस्रे द्वे गव्यूतिश्च चतुर्गुणा ।
द्विगुणा योजनं तस्मात्प्रोक्तं सङ्ख्यानकोविदैः" ॥

वसिष्ठः

"दशहस्तेन वंशेन दशवंशात्समन्ततः ।
पञ्चवाऽभ्यधिकान् दद्यादेतद्गोचर्मवोच्यते" ॥

बृहस्पतिः

"दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्तनम् ।
दश तान्येव गोचर्म ब्राह्मणेभ्यो ददातियः" ॥

मत्स्यपुराणे

"दण्डेन सप्तहस्तेन त्रिंशद्दण्डानि वर्तनम् ।
त्रिभागहीनं गोचर्म मानमाह प्रजापतिः" ॥

इति भूमिमानम् ॥ इति परिमाणप्रकरणम् ॥ अथ कर्मविपाक प्रकरणोपयुक्तकृच्छ्रादिलक्षणानि ॥ तत्र पादकृच्छ्रस्वरूपापरिज्ञाने प्राजापत्यस्वरूपस्य ज्ञातुमशक्यत्वात् प्रथमं पादकृच्छ्रमभिधीयते ॥

याज्ञवल्क्यः

"एकभक्तेन नक्तेन तथैवायाचितेन तु ।
उपवासेन चैवायं पादकृच्छ्रः प्रकीर्तितः" ॥

एकभक्तं नाम दिवैकस्वोदित मध्याह्न कालसकृद्भोजनम् नक्तं तु सूर्यास्तमयानन्तर मुक्तकाले सकृत्कृतभोजनम् । दिवा रात्रौ वाऽप्रार्थितोपनतस्य सकृद्भोजनमयाचितम् । दिवैवाप्रार्थितोपनतभोजनमित्यपरे । स्वकीयस्य वा परकीयस्य वाऽन्नस्य याचनं यस्मिन्न विद्यते तद्भुक्तमयाचितम् ॥ दिवा रात्रावप्यभोजनमुपवासः । एवं

चतुरहस्साध्यः पादकृच्छ्रः। एकभक्तादौ च ग्रास सङ्ख्यानियमाः पराशरेणोक्ताः ॥

" सायन्तु द्वादशग्रासाः प्रातः पञ्चदशस्मृताः।
चतुर्विंशतिरयाच्याः परं निरशनं स्मृत " मिति ॥

सायं नक्तम् ॥ प्रातरेकभक्ते ॥ आपस्तम्बस्तु प्रकारान्तरेणाह

"सायं द्वाविंशतिग्रासाः प्रातः षड्विंशतिस्मृताः।
चतुर्विंशतिरयाच्यास्तु परं निरशनास्त्रयः" ॥
कुक्कुटाण्डप्रमाणाः स्युर्यथा चास्यं विशेत्सुखम् "। इति ॥

अनयोश्च पक्षयोः शक्त्यपेक्षयाऽयाचितं त्र्यहं

"सायं त्र्यहं तथा पादः प्रातः प्रातस्तथा त्र्यहम्।
प्रातः पादं चरेच्छूद्रः सायं वैश्यस्य दापयेत् ॥
अयाचिते तु राजन्ये त्रिरात्रं ब्राह्मणे स्मृतम्"।

प्रातः पादं एकभक्तत्रयम्। आयाचितमयाचितत्रयम्। त्रिरात्रमुपवासत्रयं चेतिक्रमेणैकभक्तादीनां त्रयाणामानुलोम्येन स्वस्थानवृद्धिरित्युच्यते ॥ यथाह मनुः ॥

" त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परञ्चनाश्नीयात्प्राजापत्यमथाचरन् " ॥

प्रातिलोम्येन विवृद्धिरिति द्वितीयः पक्षः ॥ उपवासत्रयमयाचितत्रयं नक्तत्रयमेकभक्तत्रयमिति प्रातिलोम्येन स्वस्थान वृद्धिः ॥ अमुं पक्षमाह वसिष्ठः ॥ प्रातिलोम्यं चरेयुरिति दण्डकलितवदावृत्तिरिति तृतीयः पक्षः॥। एकभक्तनक्तायाचितोपवासक्रमेणैकैकं कृत्वा पुनरेकभक्तादीन्यनुक्रमेण वर्तयेत् ॥ इयमावृत्तिर्दण्डकलितवदावृत्तिरित्युच्यते ॥ एवं त्रिरावृत्तौ प्राजापत्यकृच्छ्रं भवति ॥ अमुमपि पक्षं वसिष्ठ एवाह ॥

" अहः प्रातरहर्नक्तमहरेकमयाचितम्।
अहः पराकं तत्रैकमेवं चतुरसौ परौ " ॥

पराक उपवासपरः ॥ तथा॥

"अनुग्रहार्थं विप्राणां मनुर्धर्मभृतां वरः ।
बालवृद्धातुरेष्वेवं शिशुकृच्छ्रमुवाच ह"ति ॥

पूर्वोक्तपक्षत्रयमध्येऽन्यतमपक्षं पक्षीकारेण वक्ष्यमाणजपहोम विवर्जनेनाचरणं चतुर्थः पक्षः ॥ एवं पक्षमाहाङ्गिराः ॥

"तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्" ॥

इति ॥ प्राजापत्यलक्षणं मनुः ॥

"एकैकं ग्रासमश्नीयात् त्र्यहानि त्रीणि पूर्ववत् ।
त्र्यहंचोपवसेदन्त्यमिति कृच्छ्रंचरन् द्विजः" ॥

त्रीणि त्र्यहानि नव दिनानि ॥ पूर्ववत् एकभक्तादिकाले तन्नियमयुक्तः सन्नित्यर्थः ॥ याज्ञवल्क्यः ॥ "अयमेवातिकृच्छ्रः स्यात् पाणिपूरान्नभोजनः" । अयमेव पूर्वोक्तप्राजापत्यधर्मक एव ॥ अयन्तु विशेषः ॥ एकभक्तनक्तायाचितेषु दिनेषु पाणिपूरमात्रं प्रसृतिपूरमात्रमन्नं भुञ्जीत ॥ न तु पूर्वोक्तद्वाविंशत्यादिग्रासानिति ॥ अत्र च पाणिपूरणमन्नमात्रमेव विधेयम् ॥ न तु भोजनम् ॥ एक भक्तनक्तायाचितेषु प्राजापत्यभोजनं अप्राप्तं तदनुवादेन पाणिपूरणान्नं विधीयत इति ॥ नोपवासदिनेषु पाणिपूरणान्नभोजनप्राप्तिः ॥ ननु याज्ञवल्क्योक्तपाणिपूरणान्नग्रासमात्रभोजनयोः शक्त्यपेक्षो विकल्पः पापापेक्षो वा ॥ अतिकृच्छपादे व्यवस्था प्रजापत्यादिव-द्रष्टव्या ॥ इति कृच्छ्रलक्षणम् ॥ अथ कृच्छ्रातिकृच्छ्रः (?) ॥ तत्र गौतमः ॥ अब्भक्षपक्षस्तृतीयः ॥ स कृच्छ्रातिकृच्छ्र इति द्वादशरात्र-मित्यनुवर्तते ॥ अतो द्वादशरात्रमुदकेनैव वर्तनम् ॥ अतो द्वादशरात्रं उदकेनैवानुवर्तनं नान्येनेत्युक्तं भवति ॥ यमः ॥

"एकैकं पिण्डमश्नीयात् त्र्यहं काल्ये त्र्यहं निशि ।
अयाचितं त्र्यहं पिण्डं वायुभक्षस्त्र्यहं वरम् ॥
अतिकृच्छ्रं चरेदेतत्पवित्रं पापनाशनम् ।
चतुर्विंशतिरात्रन्तु नियतात्मा यतेन्द्रियः ॥
कृच्छ्रातिकृच्छ्रं कुर्वीत एकस्थाने द्विजोत्तमः" ॥

कल्ये प्रातः ॥ एकभक्तकाल इति यावत् ॥ एकस्थान इत्येकयत्नेन ॥ पूर्वद्वादशाहः साध्यातिकृच्छ्रद्वयेनैकः कृच्छ्रातिकृच्छ्रोसावित्यर्थः ॥ याज्ञवल्क्यः ॥

" कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिः " ।

यमे चतुर्विंशतिरात्रसाध्ये कृच्छ्रातिकृच्छ्रे भोजनदिनेष्वेकैकग्रासमात्र विधानादुग्धभोजनेऽपि यत्र पुटिकादिभिर्ग्रासपरिमाणं कृत्वैकग्रासपर्यासं दुग्धमश्नीयात् ॥ एवं कर्तुमशक्तश्च कृच्छ्रप्रकृतिभूतप्राजापत्योक्तरीत्या 'सायन्तु द्वादशग्रासा' इत्यादि ग्राससङ्ख्यया तावद्दुग्धं पातव्यम् ॥ भोजनदिनेषु गौतमाद्युक्तकृच्छ्रातिकृच्छ्रपक्षेषु शक्त्यपेक्षया विकल्पः । इति कृच्छ्रातिकृच्छ्रलक्षणम् । अथ तप्तकृच्छ्रः । याज्ञवल्क्यः ॥

"तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः" ॥

अयञ्च दिनचतुष्टयसाध्यः कृच्छ्रः । मिताक्षरायां त्वयं महातप्तकृच्छ्र इत्युक्तम् । तप्तकृच्छ्रस्तु द्विरात्रसाध्य इत्यप्युदीरितम् । तप्तक्षीरघृताम्बुभिः समस्तैरेकदिनं वर्तेत एकाह उपवासः । द्व्यहः साध्यत्वं तप्तकृच्छ्रस्येति ॥ मनुः ॥

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतान् तिलान् ।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः " ॥

प्रतित्र्यहं पिबेदिति जलादीन् प्रत्येकं त्र्यहं त्र्यहं पिबेदित्यर्थः । अयञ्च द्वादशरात्रसाध्यः कृच्छ्रः ॥ जलादिपरिमाणमाह पाराशरः ॥

"अपां पिबेत्तु त्रिपलं द्विपलन्तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिः त्रिरात्रञ्चोष्णमारुतम्" ॥

इति । त्रिरात्रमुष्णोदकस्य बाष्पं पिबेदित्यर्थः । त्रिरात्रमिति पूर्वत्राप्यन्वेति ॥ अतोऽपांत्रिपलं त्रिरात्रञ्चेत्येवं योज्यम् । प्रकारान्तरेणाप्याह तप्तकृच्छ्रं पराशरः ।

षट्पलन्तु पिबेदम्भः त्रिपलन्तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिः तप्तकृच्छ्रे विधीयते" ॥

अत्र जलादिकमुष्णं ग्राह्यम्। इति तप्तकृच्छ्रलक्षणम्॥ अथ-सान्तपनम्। याज्ञवल्क्यः-

"कुशोदकन्तु गोक्षीरं दधि मूत्रं शकृद्घृतम्।
प्राश्यापरेद्युरुपवसेत् कृच्छ्रं सान्तपनं चरेत्"॥

इत्यपरः पाठः। मिताक्षरापाठस्तु॥

"गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्।
निर्दिष्टं पञ्चगव्यन्तु पवित्रं कायशोधनम्॥
गोमूत्रं ताम्रवर्णायाः श्वेतायाश्चापि गोमयम्।
पयः काञ्चनवर्णाया नीलायाश्च तथा दधि॥
घृतञ्च कृष्णवर्णाया सर्वं कापिलमेववा।
अलाभे पञ्चवर्णानां पञ्चगव्येष्वयं विधिः॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदक" मिति

गोमूत्रादीनि षडप्येकीकृत्य पीत्वाऽऽहारान्तररहितः सन्तिष्ठेत्। परेद्युरुपवसेदिति दिनद्वयसाध्यकृच्छ्रः। याज्ञवल्क्येनोक्तश्लोके गोमयादीन् दिनेषु प्राशनविधानादप्रमितितानामेकदिनप्राशन-मवगम्यते॥ पराशरः॥

गोमूत्रमिति आरभ्य पंचगव्येष्वयं विधिरित्यन्तं पूर्ववत्॥

"गौमूत्रमाषकास्त्वष्टौ गोमयस्य तु षोडश।
क्षीरस्य द्वादश प्रोक्ताः दध्नस्तु दश कीर्तिताः॥
गोमूत्रवद्घृतस्याष्टौ तदर्द्धन्तु कुशोदकम्।
गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम्॥
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि।
तेजोसि शुक्रमेवाज्यं देवस्य त्वा कुशोदकम्॥
पञ्चगव्य मृचा पूतं होमयेदग्निसन्निधौ।
सप्त पत्रा स्तुयेदर्भा अच्छिन्नाग्रा शुशितिविषः।
एतैरुद्धृत्य होतव्यं हुतशेषं पिबेद्द्विजः।
प्रणवेन समालोडय प्रणवेनाभि मन्त्र्य च॥
प्रणवेन समुद्धृत्य तत्पिबेत्प्रणवेन तु।
मध्यमेन पलाशस्य पद्मपत्रेण वा पिबेत्॥

स्वर्णपात्रेण ताम्रेण ब्रह्मतीर्थेन वा पुनः।
तत्त्वगस्थिगतं पापं देहे तिष्ठतिमानवे॥
ब्रह्मकूर्चोपवासस्तु दहत्यग्निरिवेन्धनम्"।

याज्ञवल्क्योक्त दिनद्वयसाध्यसान्तपनमेव ब्रह्मकूर्चं इति मन्यते॥
मरीचिः॥

"देवताः सम्प्रवक्ष्यामि आनुपूर्व्येण यस्य वा।
वरुणो देवता मूत्रे गोमये हव्यवाहनः॥
सोमः क्षीरे दध्नि वायु घृते रविरुदाहृतः।
गोमूत्रं ताम्रवर्णाया विभक्तं वर्णगोचरम्॥
उदकं सर्ववर्णे तु तस्य वर्णो न गृह्यते।
गोमूत्रस्य पलं ग्राह्य मङ्गुष्ठार्द्धन्तु गोमयम्।
क्षीरस्य त्रिपलं ग्राह्यं पलमेकं कुशोदकम्॥
आपोहिष्ठेति वालोड्य उद्यम्य प्रणवेन तु।
अग्नये स्वाहा सोमायेन्द्रायेदं विष्णुर्मान स्तोके
गायत्र्या प्रजापते न त्वं देतान्यग्नौ जुहुयात्॥
नदीं प्रस्रवणे तीरे रहस्ये निर्कृते तथा।
शुक्लवासाः पवित्रात्मा अहोरात्रोषितः पिबेत्॥
पालाशेन च पत्रेण विल्वपत्रेण वा पिबेत्।
तृतीयं ताम्रपात्रं वा ब्रह्मपात्राणि तानि वै॥
प्रतिमासं पौर्णमास्याममावास्यां च वा पिबेत्।
ब्रह्महा हेमहारी च येचान्येऽस्थिगता मलाः॥
ब्रह्मकूर्चो दहेत्सर्वं यथाग्नि स्तृणमेव तु"।

जाबालः॥ गोमूत्रं पूर्ववत्

"एकैकं प्रत्यहं पीत्वा त्वहोरात्रमभोजनः।
कृच्छ्रः सान्तपनोनाम सर्वपापप्रणाशन" इति॥

एतज्जाबालोक्तं सप्ताहसाध्यं सान्तपनम्॥ इतिसान्तपनलक्षणम्॥ अथातिसान्तपनम्॥ शङ्खः॥

"एतदेवत्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम्"।

एतदेवेत्यनेन मिश्रितं पञ्चगव्यं परामृश्यते॥

तत्पञ्चगव्यं दिनत्रयमाहारान्तरनिरपेक्षेण पिबेदित्यर्थः ॥ इति यतिसान्तपनलक्षणम् ॥ अथ महासान्तपनम् ॥ याज्ञवल्क्यः ॥

"पृथक् सान्तपनद्रव्यैः षडहः सोपवासकः ।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः" ॥

गोमूत्रगोमयक्षीरदधिघृतकुशोदकानि सान्तपनद्रव्याणि ॥ एकैकस्मिन् दिन एकैकं पिबेत् ॥ सप्तमे दिन उपवासः ॥ एतानि कुशोदकादीनि प्राशनान्याहारान्तरनिवर्तकानि ॥ एवमन्येपि ॥ यमः ॥

"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत् ।
त्र्यहं दधि त्र्ययं सर्पिः त्र्यहं क्षीरं ततः शुचिः ॥
महासान्तपनं ह्येत त्सर्वपापप्रणाशनम् ।"

एतत्पञ्चदशाहसाध्यम् ॥ जाबालः ॥

"षण्णामेकैकमन्येषां त्रिरात्रमुपयोजयेत् ।
त्र्यहश्चोपवसेदन्त्यं महासान्तपनं विदु" रिति ॥

षण्णां पूर्वोक्त गोमूत्रादीनाम् । अयमेकविंशतिरात्रसाध्यो महासान्तपनकृच्छ्रः । इति महासान्तपनकृच्छ्रलक्षणम् । अथपराकः । याज्ञवल्क्यः ॥

"द्वादशाहोपवासेन पराकः परिकीर्तितः" ।

इति पराकलक्षणम् । अथ यावकव्रतम् । शङ्खः ॥

"गोपुरीषाद्यवान्नश्च मासं नित्यं समाहितः ।
व्रतन्तु यावकं कुर्यात्सर्वपापापनुत्तये" ॥

गोभक्षणार्थं यवान् दत्वा तदनन्तरं गोमयमध्यान्निस्सृतान्यवान् गृहीत्वा तैर्यवैश्चरुवत्कृत्वा तेनान्नेनैकनक्तभक्तानि कुर्वन् मासं नयेत् ॥ एतद्यावकव्रतमित्युच्यते ॥ पूर्वमेव यवानादाय गोमूत्रे पाकंविधाय पूर्ववदेव मासवर्तनेन गोमूत्रयावकमित्युच्यते ॥

अत एवाह योगी याज्ञवल्क्यः ॥

"आतृप्तेश्चारयित्वा गां गोधूमान्यवमिश्रितान् ।
गोमयोत्थांश्च संगृह्य पचेद्गोमूत्रयावकम्" ॥

इति यावकव्रतम् ॥ गोमूत्रयावकव्रतलक्षणम् ॥ अथ पयो व्रतम् ॥ तत्र "कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविं शतिं" इति याज्ञवल्क्योक्त-प्रकारेण मासमेकं ग्रासमात्रपयसा पूर्णवर्तनं पयोव्रतमित्युच्यते ॥ यस्मिन् व्रते येन द्रव्येण पोषणं शरीरवर्तनं क्रियते तद्व्रतं तेन व्यपदिश्यते ॥

अत एव मार्कण्डेयः ॥

"पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ।
मूलकृच्छ्रो मतो मूलै स्तोयकृच्छ्रो जलेनत्वि"ति ॥

इति पयोव्रतम् ॥ अथ चान्द्रायणम् ॥ गौतमः ॥

"अथातश्चान्द्रायणम् । तस्योक्तो विधिः कृच्छ्र" इति ॥

कृच्छ्रे प्राजापत्यकृच्छ्रे विधिरुक्त इत्यर्थः ॥ तद्यथा ॥

"तिष्ठेदहनि, रात्रावासीनः, क्षिप्रकामः। सत्यंवदे, न्नानार्येण संभाषेत। रौरवयौधा जीये नित्यं प्रयुञ्जीत । अनुसवनमुदकोपस्पर्शी-मापोहिष्ठेति चतसृभिः पवित्रयतीभिर्मार्जयेत् हिरण्यवर्णा शुचय इत्यष्टाभिः ॥ अथोदकतर्पणम् ॥ नमो मोहनाय महामायाय धून्वते तापसाय पुनर्वसवे, नमोऽज्यांयौमाय वसुविन्दाय सर्वविन्दाय नमः पराय सुपाराय महापाराय परव्रिष्णवे नमो रुद्राय पशुपतये देवाय त्र्यम्बकाय त्रिम्बकायैकचरायाधिपतये हराय शर्वायेशानायोग्राय वज्रिणे घृणिने कपर्दिने नमः सूर्यादित्याय नमो नीलग्रीवाय शिति-कण्ठाय नमः कृष्णाय पिङ्गलाय नमो ज्येष्ठाय श्रेष्ठाय वृधयेन्द्राय हरिकेशायोर्ध्वरेतसे नमः शस्याय पावकाय पावकव-र्णाय कामाय कामिरूपिणे नमो दीप्ताय दीप्तितेजसे नमस्तीर्णाय तीर्णरूपिणे नमः सौम्याय पशुपतये पुरुषाय महापुरुषाय मध्यमपुरु-षायोत्तमपुरुषाय ब्रह्मचारिणे नमश्चन्द्रललाटाय कृत्तिवाससे नमः। इत्येतदेवादित्योपस्थानम् अत एवाज्याहुतयः। इति। अस्यार्थः। तिष्ठेदहनि रात्रावासीत क्षिप्रकाम इति तु प्राजापत्यादि कृच्छ्रद्वया-पनोद्यापन क्षिप्रमेकेनैव कृच्छ्रेण युक्तोभवामीत्येवं कामयते अयमह-न्यवश्यकर्माविरुद्धेषु कालेषु तिष्ठेत्। रात्रावासीत। तथा रौरवा-याधाजयेसनी नित्यं कर्माविरोधिकालेषु प्रयुञ्जीत पठेत्। सोमधा-

रायामित्यस्यामृचि ततृवस्त्रिनिगीयमाने रौरवाय जयेऽभिधीयते। अनुसवनमुदकोपस्पर्शनं सन्ध्या त्रये स्नानम्। त्रिषवणस्नानमित्यर्थः। हिरण्यवर्णा यष्टाभि ऋग्भिर्मार्जनमेव ॥ एतच मार्जनं स्थानान्तरमेव ॥ अथोदकतर्पणम्। उदकतर्पणमित्यनेनान्तर्जल एव तर्पणं, न स्थल इति गम्यते ॥ तत्र मन्त्राः नमो महायेत्येवमादाय कृत्तिवाससे नम इत्येतदन्ताः ॥ अत्र मन्त्रसन्दर्भस्यादावन्ते नमःशब्दश्रवणान्मन्त्रादौ मन्त्रान्ते च नमः शब्दो भवति ॥ तथाचैवं मन्त्रप्रयोगः ॥ नमो हमाय महामाय महताय धुन्वते तापसाय पुनर्वसवे नम इति ॥ एवं नमो ज्यायेत्यारभ्य सर्वविन्दाय नम इत्येको मन्त्रः ॥ एवमुत्तरत्रापि द्रष्टव्यम् ॥ एतैस्त्रयोदशमन्त्रैस्तर्पणं कुर्यात् ॥ ततश्चैतदेवादित्योपस्थानमिति तदेव मन्त्रजातमादित्योपस्थानसाधनम् ॥ कार्यकारणयोरभेदोपचारः ॥ तर्पणानन्तरमेतैरेव मन्त्रैरादित्योपस्थानं कुर्यादित्यर्थः ॥ अत एवाज्याहुतय इत्येतैरेव मन्त्रैराज्यहोमः कर्तव्य इत्यर्थः ॥ अयं होमो लौकिकाग्निं प्रतिष्ठाप्य कार्यः ॥ एवमथातः चान्द्रायणं तस्योक्तो विधिः कृच्छ्र इति साधारणधर्मानतिदिश्य चान्द्रायणे विशेषधर्मानाह ॥ तपनव्रतं चरेत् ॥ श्वोभूता पूर्णमासी तदुपवासः ॥ आप्यायस्व सन्ते पयांसि नवो नव इत्येतानि तर्पणम् ॥ आज्यहोमे हविषः पश्चानुमन्त्रमुपस्थानम् ॥ चन्द्रमासा यद्देवा देवहेडनमिति चतसृभिर्जुहुयात् ॥ देवकृतस्येति चान्ते समिद्भिः ओं भूर्भुवः स्वः तपः सत्यं यशः श्रीरूर्गिणी इोजः पुरुषो धर्म शिव (?) इत्येते ग्रासानुमन्त्रणम् ॥ प्रतिमन्त्रं नमः स्वाहेति वा वासवान् ग्रासप्रमाण मास्याधिकारेण भैक्षसक्तुकरण यावकशाक पाद्या दधिघृतमूलफलोदकानि हवींष्युत्तरत्र प्रशस्तानि पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात् ॥ अमावास्यामुपोष्यैकोपचयेन पूर्वपक्षम् ॥ विपरीतमेकेषाम् ॥ एष चान्द्रायणो मासः ॥ एतदाप्त्वा विपापो विपाप्मा सर्वमेनो हन्ति ॥ द्वितीयमाप्त्वा दशपूर्वान्दशापरानात्मानं पञ्च पंक्ति पुनाति ॥ संवत्सरे चन्द्रमसः सलोकतामाप्नोती" ति ॥ अस्यार्थः ॥ तपनं व्रतं चरेत् तापयति पापमिति तपनम् ॥ पावनं व्रतं चरेदिति पाठे व्रतं चान्द्रायणम् ॥ वपनं

वपनपूर्वं चरेत् ॥ अयमर्थः ॥ यदा प्रायश्चित्तत्वेन चान्द्रायणाचरणं तदा वपनपूर्वं चरेदिति ॥ पौर्णमास्यां ग्रासोपक्रम तिथिं श्वोभूतां निरीक्ष्य पूर्वतिथौ चतुर्दश्यामुपवसेदित्यर्थः । आप्यायस्वेत्यादिभिः नीवानवज्ञेत्यन्तै मन्त्रैस्तर्पणं चन्द्रमसः कृत्वैतैरेव त्रिभिर्मन्त्रैराज्यहोमं विधाय ततो हविरनुमन्त्र्यैतैरेव मन्त्रैः पश्चादेतैरेव मन्त्रैश्चन्द्रमस उपस्थानं कुर्यात् । ततो यद्देवा देवहेडनमिति चतसृभिर्देवकृतस्येतिचेत्यनया च समित्पालाशवृक्षभवैर्जुहुयात् । कदा । अन्ते पूर्वोपस्थानान्ते । अथ तत्तिथिसङ्ख्याकग्रासान् कृत्वा तान् ओं भूर्भुवः स्वरित्यादिमन्त्रैरभिमन्त्रयेत ओं भूर्भुवः स्वः महः जनः तपः सत्यं यशः श्रीः ऊर्ग् ह्रीः ईट् ओं जनः पुरुषः धर्मः शिव इति मन्त्रविभागः । अत्र प्रतिमन्त्रान्ते नमः स्वाहेति वा प्रयुञ्जीत । प्रणवादिस्वःपर्यन्तानामध्ययने नमः स्वाहेति योगेपि न चतुर्थी श्रवणम् ॥ महः प्रभृति चतुर्थीश्रवणं भवति ॥ महसे नमः महसे स्वाहेति ॥ एवमन्यत्रापि जनाय तपसे सत्याय यशसे श्रियै ऊर्जे ईर्ष्ये ओजसे पुरुषाय धर्माय शिवायेति ॥ ग्रासप्रमाणमास्यविकासेनास्य मुखव्यादानोत यावदन्नं मुखं प्रविशति तावदन्नं ग्रासप्रमाणं भवतीत्यर्थः ॥ चतुर्दश्यामुपोषितस्य पौर्णमास्यादितिथिषु ग्राससङ्ख्यानियममाह पौर्णमास्यां पञ्चदश ग्रासानित्यादिना पूर्वपक्षमित्यन्तेन । एतच्चपिपीलिकामध्यचान्द्रायणम् ॥ अमावास्यायामुपवासः प्रतिपदादितिथिष्वेकैषा ग्रासोपचयोऽमावास्यामुपवास इति क्रमः ॥ अत्र ग्रासग्रहणकालश्चन्द्रोदयः ॥ अभिमन्त्रणमन्त्रविकल्पादयश्चाग्रे कृच्छ्रसाधारणेतिकर्तव्यताकथनसमये निरूपयिष्यते ॥ इह याज्ञवल्क्यः—

> " तिथिवृद्ध्या चरेत्पिण्डान् शुक्ले शिख्यण्डसम्मितान्
> एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरेत् ॥
> इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः " ।

तिथिवृध्या प्रथमाद्वितीयादिचन्द्रकलाभुक्तेः प्रतिपद्द्वितीयादितिथिवृध्या । चरेद्भक्षयेत् । शुक्ले शुक्लपक्षे । शिख्यण्डसम्मितान् मयूराण्डप्रमाणान् । चान्द्रायणं ह्रासवृद्धिभ्यां चन्द्रस्यायनं चरणमिव

चरणं यस्मिन् कर्मणि तच्चान्द्रायणम् ॥ संज्ञायां दीर्घः ॥ इति पिपी-
लिकामध्ययवमध्यचान्द्रायणलक्षणम् ॥ अथ यतिचान्द्रायणादीनि ॥
याज्ञवल्क्यः

"यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ।
मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्" ॥

पिण्डानां चत्वारिंशदधिकं (शतं ? शतद्वयं) मासे वा चतुर इति ॥ अथैकस्मिन् दिवसे चतुरोऽपरस्मिन् द्वादश उतैकरात्रमुपोष्यापरस्मिन् षोडश अतस्तिथ्यपेक्षया ग्रासनियमो नास्ति ॥ उपक्रमस्तु शुक्लकृष्णप्रतिपदोरन्यत्र यस्तु नैरन्तर्येणैवंविधचान्द्रायणानुष्ठानं करोति तस्य तिथिवृध्यो ह्रासे विशे न कदाचित् ॥ द्वितीयादिष्वारम्भो भवति ॥ तत्र न दोषः ॥ चन्द्रगत्यनुसरणमन्तरेण त्रिंशद्दिनात्मकसावनमासानुष्ठेयत्वात् ॥ अतोऽत्र चान्द्रायणशब्दो गौणस्तद्धर्मप्राप्त्यर्थः ॥ कुंज्यायनामयने मासमग्निहोत्रं जुहोतीतिवत् ॥ अस्मिन् चान्द्रायणे पूर्वोपक्रान्तमेकादश्युपवासादि प्रलुप्यते ॥ नित्ये नियमेन ग्रासनियमाभावात् ॥ तत्र तु तिथिनियमेन ग्रासनियमस्तत्र पूर्वप्रक्रान्तमुपवासादिकमन्येन कारयेत् ॥ एष्वेव प्रकारेषु क्वचन मनुना विशेषसंज्ञा दर्शिता ॥

"अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते ।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरन् ॥
चतुरःप्रातरश्नीयात् पिण्डान् विप्रस्समाहितः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥
यथाकथञ्चित्पिण्डानां तिस्रोशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्येति सलोकता" मिति ॥
यमः "त्रीन् पिण्डान् समश्नीयान्नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्" ॥

इत्यृषिचान्द्रायणम् । अथ गोवधव्रतम् । याज्ञवल्क्यः

"पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ।
गोष्ठेशयो गोनुगामी गोदानेन च शुध्यति ॥

कृच्छ्रं चैवातिकृच्छ्रञ्च चरेद्वापि समाहितः ।
दद्यात्त्रिरात्रं वोपोष्य वृषभैकादशास्तु गाः ” ॥

अत्र व्रतचतुष्टयं विहितम् ॥ आहारान्तरनिरपेक्षेण पञ्चगव्यं पिबन् रात्रौ गोः शालायां शयानः प्रातस्ता एव वनं गच्छन्तीरनुगच्छन् तिष्ठन्तीरनुतिष्ठन्नन्यैरपि नियमैर्युक्तो मासमासीत ॥ ततो मासान्ते गां ब्राह्मणाय दत्वा शुध्यतीत्येकं व्रतम् ॥ पञ्च हार व्यतिरेकेण पूर्वोक्तधर्मयुतो मासं प्राजापत्यकृच्छ्रं चरेदिति द्वितीयम् ॥ तथैव प्राजापत्यस्थानेऽतिकृच्छ्रं मासं चरेदिति तृतीयम् ॥ त्रिरात्रोपवासं कृत्वैकं वृषभं दश गाश्च दद्यादिति चतुर्थम् ॥ अत्रेयं व्यवस्था ॥ अज्ञानतो जातिमात्रब्राह्मणसम्बन्धिगोमात्रवधे दद्यात्त्रिरात्रं चोपोष्य वृषभैकादशास्तु गा इत्येतत्तु । अज्ञानतः क्षत्रियसम्बन्धि गोमात्रव्यापादनेन पञ्चगव्यं पिबन् गोघ्नो मासमासीतसंयत गोष्ठेशयो गोनुगामी गोप्रदानेन शुध्यतीत्येतत् । अमात्यवैश्यसम्बन्धि गोमात्रव्यापादने कृच्छ्रं कुर्यादज्ञानतः । मासमतिकृच्छ्रं कुर्यात् । अज्ञानतः शूद्रस्वामिकगोमात्रव्यापादने मासं प्राजापत्यव्रतं चरेत् । कामतस्तु तद्द्विगुणं कल्प्यम् । अथवा मन्वाद्युक्तानि व्रतानि पूर्वोक्तेषु विषयेषु । विषयान्तरे देशकालशक्त्याद्यपेक्षया योज्यानि ॥ तानि च व्रतानि मदनपारिजातेऽस्माभिः सम्यक् प्रदर्शितानि । इति गोवधव्रतम् । अथमासोपवासव्रतम् ॥ चिन्तामणौः–“नारद उवाच,

भगवन् श्रोतुमिच्छामि व्रतानामुत्तमस्य च ।
विधिं मासोपवासस्य फलं चास्य यथोदितम् ॥
यथाविधा नरैः कार्या व्रतचर्या यथा भवेत् ।
आरभ्यते यथा पूर्वं समाप्यं हि यथाविधि ॥
यावत्सङ्ख्यं कर्तव्यं ताव दूब्रूहि पितामह ।
व्रतमेतत्सुरश्रेष्ठ विस्तरेण ममान ( य ? घ ) ॥

ब्रह्मोवाच,

साधु नारद यत्त्वेतत्पृष्टं चिरतपोधन ।
यादृक् मतिमतां श्रेष्ठ तच्छृणुष्व ब्रवीमिते ॥
सुराणां च यथा विष्णु स्तप(सां ? तां) च यथा रविः ।
मेरुः शिखरिणां तद्वद्वैनतेयश्च पाक्षिणाम् ॥

तीर्थानां च यथा गङ्गा प्रजानां च यथा वणिक् ।
श्रेष्ठं सर्वव्रतानान्तु तद्वन्मासोपवासनम् ॥
सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु तेन तु ।
सर्वदानोद्भवश्चापि लभेन्मासोपवासकृत् ॥
अग्निष्टोमादिभिर्यज्ञैर्विविधैर्भूरिदक्षिणैः ।
तत्फलं समवाप्नोति यन्मासपरिलङ्घनात् ॥
तेन तप्तं हुतं दत्तं तपस्तप्तं कृतं स्वधा ।
यः करोति विधानेन यो मासस्य उपोषणम् ॥
प्रविश्य वैष्णवं यज्ञं तेनाभ्यर्च्य जनार्दनम् ।
गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासनम् ॥
वैष्णवानि यथोक्तानि कृत्वा सर्वव्रतानि तु ।
द्वादश्यादीनि पुण्यानि ततो मासमुपाचरेत् ॥
अतिकृच्छ्रं पराकञ्च कृत्वा चान्द्रायणं ततः ।
मासोपवासं कुर्वीत ज्ञात्वा देहबलाबलम् ॥
वानप्रस्थो यतिर्वापि नारी वा विधवा सुतः ।
मासोपवासं कुर्वीत गुरुविप्राज्ञया ततः ॥
आश्विनस्यामले पक्ष एकादश्यामुपोषितः ।
व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ॥
वासुदेवं समभ्यर्च्य कार्तिके सकलेश्वरम् ।
मासश्चोपवसेद्यस्तु स मुक्तिफलभाग्भवेत् ॥
अच्युतस्यालये भक्त्या त्रिकालं कुसुमैः शुभैः ।
मालतीन्दीवरैः पद्मैः कमलैस्तु सुगन्धिभिः ॥
कुङ्कुमोशीरकर्पूरैर्विलिप्य वरचन्दनैः ।
नैवेद्यैर्धूपदीपाद्यै रर्चयेत जनार्दनम् ॥
मनसा कर्मणा वाचा पूजयेद्गरुडध्वजम् ।
कुर्यान्नरः त्रिषवणं बृहद्भक्तियतेन्द्रियः ॥
नाम्नामेव तथाऽऽलापं विष्णोःकुर्यादहर्निशम् ।
भक्त्या विष्णोः स्तुतिं वापि मृषावादं विवर्जयेत् ॥
सर्वसत्वदयायुक्तः शान्तिवृत्तिरहिंसकः ।
सुप्तश्चासनसंस्थो वा वासुदेवं प्रकीर्तयेत् ॥

स्मृत्यालोकनगन्धादिस्वादनं परिकीर्तनम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानाञ्चाभिलाषणम् ॥
गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं सविलेपनम् ।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यत्र निराकृतम् ॥
न व्रतस्थः स्पृहेत्किञ्चित् विकर्मस्थो न चालयेत् ।
देवतायतने तिष्ठेन्न गृहस्थश्चरेद्व्रतम् ॥
कृत्वामासोपवासन्तु यथोक्तविधिना नरः ।
नारी वा विधवा साध्वी वासुदेवं समर्चयेत् ॥
अन्यूनाधिकमेवन्तु व्रतं त्रिंशद्दिनैरिदम् ।
कृत्वा मासोपवासन्तु संयतात्मा यतेन्द्रियः ।
ततोर्चयेद्वै पुण्यं द्वादश्यां गरुडध्वजम् ।
पूजयेत्पुष्पमालाभि र्गन्धधूपविलेपनैः ॥
वस्त्रालङ्कारवाक्यैश्च तोषयेदच्युतं नरः ।
स्नापयेच्च हरिं भक्त्या तीर्थचन्दनवारिणा ॥
चन्दनेनानुलिप्ताङ्गं गन्धपुष्पैः सुगन्धिभिः ।
वस्त्रदानादिभिश्चैव भोजयेत द्विजोत्तमान् ॥
दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् ।
विप्रान् क्षमापयित्वा तु विसृज्याभ्यर्च्य पूज्य च ॥
एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः ।
एवं मासोपवासन्तु कृत्वाभ्यर्च्य जनार्दनम् ॥
भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते ।
एवं मासोपवासान् हि सम्यक् कृत्वा त्रयोदश ॥
निर्वापयेत् कृतांस्तान्वै विधिना येन तच्छृणु ।
कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः ॥
पूजयित्वा तु देवेशमाचार्यानुज्ञया हरिम् ।
अर्चयित्वा हरिं भक्त्या अभिवाद्य गुरूंस्तथा ॥
ततोनु भोजयेद्विप्रान् भोजयीत यथाविधि ।
विशुद्धकुलचारित्रान् विष्णुपूजनतत्परान् ॥
पूजयित्वा द्विजान् सम्यक् भोजयित्वा त्रयोदश ।
तावन्ति वस्त्रयुग्मानि भाजनाच्छादनानि च ॥

योगपट्टानि शुभ्राणि ब्रह्मसूत्राणि चैव हि ।
दद्याच्चैव द्विजाग्र्येभ्यः ( पूजयित्वा प्रणम्य च ॥
ततोऽनुकल्पयेच्छय्यां शस्तास्तरणसंस्कृताम् ।
साच्छादनां शुभां श्रेष्ठां सोपधानामलंकृताम् ) ॥
कारयित्वाऽऽत्मनो मूर्तिं काञ्चनीं तु स्वशक्तितः ।
न्यसेत्तस्यान्तु शय्यायामर्चयित्वा स्रगादिभिः ॥
आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ ।
पवित्राणि च पुण्यानि शय्यायामुपकल्पयेत् ॥
एवं शय्यां तु सङ्कल्प्य प्रणिपत्य च तान्द्विजान् ।
प्रार्थयेच्चानुमोदार्थं विष्णुलोकं व्रजाम्यहम् ॥
एवमभ्यर्चिता विप्रा वदेयुर्व्रतिनं सदा ।
व्रज व्रज द्विजश्रेष्ठ विष्णोः स्थानमनामयम् ॥
ततो विसर्जयेद्विप्रान् प्रणिपत्यानुगम्य च ।
ततस्तु पूजयेद्भक्त्या गुरुं ज्ञानप्रदायकम् ॥
तां शय्यां कल्पितां सम्यग्गुरुं ज्ञानप्रदं द्विजम् ।
प्रणम्य शिरसा शान्तो गुरवे प्रतिपादयेत् ॥
एवं सम्पूज्य तं विष्णुं विप्रान् व्रतफलप्रदान् ।
कृत्वा मासोपवासांश्च नरो विष्णुतनुं विशेत् ॥
कृत्वा मासोपवासांश्च विष्णुपूजनतत्परः ।
नयेच्छान्तमनाः कालं धर्मस्थः प्रयतेन्द्रियः ॥
कृत्वा मासोपवासांश्च निर्वाप्य विधिवन्मुने ।
कुलमाशतमुद्धृत्य विष्णुलोकं व्रजेन्नरः ॥
यस्मिन् जातो महापुण्ये कुले मासोपवासकृत् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
नरो मासोपवासानां कर्ता पुण्यवतां वरः ।
पितृमातृकुलाभ्यां च समं विष्णुपुरीं व्रजेत् ॥
नारी वा सुमहाभागा यथोक्तव्रतमास्थिता ।
कृत्वा मासोपवासञ्च व्रजेद्विष्णुं सनातनम् ॥

नारद उवाच—

सुदुष्करमिदं देव मूर्च्छाग्लानिकरं नृणाम् ।
व्रतं मासोपवासाख्यं भक्तिः कथमिहाच्युते ॥

पीडितश्च भृशं देव मुमूर्षा व्रतिनस्तथा ।
त्यागो वानुग्रहो वाथ किन्नु कार्यं पितामह ॥

ब्रह्मोवाच—

व्रतस्थं कर्शितं दृष्ट्वा मुमूर्षुं वा तपोधनम् ।
दृष्ट्वा तु ब्राह्मणस्तस्य कुर्यात्सम्यगनुग्रहम् ॥
अमृतं पाययेत्क्षीरमिच्छमानं सकृन्निशि ।
यथेह न वियुज्येत प्राणैः क्षुत्पीडितो व्रती ॥
अतिमूर्च्छान्वितं क्षीणं मुमूर्षुं क्षुत्प्रपीडितम् ।
पाययित्वाऽमृतं क्षीरं भक्षयित्वा फलानि च ॥
अहोरात्रं तु यो नित्यं व्रतस्थं परिपालयेत् ।
पयो मूलं फलं दत्वा विष्णुलोकं व्रजेत सः ॥
एवं मासोपवासस्थमारूढं प्राणसंशये ।
अव्रतघ्नगुणैर्द्रव्यैः परीसेत् ब्राह्मणाज्ञया ॥
नैतद्व्रतं विनिघ्नन्ति हविर्विप्रानुमोदितम् ।
क्षीरोपधि गुरोराज्ञामापोमूलं फलानि च ॥
एवं कृत्वाभिरक्षेत सगुडं पायसं तथा ।
पाययेद्रक्षितो यस्मात् समाप्नोति पुनर्व्रतम् ।
अथ विष्णुव्रतं कुर्वन्यथा विष्णुव्रती तथा ।
सर्वं विष्णुमयं ज्ञात्वा व्रतस्थं क्षीणमुद्धरेत् ।
यदा मुमूर्षुर्निश्चेष्टः परिम्लानोतिमूर्च्छितः ॥
तदा समुद्धरत्क्षीणमिच्छन्तं विमुखे स्थितम् ।
परिपाल्य व्रती देहं व्रतशेषं समापयेत् ॥
यथोक्ताद्विगुणं तस्य फलं विप्रमुखोदितम् ।
इन्द्रियार्थेष्वसंसक्त्या सदैव विमला मतिः ॥
परितोषयते विष्णुं नोपवासोऽजितात्मनाम् ।
किन्तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः ॥
येनेन्द्रियगणो घोरो निर्जितोऽदुष्टचेतसा ।
जितेन्द्रियः सदा शान्तः सर्वभूतहिते रतः ॥

वासुदेवपरो नित्यमक्लेशं कर्तुमर्हति ।
कृत्वा नूनं यथोक्तं तु वैष्णवं पुरुषो व्रतम् ॥
विष्णुलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ।
ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना ॥
ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ।
विभाते चार्धरात्रे च मध्याह्ने दिवसक्षये ॥
अच्युतं ये तु, कीर्तन्ति ते तरन्ति भवार्णवम् ।
आनन्दिनोप्यदुःखार्तः शुद्धः शान्तोथवा हरिम् ॥
योऽनुकीर्तयते विष्णुं स गच्छेद्वैष्णवीं पुरीम् ।
गर्भजन्मजरारोगदुःखसंसारबन्धनैः ।
निवार्यते नरो नित्यं वासुदेवमनुस्मरन् ॥
स्थावरे जङ्गमे वाथ स्थूले सूक्ष्मे शुभाशुभे ।
विष्णुं पश्यति सर्वत्र यः स विष्णुर्नसंशयः ॥
सर्वं विष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरम् ।
यस्य शान्ता मतिस्तेन पूजितो गरुडध्वजः ॥
इ(ति कल्पानुकल्पानां व्रतानामुत्तमस्य च)
तिकल्यानां व्रतानां व्रतमुत्तमम् ।
विष्णुलोकमवाप्नोति प्रसादाच्चक्रपाणिनः ॥
विधिर्मासोपवासस्य यथा ते परिकीर्तितः ।
सुतस्नेहान्मुनिश्रेष्ठ सर्वलोकहिताय च ॥
कृत्वा श्रुत्वा च ये भक्त्या नरो विष्णुपुरीं व्रजेत् ।
नाभक्ताय प्रदातव्यं न देयं दुष्टचेतसे " ॥

इति ( त्रि ? श्री ) विष्णुरहस्ये ब्रह्मणोक्तं मासोपवासव्रतम् ॥

अथ कृच्छ्रचान्द्रायणसाधारणेतिकर्तव्यता ॥ याज्ञवल्क्यः ॥

" कुर्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा ।
पवित्राणि जपेत्पिण्डान् गायत्र्या चाभिमन्त्रयेत् ॥

त्रिषवणस्नानं तप्तकृच्छ्रव्यतिरेकेण ॥ तप्तकृच्छ्रे तु न ॥ सकृत्स्नायी समाहित इति विशेषाभिधानात् ॥ पवित्राणि च सूक्तानि चाघमर्षणं देवकृतः 'शुद्धवत्यतरत्समन्दीत्यादि वासिष्ठादिप्रदर्शितानि ॥

ऋग्यजुःसामसु व्यवस्थायथाशाखं जपेदनिषिद्धेषु कालेषु॥ पिण्डान् ग्रासान् प्रत्येकं गायत्र्या चाभिमन्त्रयेत्॥ ग्रासानुमन्त्रणे गौतमोक्तैः 'शं भू' रित्यादिमन्त्रैः सह गायत्र्या विकल्पः॥ एवं जपादिष्वप्येककार्याणां मन्त्राणां विकल्पः, भिन्नकार्याणां समुच्चय इति विवेकः॥ मनुः॥

" महाव्याहृतिभिर्होमः कर्तव्यः स्वयमन्वहम्।
अहिंसा सत्यमक्रोधमार्जवं च समाचरेत्॥
त्रिरह्नि त्रिर्निशायान्तु सवात्स्वा जलमाविशेत्।
स्त्रीशूद्रपतितांश्चैव नाभि( भावेन ? भाषेत )कर्हिचित्॥
स्थानासनाभ्यां विहरन्नक्रोधः ( न्नश (ग्यत्) क्रोधः
शयीत यः ) संशर्ध्येत वा (?)।
ब्रह्मचारी व्रती च स्यात् गुरुदेवद्विजार्चकः॥
सावित्रीं च जपेन्नित्यं पवित्राणि च शक्तितः।
सर्वेष्वेव व्रतेष्वेव प्रायश्चित्तार्थमादृत" इति॥

त्रिरह्न इत्यादि॥ दिवा त्रिः रात्रौ त्रिरिति यदत्र षट्सु सवनेषु सवनं स्नानं तच्छक्तिविषयम्॥ एवं न्यूनाधिकस्नान्यनान्यपि शक्त्यशक्त्यपेक्षया योज्यानि॥ जाबालः॥

" आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः।
आज्येनैव तु शालाग्नौ जुहुयाद्व्याहृतीः पृथक्॥
श्राद्धं कुर्याद्व्रतान्ते च गोहिरण्यादि दक्षिणा।
स्त्रीणां होमो न दातव्यः पञ्चगव्यं तथैव च"॥

पराशरः "स्त्रीशूद्रस्य च शुध्यर्थं प्राजापत्यं समाचरेत्।
पञ्चगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत्॥

स्त्रीशूद्रयोः पञ्चगव्यस्य विहितप्रतिषिद्धत्वाद्विकल्पः॥ जाबालेन शालाग्नौ होमं विधाय स्त्रीणां होमो न दातव्य इति प्रतिषेधात् गृह्याग्नावेव होमनिषेधः॥ अत एव स्त्रीशूद्रयोरपि ब्राह्मणद्वारा लौकिकाग्नौ भवत्येव (?)॥ अयं च कर्माङ्गहोमः॥ 'आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः, आज्येनैव तु शालाग्नौ जुहुयाद्व्याहृतीः पृथ'गिति जाबालेन विशेषाभिधानात्। कृच्छ्रप्रत्याम्नायभूतयोस्तु-प्रधानयोर्जपहोमयोः स्त्रीशूद्रयोर्नाधिकारः॥ तथा चाङ्गिराः॥

"तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम्।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम्"॥

अत्र शूद्रशब्दस्तूपलक्षणार्थः॥ तयोः समानधर्मत्वात्॥
वैशम्पायनः॥

"स्नानं द्विकालमेव स्यात्त्रिकालं वा द्विजन्मनः"।

शङ्खः॥ एकवासा आर्द्रवासा लघ्वाशी स्थण्डिलेशयः' इति॥

हारीतः "अवरैःशुद्धवतीभिः (?) स्नात्वाऽघमर्षणमन्तर्जले जप्त्वा धौतमहतं वासः परिधाय साम्ना (सौम्यना? सौर्येणा) दित्यमुपतिष्ठती"ति॥

षड्विंशन्मते

"जपहोमादि यत्किञ्चित्कृच्छ्रोक्तं संभवेन्न चेत्।
सर्वं व्याहृतिभिः कुर्याद्गायत्र्या प्रणवेन चे"दिति॥

शंखः "एकवासाश्चरेद्भिक्षां स्नात्वा वासो न पीडयेत्।
गायत्र्या दशसाहस्रमाह्निको जप उच्यते"॥

बौधायनः "अहतं वासो वासीत॥ सावित्रीं व्याहृतिभिश्चैव
जपेदष्टसहस्रकृत्वः॥
ओंकारमादितःकृत्वा रूपे रूपे तथान्ततः।
भूमौ वीरासने युक्तः कुर्याज्जप्यं तु संयतः॥
आसीनः शल्यविद्धो वा पिबेद्गव्यं पयः सकृत्।
गव्यस्य पयसोऽलाभे गव्यमेव भवेद्दधि॥
दध्नोऽभावे भवेत्तक्रं तक्रालाभे तु यावकम्।
एवमन्यतमं यत्तु उत्पाद्येव च तत्पिबेत्"॥

शल्यविद्धो वेति वा शब्दः उपमार्थे॥ शल्यविद्ध इव निश्चलः सन् आसीनः पयः पिबेदित्यर्थः॥

यमः "अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रितम्।
प्राश्याचम्य पुनः कुर्यादन्यस्याप्यभिमन्त्रणम्"॥

ये तु प्राणाग्निहोत्रेऽधिकारिणस्तेषामपोशनकर्मानन्तरं प्राणाहुतयोऽपि पञ्चभिर्ग्रासैर्भवन्ति॥ तत्र च पूर्वोक्तप्रणवगायत्र्याद्यन्यतममन्त्रैर्ग्रासानभिमन्त्र्य 'प्राणाय स्वाहे' त्यादिभिर्मन्त्रैः प्राणाग्नौ होमः

कार्यः ॥ यदा त्वेको वा द्वित्रिचतुरो वा ग्रासास्तत्र बौधायनोक्त-विशेषो ग्राह्यः॥ तद्यथा॥ "अश्नीयात् प्राणायेति प्रथममपाना-येति द्वितीयं, व्यानायेति तृतीयं, उतीयं (?) उदानायेति चतुर्थं, समानायेति पञ्चमम्॥ यदा चत्वारस्तदा द्वाभ्यां प्रथमः; यदा त्रय स्तदा द्वाभ्यां द्वाभ्यां पूर्वौ, यदा द्वौ तदा त्रिभिः प्रथमं द्वाभ्यामेवो-त्तरमेकं सर्वै"रिति॥ अस्यार्थः॥ यदा चत्वारो ग्रासा भक्ष्यन्ते तदाऽऽद्यद्वितीयाभ्यां प्रथमं तृतीयादिभि स्त्रिभिः क्रमेण शेषांस्त्रीन्॥ यदा त्रयस्तदाऽऽद्यद्वितीयाभ्यां प्रथमं तृतीयचतुर्थाभ्यां द्वितीयं पञ्चमेन तृतीयम्॥ यदा द्वौ तदा प्रथमत आरभ्य त्रिभिः प्रथमम-न्तिमाभ्यां द्वाभ्यां द्वितीयम्॥ यदा चैकस्तदा सर्वैरेव ग्रासोक्तम्(?) इति॥ हारीतः "चान्द्रमसं चरुं श्रपयित्वा नवो न बहुत्वात् ज्योत्स्नायां शेषान् पिण्डान्सावित्र्याभिमन्त्रितान् प्राश्नीया"दिति॥ ज्योत्स्नाशब्देन चन्द्रोदयो लक्ष्यते॥ तेनैवार्द्धरात्रावपि भोजने दोषो नास्ति॥ शंखः॥

"आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्मृताः।
यथैवाहुतयस्तत्र शौर्थ (?) स्तत्रमृत्तिका"॥

इति कृच्छ्रचान्द्रायणकर्तृसाधारणकर्तव्यता॥ अथ प्राजापत्यादि प्रत्याम्नायः॥ तत्र पूर्वोक्तरीत्या द्वादश दिनानि प्राजापत्यं कृच्छ्रं चरेत्॥ तदशक्तौ धेनुमेकां दद्यात्॥ निष्कलक्षणं परिमाणप्रकरणेऽ-भ्यधायि॥ अथवा गोरभावे देशकालोचित (?) गोमूल्यं देयम्॥ तत्राप्यशक्तौ तदर्द्धं पादं वा दद्यात्॥ तथा च मिताक्षरायाम्॥

"गवामभावे निष्कं स्यात्तदर्द्धं पादमेव च।
तथा प्राजापत्यक्रियाशक्तौ धेनुं दद्याद्द्विजोत्तमे
धेनोरभावे दातव्यं मूल्यं तुल्यं न संशय"इति॥

पराशरः "कृच्छ्रोऽयुतं तु गायत्र्या उदवासस्तथैव च।
धेनुप्रदानं विप्राय सममेव चतुष्टयम्"॥

कृच्छ्रः प्राजापत्यः॥ अयुतं गायत्र्याः॥ उदवासः उदकवासः॥ स चाहोरात्रम्॥ मिताक्षरायाम्॥

"कृच्छ्रो द्रव्ययुतं चैव प्राणायामशतद्वयम्।
तिलहोमसहस्रं तु वेदपारायणं तथा" ॥

समृद्धधान्यैस्तु प्राजापत्यकृच्छ्रप्रत्याम्नायत्वेन द्वादशसु दिनेषु प्रतिदिनं पञ्च पञ्च विप्रा भोजनीयाः। ते च मिलित्वा षष्ठि ब्राह्मण भोजनानि भवन्ति। तथा च मिताक्षरायाम्

"कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये
चत्वारिंशच्च तप्ते त्रिगुणनगुणिता विंशतिः स्यात् पराके।
कृच्छ्रे सान्तपनाख्ये भवति षडधिका विंशतिः सैव हीना
द्वाभ्यां चान्द्रायणे स्यात्तपसि कृशबलो भोजयेद्विप्रमुख्यान्"॥

अत्र कृच्छ्रेऽहरहः पञ्चेत्यन्वयः। अहरहरिति प्रत्येकं संबध्यते। स्वल्पधान्यस्तु द्वादश ब्राह्मणान् भोजयेत्। तथा चतुर्विंशतिमते।

"विप्राः द्वादश वा भोज्याः पावकेष्टिस्तथैव च।
अन्या वा पावनी काचित्समान्याहुर्मनीषिणः" ॥

अत्र न प्रतिदिनं द्वादश द्वादश किन्तु द्वादशैव। पुण्यतीर्थे विध्युक्तप्रकारेण स्नात्वा तदङ्गानुष्ठानं विधाय केशान् शोषयित्वा पुनर्विधिवत् स्नात्वा पूर्ववत्केशान् संशोषयेत्। एवं द्वादश स्नानानि प्राजापत्यप्रत्याम्नायः। तथा च पराशरः

"कृच्छ्रो देवयुतश्चैव प्राणायामशतद्वयम्।
पुण्यतीर्थेनार्द्रशिरःस्नानं द्वादशसङ्ख्यया" ॥

अनार्द्रं शिरो यस्यासावनार्द्रशिराः अनार्द्रशिरसः स्नानम्। इति प्राजापत्यकृच्छ्रप्रत्याम्नायः।

अथातिकृच्छ्रप्रत्याम्नायः। तत्रातिकृच्छ्रकरणाशक्तौ याज्ञवल्क्योक्तपाणिपूरान्नभोजनयुक्तानि कृच्छ्रप्रत्याम्नायत्वेन धेनुद्वयं दद्यात्। तथा च षड्विंशन्मते "प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयंस्मृत" मिति। 'एकैकं ग्रासमश्नीया'दिति मनूक्तातिकृच्छ्रकरणाशक्तौ धेनुत्रयं देयम्। अत एव चतुर्विंशतिमते "पराकतप्तातिकृच्छ्रे

तिस्रः तिस्रस्तु गास्तथे"ति। गवामभावे तावन्तो निष्कास्तवन्ति गोमूल्यानि च देयानि। निष्काभावे तदर्द्धं पादं वा। अथवा यावन्त्यो धेनवस्तावन्ति गायत्रीजपानामयुतानि तावन्त उदवासाः पूर्वोक्तरीत्या कार्याः। उत तावन्ति प्राणायामशतद्वयानि। तावन्ति वा तिलहोमसहस्राणि । अपि वा यावन्ति वेद-पारायणानि भवन्ति । अथवा यावन्त्यो धेनवस्तावन्तोऽन्नकृच्छा भवन्ति। अतोऽल्पधनेन धेनुसङ्ख्यायाः द्वादश द्वादश विप्राग्र्या भोजनीयाः। प्रचुरधनेन द्वादशसु दिनेषु प्रतिदिनं पञ्च पञ्च विप्रा भोजनीयाः। प्रतिदिनं द्वादशसु दिनेष्वित्यर्थः। अत्र च मिलित्वाऽ-शीत्युत्तरं शतं ब्राह्मणान् भोजयन्ति । अथवा यावन्त्यो धेनवस्त-त्सङ्ख्यया स्नानानां द्वादश द्वादश कर्तव्याः प्रत्याम्नायाः । अत्र च स्नानप्रकारः । प्राजापत्यकृच्छ्रप्रत्याम्नायप्रकरणे दर्शितः । इत्यतिकृच्छ्र प्रत्याम्नायाः।अथ कृच्छ्रप्रत्याम्नायाः। तत्र प्राजापत्यप्रस्थापने कृच्छ्रा-तिकृच्छ्रस्य विहितत्वात् कृच्छातिकृच्छ्रकरणशक्तौ तिस्रो धेनवो दातव्याः। तदभावे निष्कत्रयं सार्द्धो निष्को वा पादोननिष्को वा देयः। अथवा गायत्र्या अयुतत्रयम्, दिनत्रयमुदवासो वा, त्रीणि प्राणायामशतद्वयानि वा, तिलहोमसहस्राणि वा, त्रीणि वेदपाराय-णानि वा कर्तव्यानि । अथवा समृद्धधान्येनाहरहस्त्रिंशत्सङ्ख्याका ब्राह्मणा भोजनीयाः। तथा च चतुर्विंशतिमते 'कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेव तृतीय' इति । तृतीये कृच्छ्रातिकृच्छ्रेऽहरह-स्त्रिंशद्ब्राह्मणा भोजनीया इत्यर्थः। एतच्च त्रिंशद्ब्राह्मणभोजनं द्वादशसु दिनेषु प्रतिदिनं कर्तव्यम्। मिलित्वा षष्ट्युत्तरं शतं ब्राह्मणा भवन्ति। समृद्धधान्यश्चेत्तदा तेन त्रिगुणिता द्वादश ब्राह्मणा भोजनीयाः। ते च मिलित्वा षट्त्रिंशत्। स्नानप्रत्याम्ना-यस्तु प्राजापत्यप्रत्याम्नायप्रकरणोक्तरीत्या यावन्त्यो गावस्तावत्स-ङ्ख्यया ज्ञेयः। इति कृच्छ्रातिकृच्छ्रप्रत्याम्नायः। अथ तप्तकृच्छ्रप्रत्या-म्नायः। तत्र द्वादशाहःसाध्ये तप्तकृच्छ्रप्रत्याम्नायत्वेन तिस्रो गावो देयाः। 'पराककृच्छ्रे तिस्रस्तिस्रस्तु गा'इति चतुर्विंशतिमतेऽभिधानात्। चतुरहः साध्ये तप्तकृच्छ्रे त्वेका धेनुः। त्र्यहःसाध्ये तु निष्कार्द्धं तु देयम्। गवामभावे निष्कं वेत्यादिका, अन्ये प्रत्याम्नायाः कृच्छ्राति-

कृच्छ्रप्रकरणोक्तरीत्या विज्ञेयाः। समृद्धधान्यस्य त्वेतत्कृच्छ्र अयं विशेषः। द्वादशसु दिनेषु प्रतिदिनं चत्वारिंशच्चत्वारिंशद्‌ब्राह्मणा भोजनीया इति। तथा चतुरहः साध्ये च त्र्यहः साध्ये च तप्तकृच्छ्रे प्रतिदिनं चत्वारिंशच्चेति। तथा चतुर्विंशतिमते ' कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये चत्वारिंशच्च तप्त ' इति। तप्ते तप्त-कृच्छ्रेऽहरहश्चत्वारिंशदित्यन्वयः। इति तप्तकृच्छ्रप्रत्याम्नायः। अथ सान्तपनयतिसान्तपनप्रत्याम्नायः। तत्र सप्ताहसाध्यस्य सान्तपनस्य करणाशक्तौ प्राजापत्याम्नायस्थाने विहितत्वादेका धेनुर्निष्कार्द्धं च देयम्। तथा च षड्‌विंशन्मते—

"पराकतप्तातिकृच्छ्रस्थाने कृच्छ्रत्रयं चरेत्।
सान्तपनसाध्येर्द्धमशक्तौ व्रतमाचरे" दिति॥

दिवसद्वयसाध्ये सान्तपने निष्कार्द्धं देयम्। दिनत्रयसाध्ये यति-सान्तपनाख्ये तु धेनुमेकां दद्यात्। अनयैव रीत्या गायत्रीरूप-प्रत्याम्नायेष्वपि परिमाणं कल्प्यम्। यत्रैका धेनुर्निष्कार्द्धं च देयं भवति तत्र गायत्र्या अयुतजपं धेनुस्थाने। अर्द्धनिष्कस्थाने तु पञ्च सहस्राणीत्यनया रीत्या। प्रत्याम्नायभेदास्तु प्राजापत्यप्रत्याम्नाय-प्रकरणे द्रष्टव्याः। इति सान्तपनयतिसान्तपनप्रत्याम्नायः। अथ महासान्तपनप्रत्याम्नायः। तत्रैकविंशतिदिनसाध्ये महासान्तपने प्रत्याम्नायत्वेन तिस्रो धेनवोऽर्द्धनिष्कं च देयम्। पञ्चदिनसाध्ये तु धेनुद्वयं निष्कार्द्धं च देयम्। सप्ताहसाध्ये त्वेका धेनुर्निष्कार्द्धं चेति दद्यात्। एतत्कल्पनायां मूलं षडुपवास स्तुल्यप्रजापत्यप्रत्याम्ना-यत्वेन धेनुविधानम्। सप्ताहसाध्ये तु सान्तपने, निष्कार्द्धसहित धेनुदानमूलं सान्तपनप्रकरणे दर्शितं ' सान्तपनस्य साध्यर्द्ध ' मिति। अनया दिशा गायत्रीजपादिरूपप्रत्याम्नायेष्वप्यूह्यम्। ते च प्रत्या-म्नायभेदाः प्राजापत्यप्रत्याम्नायप्रकरणे द्रष्टव्याः। इति महासान्त-पनप्रत्याम्नायः। अथ पराकप्रत्याम्नायः। चतुर्विंशतिमते

" पराकतप्तकृच्छ्राणां स्थाने कृच्छ्रत्रयं चरेत्।
जपहोमादिकं वापि कल्पयेत्पूर्वकल्पव" दिति॥

कृच्छ्रत्रयस्थानीयत्वात्पराकस्य पराककरणाशक्तौ तिस्रो धेनू र्दद्यात् । तथा गायत्रीजपादिप्रत्याम्नायः । अपि तु त्रिगुणाः कर्तव्याः । ते च प्राजापत्यप्रकरणे दर्शिताः । इति पराकप्रत्याम्नायः । अथ याचकव्रतगोमूत्रयावकव्रतपयोव्रतानां प्रत्याम्नायः । तत्र याचकव्रते पयोव्रते च प्रत्याम्नायत्वेन पञ्च धेनवो देयाः । षडुपवासाः एकप्राजापत्यस्थानमिति मासे पञ्च षड्वा भवन्तीतिकृत्वा । यद्यपि याचकव्रते च प्रतिदिनं याचकं भुज्यते तथापि पूर्वोक्तयाचकभोजनस्यात्यन्तक्लेशसाधनत्वादुपवासतुल्यत्वं भवत्येव । पयोव्रते तु पयःपाने क्लेशाभावेप्येकग्रासपर्याप्तस्यैव पयसः पानादुपवासकल्पत्वम् । गोमूत्रयावकव्रते तु क्लेशाधिक्यात् प्रत्याम्नायत्वे षट् धेनवो दातव्याः । एवं गायत्रीजपादिप्रत्याम्नाया अपि कल्पनीयाः । ते च प्राक् प्राजापत्यप्रत्याम्नायप्रकरणे प्रपञ्चिताः । इति यावकव्रतगोमूत्रयावकव्रतपयोव्रतानां प्रत्याम्नायः ॥ अथ चान्द्रायणप्रत्याम्नायाः । तत्र समृद्धधनेन चान्द्रायणप्रत्याम्नायत्वेनाष्टौ गावो देयाः । तथा चतुर्विंशतिमते

"अष्टौ चान्द्रायणे देयाः प्रत्याम्नायविधौ सदे"ति ।

तथा पिपीलिकामध्ययवमध्यचान्द्रायणयोर्गौतमाद्युक्ताधिकेतिकर्तव्यतासहितयोरप्यष्टौ चान्द्रायणे देया इत्येतद्योज्यम् । अल्पधनेन तु तिस्रो गावो देयाः । तथा च पराशरनिबन्धे

" प्राजापत्ये तु गामेकामतिकृच्छ्रे द्वयं स्मृतम् ।
चान्द्रायणपराके च तिस्रस्ता दक्षिणास्तथे"ति ॥

एतच्च धेनुत्रयदानं स्वल्पेतिकर्तव्यतासहितयोर्यवमध्यपिपीलिकामध्यचान्द्रायणयोस्तथा यतिचान्द्रायणादिष्वपि योज्यम् । एवं शक्त्यपेक्षाया यावत्यो धेनवो दीयन्ते । तत्र तदभावे 'गवामभावेनिष्कं स्यात्तदर्द्धं पादमेव चे' त्युक्तरीत्या दातव्यम् । अथवा प्रतिधेनु वायुतं गायत्रीजपो वा, तथा धेनुसङ्ख्याका उदवासा वा, धेनुसंख्याका प्राणायामशतद्वयानि वा, प्राजापत्यधेनुसंख्याकानि वेदपारायणानि वा, धेनुसङ्ख्याकानि तिलहोमसहस्राणि वा, प्रतिधेनु द्वादश

द्वादश ब्राह्मणभोजनानि वा, प्राजापत्यप्रत्याम्नायप्रकरणोक्तरीत्या प्रतिधेनु द्वादश द्वादश स्नानानि वा कार्याणि। एते च विकल्पा व्रीहि-यववन्नैच्छिकाः अपि तु उदितानुदितहोमवद्व्यवस्थिताः। व्यवस्था च देशकालाद्यपेक्षया। तथा च बौधायनः

> " देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
> उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरे " दिति॥

शौचशब्देन शुद्धिकारणं सर्वमभिधीयते। एवमन्यत्रापि न्यूना-धिककल्पेषु शक्त्याद्यपेक्षो विकल्पो बोद्धव्यः। अनेनैवाभिप्रायेण मिताक्षरादिप्रबन्धेषु न्यूनाधिकपक्षा दर्शिताः। तद्यथा

> "चान्द्रायणं मृगारेष्टिः पवित्रेष्टिस्तथैव च।
> मित्रविन्दा पशुश्चैव कृच्छ्रमसत्रयं तथा॥
> तिलहोमायुतं चैव पराकद्वयमेव च।
> गायत्र्या लक्षजाप्यं च समान्याहुर्बृहस्पति"रिति॥

तपस्यसमर्थेन समृद्धधान्येन मासावधिकाले प्रतिदिनं चतुर्विं-शतिर्ब्राह्मणा भोजनीयाः। तथा च चतुर्विंशतिमते 'कृच्छ्रे पञ्चातिकृच्छ्रे त्रिगुणमहरहस्त्रिंशदेवं तृतीये चत्वारिंशच्च तप्ते त्रिगुणनगुणिता विंशतिः स्यात् पराके। तप्ते कृच्छ्रे सान्तनाख्ये भवति षडधिका विंशतिः सैव हीना द्वाभ्यां चान्द्रायणे स्यात् तपसि कृशबलो भोजयेद्विप्रमुख्या"निति। अस्यार्थः। अहरहः सर्वत्रान्वेति। कृच्छ्रे प्राजापत्ये द्वादशसु दिनेष्वहरहः पञ्च विप्रमुख्यान् भोजयेत्। अतिकृच्छ्रे पूर्वोक्तलक्षणे प्रोक्तसङ्ख्याकेषु दिनेषु प्रतिदिनं त्रिगुणम्। त्रैगुण्यं पञ्चापेक्षयैव। पञ्चदशेत्यर्थः। तृतीये कृच्छ्रातिकृच्छ्रे पूर्वोक्त-कृच्छ्रातिकृच्छ्रदिनेष्वहरहस्त्रिंशत्। तप्ते कृच्छ्रे पूर्वाभिहिततप्तकृच्छ्रदिनेषु प्रतिदिवसं चत्वारिंशत्॥ पराके ब्राह्मणसङ्ख्या दिनेषु पराके व्रतसङ्ख्या दिनेषु प्रत्यहं त्रिगुणगुणिता विंशतिः। षष्टिरित्यर्थः। सान्तपने कृच्छ्रे पूर्ववदेवाहरहः षड्विंशतिः। चान्द्रायणे चान्द्रायणा-चरणसङ्ख्याकदिने प्रतिवासरं द्वाभ्यां हीना षडधिका विंशतिः। चतुर्विंशतिरित्यर्थः। एते च पक्षाः पूर्ववदेव शक्त्याद्यपेक्षया योज्याः। इति चान्द्रायणप्रत्याम्नायः। अथ गोवधप्रत्याम्नायः। याज्ञवल्क्योक्त-

व्रतचतुष्टयं प्राक् प्रदर्शितं तल्लक्षणप्रकरणे ॥ तत्राज्ञानतो जातिमात्र ब्राह्मणसंबन्धिगोमात्रवधे त्रिरात्रमुपोष्य दश गा एको वृषभश्च देयाः। त्रिरात्रोपवासाशक्तो पूर्वोक्ता गावो वृषभश्च निष्काऽर्धं च देयम्। कामतश्चेत् द्विगुणम्। अज्ञानतः क्षत्रिय सम्बन्धिगोमात्रव्यापादने 'पञ्चगव्यं पिबेत् गोघ्नो मासमासीत संयतः गोष्ठेशयो गोनुगामी गोप्रदानेन शुध्यती' त्यनेन प्रकारेण मासं पञ्चगव्यं चरित्वाऽन्ते गां दद्यात्। एतत्करणाशक्तौ व्रतस्यात्यन्तक्लेशयुक्तत्वेन व्रतप्रत्याम्नायत्वेन युक्तमष्टधेनुपरिकल्पनम्। कामतश्चेत् षोडश धेनवः। एका दक्षिणात्वेनेति सप्तदश गावः। अज्ञानतो वैश्यसंबन्धिगोमात्रव्यापादने मासमतिकृच्छ्रं कुर्यात्। एतदाचरणाशक्तौ द्वादशदिनसाध्यपाणिपूरान्नभोजनयुक्तानि कृच्छ्रप्रत्याम्नायत्वेन गोद्वयदानस्यातिकृच्छ्रं कुर्यात् प्रत्याम्नायप्रकरणे दर्शितत्वादत्र मासातिकृच्छ्रे पञ्चगावो भवन्ति। मनूक्तग्रासमात्रभोजनयुक्तस्य द्वादशदिनसाध्यस्यातिकृच्छ्रकरणाशक्तौ तिस्रो गावो विहिता इति। ग्राससाध्यकृच्छ्रे सप्त गावो निष्कार्धं च देयम्। उभयत्र कामतो द्वैगुण्येन क्रमेण दश पञ्चदश भवन्ति। गवामभावे गोसङ्ख्ययाऽतिकृच्छ्रप्रत्याम्नायप्रकरणोक्ताः प्रत्याम्नायाः शक्त्यपेक्षया कर्तव्याः। अज्ञानतः शूद्रस्वामिकगोमात्र व्यापादने मासं प्राजापत्यविधानात्तदशक्तौ गोद्वयं निष्कार्धं च देयम्। कामतः पञ्च गावः। तदशक्तावितरे पूर्वोक्ताः प्रत्याम्नायाः कार्याः। इति गोवधव्रतप्रत्याम्नायः। अथ मासोपवासप्रत्याम्नायः। तत्र च षडुपवासतुल्यप्राजापत्यप्रत्याम्नायत्वेन प्राजापत्ये तु गामेकामिति विधानात् पञ्च गावो भवन्ति मासव्रते। जपनियमाद्यनेकेतिकर्तव्यतापेक्षितमासव्रते तु क्लेशाधिक्योपेतचान्द्रायणव्रत इवाष्टौ गावः कल्प्याः। इति मासोपवासप्रत्याम्नायः। अथ प्रायश्चित्तोपक्रमप्रकारः। तत्र कर्मविपाकप्रायश्चित्तानुपयुक्तमपीतरप्रायश्चित्तोपयुक्तं किञ्चिदुच्यते। तद्यथा। देवलः—

"कृच्छ्राणां दापको राजा निर्देष्टा धर्मपाठकः।
अपराधी प्रयोक्ता च रक्षिता कृच्छ्रपालकः"॥

महापापेषु कृच्छ्राणां प्रायश्चित्तानां दापको राजा भवति। ब्रह्महत्यादिप्रायश्चित्तेषु राज्ञ आज्ञां विना द्विजाद्यैः प्रायश्चित्तं नोपवर्णनीयमित्यर्थः। प्रायश्चित्तस्य निर्देष्टा धर्मपाठक उच्यते। यस्मिन्ननुवादकशब्दं लोकाः प्रयुञ्जते। अङ्गिराः

"वेदविद्याव्रतस्नातः सत्यसन्धो यतेन्द्रियः।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः" ॥

अपराधी पापयुक्तः कृच्छ्रप्रयोक्तेत्यभिधीयते। रक्षिता राजपुरुषः कृताकृतप्रत्यवेक्षणात्प्रायश्चित्तपरिपालक इतिकथ्यते। प्रकृतमनुसरामः। धर्मविवर्तौ

"क्षत्रियो ह्यथ वैश्यो वा शूद्रो वा नु कथंचन।
प्रायश्चित्तविधानं हि कुर्वन्तीति विदुर्बुधाः॥
अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।
सहस्रशतयुक्तानां पर्षत्त्वं नोपपद्यते ॥
पातकेषु शतं पर्षत्सहस्रं महदादिषु।
उपपापेषु पञ्चाशत् स्वल्पे स्वल्पा तथा भवेत्" ॥

बहुभिर्विद्वद्भिर्मिलित्वा प्रायश्चित्तं विचार्य विधेयमिति शतादिशब्दानां तात्पर्यार्थः :। अत एव याज्ञवल्क्यः

"चत्वारो वेदधर्मज्ञा पर्षत्त्रैविद्यमेव वा।
सा ब्रूते यं स धर्मः स्यादेकोवाऽध्यात्मवित्तमः" ॥

मनुः

"त्रैविद्यो हेतुकस्तर्की निरुक्तो धर्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे पर्षदेता दशावरे"ति ॥

तिस्रो विद्या ऋग्यजुःसामात्मिकाः यस्यासौ त्रैविद्यः। हेतुकोऽनुमानज्ञः। तर्कोस्यास्तीति तर्की। संशये सत्येकस्मिन् कोटौ प्रामाणिकत्वारोपे कृते बाधकादर्शनात्प्रामाण्येनात्र भवितव्यमिति यः प्रत्ययः स तर्कः। स वेदशास्त्राविरोधी कार्यः। एवं विधायाःपरिषद् उपस्थानं वक्ष्यमाणप्रकारेण कार्यम्। अत्रायं वृद्धसमाचारो व्रतग्रहणदिने। तद्यथा अभुञ्जानः सायंकाले परिषदं प्रदक्षिणीकृत्य स्वकीय मेनो विख्यापयतीति। अत्रायमाशयः। अङ्गिरसा प्राप्तपापस्य

परिषदोनुपस्थानात् पूर्वं भोजनं निषिद्धम् । अस्यायमभिप्रायः । पश्चात्तापवान् भवेदविलम्बेनैव प्रायश्चित्तं गृह्णीयादिति । अन्यथा दीर्घकालभोजनपरित्यागाद्देहधारणाभावेन प्रायश्चित्तमेव न स्यात् । तस्माद्दैववशात्प्रायश्चित्तविलम्बे मितमेध्याहारादिभिः शरीरधारणं कुर्वीत । न स्वच्छन्दचारी स्यात् । इमां आर्तमुक्तिं दृष्ट्वा व्रतग्रहणदिन एव भोजनं मन्यते । कलौ दृढतनुतापस्य असंभवात् । उपक्रमदिने शरीरशुद्धेरीप्सितत्वाच्च ।

मनुः " प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।
न संसर्गं भवेत्सद्भिः प्रायश्चित्ते कृते द्विजः " ॥

अङ्गिराः " उपस्थितस्तु न्यायेन व्रतादेशनमर्हति ।
कृते निःसंशये पापे न भुञ्जीतानुपस्थितः ॥
भुञ्जानो वर्द्धयेत्पापमसत्यं पर्षदि ब्रुवन् ।
संशये तु न भोक्तव्यं यावत्पापस्य निष्कृतिः ॥
प्रमादश्च न कर्तव्यो यथैवासंशये तथा ।
कृत्वा पापं न गूहेत गूह्मानस्य वर्द्धते ॥
बहु वा त्वल्पकं वापि कर्मविद्भ्यो निवेदयेत् ।
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ॥
मृदुरार्जवसम्पन्नः शुद्धिं याचेत मानवः ।
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ॥
क्षत्रियो वापि वैश्यो वा पर्षदं ह्युपतिष्ठति " ।

क्षत्रियाद्युपपादनं प्रदर्शनार्थम् ।

" उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं व्रजेत् ॥
गात्रैश्च भूगतैश्चैव न च किञ्चिदुदाहरेत् ।
ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम् ॥
वृद्धाः पृच्छन्ति किं कार्यमुपविश्याग्रतः स्थितम् ।
किन्ते कार्यं वदास्माभिः किं वा मृगयसे द्विज ॥
तत्त्वतो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः ।
अस्माकं चैव सर्वेषां सत्यमेव परं बलम् ॥
यदि चेद्रक्षसे सत्यं नियतं प्राप्स्यसे शुभम् ।
यथागतोस्यसत्येन न त्वं शुध्यसि कर्हिचित् ॥

एवं सर्वमनुज्ञातः सर्वं ब्रूयादशेषतः" इति ॥

न भुञ्जीतानुपस्थित इति। अनुपस्थित इति परिषदमनुपस्थितः। संशयो नाम परिषदुपस्थातुं स्वगतपापसन्देहः। कार्यस्य निष्कृतिः पापप्रायश्चित्तम्। अथवा निष्कृतिः प्रायश्चित्तनिश्चयः। संशये तु न भोक्तव्यमित्येतस्मिन् मिथ्याविषयोऽविषयप्रमादश्च न कर्तव्यः पुनः पापं न कुर्यादित्यर्थः। अथवा चिरकाले सहानुवृत्तौ हविष्य-भोजनादिना शरीररक्षणं प्रमादः स च न कर्तव्यः। यथैवासं-शये असंशये पापस्य निश्चये देशान्तरादिव्यवहितेषु विद्वत्सु परिषदुपस्थानात् प्राग्यथा हविष्यभोजनात् शरीररक्षणं क्रियते संशयस्थलेऽपीत्यर्थः। पर्षदग्रे पापप्रख्यापने च दक्षिणादानं कुर्यात्। तथाऽऽह पराशरः—

"पापं प्रख्यापयेत्पापी दत्वा धेनुं तथा वृष" मिति। अत्रैव विशेषमाह विष्णुः—

"पादव्रते वस्त्रदानं कृच्छ्रार्द्धे तिलकाञ्चनम्।
विख्याप्य पापं वक्तृभ्यः किञ्चिद्दत्वा व्रतं चरे" दिति ॥

तत्प्रकीर्णकविषयम्। यत्र च पर्षदग्रे धेनुवृषभयोरन्यतरदुभयं वा दीयते तत्र धेनुमूल्यं निष्को वा दातव्यो न प्रत्यक्षगौर्वृषभो वा। यथाहाङ्गिराः :—

"बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः।
विभक्तदक्षिणा ह्येता दातारं तारयन्ति हि ॥
एका एकस्य दातव्या न बहुभ्यः कथञ्चन।
सा च विक्रयमापन्ना दहत्यासप्तमं कुल"मिति ॥

एवं पूर्वोक्तप्रकारेण सचैलस्नानम्। अर्द्धवासाः पर्षदं प्रदक्षिणी-कृत्य पर्षद्दक्षिणां दत्वा दण्डवत्प्रणम्य पापं सर्वं प्रख्याप्य पर्षदग्रे-भूमा 'वनुगृह्णीते' त्युक्त्वा पर्षदग्रे तूष्णीं तिष्ठेत्। ततो ब्राह्मणा-स्तमुत्सार्य प्रायश्चित्तस्वरूपं चिन्तयेयुः। तथा चाङ्गिराः :—

तेषां निवेदिते कार्ये उत्सार्यो हि स कार्यवान्।
तस्मिन्नुत्सारिते विप्रे यथा धर्मस्य पाठकाः ॥

ते तथा तत्र जल्पेयुर्विमृशन्तः परस्परम् ।
धर्मशास्त्रेषु यत्प्रोक्तं यच्च सानुग्रहं भवेत् ॥
विमृश्य पर्षतः सर्वं प्रायश्चित्तं प्रकल्पयेत् ।
यथाकालं यथादेशं यच्चं कार्यान्तरं भवेत् ॥
पर्षदः सम्मतं चैव कारिणश्च बलाबलम् ।
सर्वेषां निश्चितं यच्च यच्च प्राणान्न पीडयेत् ॥

कार्यान्तरं वृद्धमातृपितृशुश्रूषादि ।

यच्च प्राणान्न पीडयेत् । यत्र प्राणपीडाकरं प्राणान्तिकप्रायश्चित्तव्यतिरेकेण शास्त्रोपदिष्टं प्रायश्चित्तान्तरमस्ति तत्र प्राणबाधाकरमदेयमित्यर्थः । वृद्धशातातपः –

"यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।
नैव शुद्धिमवाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥
अदृष्ट्वा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये ।
प्रायश्चित्ती भवेत्पूतस्तत्पापं पर्षदि व्रजेत् ॥

देवलः–

" एको नार्हति तत्कर्तुमनूचानोप्यनुग्रहम् ।
धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम् ॥
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोपि वा ।
कुर्वन्त्यनुग्रहं ये तु तत्पापं तेषु गच्छति " ॥

अङ्गिराः–

"आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः ।
जानन्तो ये न प्रयच्छन्ति तेषां ते समभागिनः ॥
तस्मादार्तं समासाद्य ब्राह्मणं च विशेषतः ।
जानद्भिर्धर्मपन्थानं न भाव्यं तु पराङ्मुखैः ॥
अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि ।
प्रायश्चित्तं न दातव्यं जानद्भिरपि कल्पतः " ॥

एवं धर्मशास्त्रानुसारेण प्रायश्चित्तस्वरूपं निश्चित्य तत एकेन तत्प्रायश्चित्तस्वरूपमनुवादयेत् । अत्रायं प्रयोगः । पर्षदुपदिष्टे-

नाऽमुकप्रायश्चित्तेनाचीर्णेन साङ्गोपाङ्गेनामुकपापविमुक्तो भविष्यति तस्मात्साङ्गोपाङ्गं कर्तव्यमिति त्रिः ब्रूयात् । शिष्टसमाचारात्। अयं च प्रयोगवाक्यरचना प्रदर्शनार्था। तस्माद्यत्र यथोचितं तत्र तथा प्रयोक्तव्यम् ।

अङ्गिराः—.

"सर्वेषां निश्चितं यच्च यच्च प्राणान्न पातयेत् ।
आहूय श्रावयेदेकः पर्षदा यो नियोजितः ॥
शृणु भोस्त्वमिदं विप्रैः यत्तु चादिश्यते व्रतम् ।
तत्ते यत्नेन कर्तव्यमन्यथा तद्वृथा भवेत् ॥
यदा त्वया भवेच्चीर्णं व्रतं शुद्धिकरं महत् ।
तदा कुर्यात्प्रयत्नेन शक्त्या विप्राभिपूजनम्" ॥

पर्षदा यो नियोजित इत्यनेनानुवादकस्य भृतित्वेन दक्षिणा गम्यते। तथाहि नियुक्तो हि कर्मकरो भवति। स च भृतिमपेक्षते। किञ्च। पापानुवादोपि पापायैवेति दृष्टलोभाभावे न कोपि प्रवर्तेत । तस्मात्पापानुसारेणानुवादकस्य भृतिरूपदक्षिणा देया। वर्णक्रमेण चानुवादकविशेषोऽङ्गिरसैव दर्शितः-

"ब्राह्मणो ब्राह्मणानान्तु क्षत्रियाणां पुरोहितः ।
वैश्यानां याजकश्चैव प्रायश्चित्तं समादिशेत् ॥
अगुरुः क्षत्रियाणां यो वैश्यानां वाप्ययाजकः ।
प्रायश्चित्तं समादिश्य तत्कृच्छ्रं समाचरेत् ॥
तत्रैवं ब्राह्मणस्यापि क्षत्रियादेः प्रणामिनः ।
अन्तरा ब्राह्मणं कृत्वा व्रतमेतत्समादिशेत् ॥
तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् ।
प्रायश्चित्तं प्रदातव्यं वेदमन्त्रविवर्जितम्" ॥

सुमन्तुः-

"अथवा रागद्वेषादलभ्यमानेषु प्रायश्चित्तेषु यज्ञहवनाध्ययन पूर्वचर्यापरो भैक्षाशी दण्डी मेखली स्वयमेव संवत्सरेण महापातकानि तपःपरो व्यपोहति किल्बिषं, न ब्राह्मणस्य पतनमिच्छन्त्या-

चार्याः" । रागादिवशात् परिषदः सकाशात् प्रायश्चित्तमलभमानो ब्राह्मणः स्वयं चरेत् प्रायश्चित्तस्वरूपं जानीयात् । तदा ब्राह्मणानुज्ञामन्तरेणापि यस्य पापस्य यावत्प्रायश्चित्तं तावत्समाचरेत् । कथमित्याकांक्षयामाह यज्ञहवनाध्ययनेति । तथा कालमपि निर्दिशति संवत्सरेणेति । एतच्चोपलक्षणम् । अतश्च यावत्काल उपयुक्तः यावतीचेतिकर्तव्यतोपयुक्ता तावन्मात्रं ग्राह्यम् । पर्षदनुपदिष्टप्रायश्चित्तस्याचरणे हेतुमाह न ब्राह्मणपतनमिच्छन्त्याचार्या इति । अत्र ब्राह्मणस्य ग्रहणात् क्षत्रियादेर्न पर्षदनुपदिष्टप्रायश्चित्ताचरणाधिकारः । एवं पूर्वोक्तप्रकारेण पर्षदमुपस्थाय पर्षदुपदिष्टव्रतं मनसि निधाय दिनान्ते प्रायश्चित्तोपक्रमं कुर्वीत । तद्यथा । दिनान्ते नखरोमादीनि वापयित्वा स्नानं विधाय प्रायश्चित्तसङ्कल्पं कृत्वा तत्र 'प्राच्याङ्गानि करिष्य' इत्यभिलप्य ततो द्वादशाङ्गुलप्रमाणेनानिषिद्धेन क्षीरवृक्षोद्भवेन काष्ठेन दन्तान्विशोध्याचम्य भस्मगोमयमृद्वारिपञ्चगव्यकुशोदकैर्दशभिर्वक्ष्यमाणप्रकारेण दश स्नानानि कृत्वा वासः परिधायाचम्य वैष्णवं श्राद्धं विधाय देयगोदानं निर्वर्त्यानन्तरमाज्येनाष्टाविंशतिरष्टोत्तरशतं वा व्याहृतिभिर्हुत्वा च वक्ष्यमाणलक्षणं पञ्चगव्यं पृथक् पृथगानीय गायत्र्यादिमन्त्रैर्वा प्रणवेन वा तानि मेलयित्वा समालोड्य ततः सप्त पत्रैर्हरितैः कुशैः पञ्चगव्यमुद्धृत्यैरावतीत्यादिभिर्मन्त्रैः प्रणवेन वा हुत्वा प्रणवेनैव हुतशेषं समालोड्य प्रणवेनैव निर्मथ्य प्रणवेनैवोद्धृत्य प्रणवेनैव पिबेत् । आलोडनं शोधनम् । तत्तु हस्तेन निर्मथनकाष्ठेन पालाशमध्यपर्णेन पद्मपत्रेण सुवर्णपात्रेण ताम्रपात्रेण वा ब्रह्मतीर्थेन वा भवति । एवमुपक्रान्तं व्रतं समाप्यान्ते गोहिरण्यादि दक्षिणां दद्यात् । अथात्र क्रमेण मन्त्रसहितः प्रयोगः प्रदर्श्यते । सचैलस्नानं कृत्वा क्लिन्नवासाः पर्षदं प्रदक्षिणीकृत्य पर्षदादिदक्षिणां दत्वा नत्वा पापं सर्वं प्रख्याप्याथ तदुपदिष्टं व्रतं मनसि निधाय दिनान्ते नखरोमादीन् प्रवाप्य स्नात्वा प्रायश्चित्तसङ्कल्पं कृत्वा 'तत्र प्राच्याङ्गानि करिष्य' इत्यभिलप्य शास्त्रविहितद्वादशाङ्गुलपरिमाणं दन्तकाष्ठं गृहीत्वा पूर्वाभिमुखः सन् मन्त्रं पठेत् । तत्र मन्त्रः ।

"आयुर्बलं यशो वर्चः प्रजां पशुं वसूनि च।
ब्रह्म प्राज्यं च मेधाञ्च त्वं भो धेहि वनस्पते"॥

इत्यनेन मन्त्रेण काष्ठस्याग्रभागं किञ्चिद्भक्षयित्वा तेनैकदेशेन दन्तान् संशोध्य तावत्प्रमाणेन काष्ठान्तरेण जिह्वामुल्लिख्य प्रक्षाल्य च काष्ठद्वयं किञ्चिद्भग्नं कृत्वा विसृज्याचम्य भस्मादिभिः स्नायीत। स्नानप्रकारस्तु तूष्णीं भस्मना मस्तकाद्यवयवान् उल्लिप्योऽदकेन स्नायीत। एवमेव गोमयेनानुलिप्य पुनर्वारिणा स्नायीत। एवमेव मृदानुलिप्य पुनरुदकेन। एवं भस्मादिभिरुदकसहितैः स्नात्वा पश्चात् केवलोदकेन स्नानं कुर्वीत। ततो गोमूत्रेण स्नात्वाऽथ गोमयेनानन्तरं क्षीरेण पश्चाद्दध्नाऽथो घृतेन ततः कुशान्तरितोदकेनेति दश स्नानानि मन्त्रवर्जं कुर्वीत। "मलापकर्षणं स्नानं बाह्यशौचः प्रसिद्ध" इति विष्णुनामलस्नानत्वेन निर्देशात्। अथवा बाह्यशौचोपशुद्धये इत्युक्तत्वाच्छुद्धेश्च दृष्टादृष्टरूपेणाभिलिखितत्वात् मन्त्रपाठेनादृष्टेत्यंते समंत्रकाणि तानि स्नानानि। स्त्रीशूद्रकाणां त्वमंत्रकमेव स्नानम्। भस्माद्यनुलेपनेनापि दृष्टादृष्टशुध्युपपत्तेः। तथा तन्त्रेऽधिकाराभावाच्च।

लिङ्गपुराणे—

ईशानेन शिरोदेशं मुखं तत्पुरुषेण तु।
हृदो देशमघोरेण गुह्यं वामेन सुव्रत॥
सद्येन पादौ सर्वाङ्गं प्रणवेन तु शोधये" दिति।

अथ क्रमेण मन्त्राः। तत्र भस्मस्नानमन्त्रः। "ईशानाय नम इति शिरसि, तत्पुरुषाय नम इति मुखे, अघोराय नम इति हृदये, वामनाय नम इति गुह्ये, सद्योजाताय नम इति पादयोः, प्रणवेन सर्वाङ्गे। अयमेकः प्रकारः॥ प्रकारान्तरं तु "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवो नम इति शिरसि, तत्पुरुषाय विद्महे महापुरुषाय धीमहि तन्नो रुद्रः प्रचोदयादिति मुखे, अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्व सर्वेभ्यो नमस्तेस्तु विश्वरूपेभ्य इति हृदये, वामदेवाय नमो

ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कालविकाराय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो नमो त्मनाय नम इति गुह्ये, सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमः। भवे भवेनातिभवे भजस्व मां भवोद्भवाय नम इति पाद्योः, प्रणवेन सर्वाङ्गे। अथवाऽ"ग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म वैं इवा इदं भस्म" इत्येते मन्त्रा ग्राह्याः। इति भस्मस्नाने मन्त्रान्तराणि। इति भस्मस्नानानन्तरं गोमयेन स्नायीत। तत्र मन्त्रः' 'मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान् मा नो रुद्र भामितो वधी हैविष्मन्तः सदमित् त्वा हवामहे॥ (मं. १, सू ११४ मं ८) अथवा 'गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' अपिवा 'अग्रमग्रं चरंतीनामोषधीनां रसंवने। तासामृषभपत्नीनां पवित्रंकाशयोधनं। तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदा॥ इति गोमयस्नाने वैकल्पिका मन्त्राः। अथ मृदा स्नानम्। तत्र मन्त्राः "अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे शिरसा धारयिष्यामि रक्षस्व मां पदे पदे। भूमिर्धेनुर्धरिणी लोकधारणी उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्। मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमंत्रिता। मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्। मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके। त्वया हतेन पापेन गच्छामि परमां गतिम्"। इति मृत्तिकास्नानमन्त्रः। अथ केवलोदकस्नानमन्त्राः "'आपोहिष्ठे'ति त्रिभिः, अथवे 'दमाप' इति केवलोदकस्नानम्। अथ पञ्चगव्यस्नानम्। तत्र गोमूत्रगोमयक्षीरदधिघृतानां क्रमेण मरीचिना देवता दर्शिताः।

"देवताः सम्प्रवक्ष्यामि आनुपूर्व्येण यस्य याः।
वरुणो देवता मूत्रे गोमये हव्यवाहनः।
सोमः क्षीरे दध्नि वायु घृते रविरुदाहृत" इति॥

अतस्तद्देवताप्रकाशका मन्त्राः प्रदर्श्यन्ते। तत्र गोमूत्रस्नानमन्त्रः "रेतो मूत्र" मितिमन्त्रः। उपलक्षणमेतत्। तस्माद्वरुणप्रकाशकाः

श्रौताः स्मार्ता वा मन्त्रा ग्राह्याः। एवं सर्वत्रापि। अथ गोमयस्नानमन्त्रः "पाहि नो अग्नएक ये"ति। अथ क्षीरस्नानमन्त्रः "उरुष्या णो अभिशस्तेः सोम नि पाह्यं हंसः सखा सुशेव एधि नः। अथ दधिस्नानमन्त्रः "दधिक्रावणे"ति। अथ घृतस्नानमन्त्रः "घृतं घृते" ति। अथवा पराशरोक्तमन्त्राः ग्राह्याः

"गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा दधि॥
तेजोसि शुक्रमित्याज्यं देवस्य त्वा कुशोदक" मिति

गायत्री प्रसिद्धा। गन्धद्वारेत्ययं मन्त्रः प्राक् प्रदर्शितः। आप्यायस्वेति, दधिक्राव्णः, तेजोसीति, देवस्यत्वा इति। एवं दशस्नानानि कृत्वा वासः परिधायाचम्य वैष्णवं श्राद्धं कुर्वीत। तद्यथा। विष्णूद्देशेन त्रिभ्योधिकान ब्राह्मणान् भोजयेत्। भोजनासम्भवे पर्याप्तं द्विगुणमामान्नं हिरण्यं वा दद्यात्। एवं वैष्णवं श्राद्धं विधायादौ गोप्रदानमचरेत्। तत्र गोदानमन्त्रः

"गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र चे"ति॥

गोदानानन्तरमाज्येनाग्नौ व्याहृतिभिरष्टाविंशतिरष्टोत्तरशतं हुत्वा पञ्चगव्यं जुहुयात्। तत्र पञ्चगव्यहोमप्रकारः ताम्रवर्णायाः गोमूत्रं, श्वेतवर्णायाः गोमयं, काञ्चनवर्णायाः पयः, नीलवर्णाया दधि, कृष्णवर्णायाः घृतम्। अथवा सर्वं पञ्चगव्यं कापिलं वाऽसम्भवे यथालाभोपपन्नं पृथक् पृथक् सम्पाद्य पलपरिमितं वा माषाष्टकं वाऽङ्गुष्ठार्द्धपरिमितगोमयद्विगुणपरिमाणं वा गोमूत्रं पलाशमध्यपत्रनिर्मिते पद्मपत्रविरचिते वा सुवर्णमये वा ताम्रमये (वा) पात्रे विनिक्षिपेत् गायत्र्या प्रणवेन च। तदनन्तरमङ्गुष्ठार्द्धपरिमितं वा षोडशमाषपरिमितं वा गोमयं गन्धद्वारामित्यनयर्चा प्रणवेन वा प्रतिक्षिपेत्। यस्मिन् पात्रे गोमूत्रं निहितं तत्रैव। ततश्च सप्तपलपरिमितं वा द्वादशमाषपरिमितं वाऽर्द्धाङ्गुष्ठपरिमाणगोमयाष्टगुणं वा क्षीरमाप्यायस्वेत्यनयर्चा प्रणवेन वा पूर्व

द्रव्यद्वयं यत्र निक्षिप्तं तत्रैव निक्षिपेत्। अथ सप्तपलं वाऽङ्गुष्ठार्द्ध-परिमितगोमयापेक्षया पञ्चगुणं वा दधि दधिक्राव्णेत्यनयर्चा प्रणवेन वा पूर्वोक्तपात्रे विनिक्षिपेत्। ततस्तु सप्तपलं वा माषाष्टमितं वाऽङ्गुष्ठार्द्धपरिमितगोमयापेक्षया चतुर्गुणं घृतं तेजोसीत्यनेन यजुषा प्रणवेन वा पूर्वोक्तपात्र एव निक्षिपेत्। तदनन्तरं चैकपलं वा माष-चतुष्टयपरिमितं वा कुशोदकं देवस्य त्वेत्यनेन यजुषा प्रणवेन वा पूर्वोदितपात्रे स्थापयेत्। प्रणवः प्रसिद्धः। गायत्र्यादयो मन्त्राश्चास्मिन्नेव प्रकरणे पञ्चगव्यसन्धानप्रस्तावे प्राक् दर्शिताः। एवं गोमूत्रा-दीन्येकपात्रे कृत्वा प्रणवमुच्चार्य यज्ञियकाष्ठेन निर्मथ्य प्रणवेनैवा-भिमन्त्र्य सप्तधा पत्रैर्हरितैः कुशैः पञ्चगव्यमुद्धृत्येरावत्यादि मन्त्रैर्दशाहुतीर्जुहुयात्। अत्र स्रुवस्थाने हरिताः कुशा एव। मन्त्रास्तु "ईरावती (१), इदंविष्णुः (२), मानस्तोके (३), अष्टा-नींशं (४), अग्नयेस्वाहा, सोमायस्वाहा, गायत्रीप्रणवः ओंभूर्भुवः स्वः स्वाहा, अग्नये स्विष्टकृते स्वाहे" ति दशाहुतीर्हुत्वा 'व्रतग्रहणं करिष्य' इति ब्राह्मणान् पृष्ट्वा 'कुरुष्वे' ति तैरनुज्ञातो हुतशेषं पञ्च-गव्यं सर्वं प्रणवेन पिबेत्। एतच्च ग्रामात् बहिः सायं नक्षत्रदर्शने बहिः सर्वं पेयं; नोच्छेषणीयम्। अत एव बाल व्याधि? शक्त्याद्यपेक्षया गोमूत्रादीनि पूर्वोक्तवैकल्पिकपरिमाणापेक्षया मेलनीयानि। एवं तद्ग्रहणं कृत्वा ततः परं मौनी भूत्वाऽऽत्मनो दुष्कृतं मनसा चिन्त-यन्निशामतिवाहयेत्। एवमुपक्रान्तं सम्यक् पारं नीत्वा तत उदी-च्याङ्गानि कुर्वीत। तत्रायं क्रमः। 'प्रायश्चित्तस्य सगुणार्थमुदीच्या-ङ्गानि करिष्य' इति सङ्कल्प्याग्नौ व्याहृतिभिराज्यं हुत्वा पूर्ववदेव वैष्णवं श्राद्धं विधायानन्तरं गोदानमाचरेत्। प्राच्याङ्गकरणवेलायां वैष्णवं श्राद्धं? गोदानानन्तरं होमं विधाय वैष्णवं श्राद्धमिति। श्राद्धानन्तरं गोदानादेर्विहितत्वात्। होमानन्तरमेव हुतशिष्टस्य पञ्चगव्यस्य पानेन व्रतस्य गृहीतत्वाच्च। उदीच्याङ्गानुष्ठानसमये तु होमानन्तरं श्राद्धगोदानादि। उपक्रमे होमस्य सन्निहितत्वादवसा-नेपि सन्निधानस्योचितत्वात्। एवमन्तगोदानानन्तरमवशिष्टानि दश दानानि दद्यात्। तानि च 'श्राद्धं कृत्वा व्रतान्ते तु गोहिर-

ण्यादि दक्षिणे' त्यत्र इति शब्देनोपात्तानि दश दानानि स्वरूपाणि च सङ्ग्रहकारेण दर्शितानि ।

" गो भूतिलहिरण्याज्यवासोधान्यगुडानि वा।
रूप्यं लवणमित्यादि दश दानानि पण्डिता" इति

अथ क्रमेण मन्त्राः गोदानमन्त्रस्त्वादित्ये गोदानसमये दर्शितः ।

अथभूदानमन्त्रः—

" सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ।
अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे" ॥

अथ तिलदानमन्त्रः

" महर्षे र्गोमूत्रसम्भूताः कश्यपस्य तिलाः स्मृताः ।
तस्मादेषां प्रदानेन मम पापं व्यपोहतु" ॥

अथ हिरण्यदान मन्त्रः

" हिरण्यगर्भे गर्भस्त्वं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे" ॥

अथाज्यदानमन्त्रः

" मम धेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारमतः शांतिं प्रयच्छ मे" ॥

अथ वस्त्रदानमन्त्रः

" शरणं सर्वलोकानां लज्जाया रक्षणं परम् ।
सुखे च धारितं वस्त्रमतः शांतिं प्रयच्छ मे" ॥

अथ धान्यदानमन्त्रः

" सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ।
प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे" ॥

अथ गुडदानमन्त्रः

" यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः ।
सामवेदस्तु वेदानां वेदान्तमथ योगिनाम् ॥
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा" ।

अथ रजतदानमन्त्रः ।

" प्रीतिर्यतोमन्तणांश्च विष्णुशङ्करयोः सदा ।
शिवनेत्रोद्भवं रूप्यमतः शान्ति प्रयच्छ मे " ॥

अथ लवणदानमन्त्रः

" यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ।
शम्भोः प्रीतिकरं नित्यमतः शान्ति प्रयच्छ मे" ॥

इति दानमन्त्राः ।

पापानां परिपाकस्य शान्तिकर्मविवक्षया
उक्तानि परिभाषाया मुपयुक्तान्यशेषतः ॥

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णो
पूर्णस्तरङ्गः खलु सप्तमोऽयम् ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे सप्तमस्तरङ्गः समाप्तः ॥

॥ इति परिभाषाखण्डः ॥

# अष्टमस्तरङ्गः

अथ रोगनिबर्हणानि । तत्र क्षयरोगहराणि । अथ रोगनिदानमाह याज्ञवल्क्यः "ब्रह्महा क्षयरोगी स्या" दिति । तन्निवृत्त्यर्थं षडब्दप्रायश्चित्तं कुर्यात् । 'प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव चे' ति तेनैवाभिधानात् । अथ क्षयरोगहरं कदलीदानं पद्मपुराणे-"क्षयी स्यात् क्षेत्रमारणे" । क्षेत्रमारणं क्षेत्रगतसस्यमारणं उदकदानादिप्रतिबन्धरूपाद्यनिष्टाचरणेन । अथवा क्षेत्रियागर्भप्रतीघातः । बौधायनस्तु एतन्निवर्तकं कदलीदानमाह ।

"कारयेत्कदलीं दिव्यां पत्रैः सर्वत्र संयुताम् ।
फलपूगेन संयुक्तां सुवर्णस्य पलेन तु ॥
यथाविभवतः कुर्याद्वस्त्रैरावेष्ट्य सूत्रकैः ।
ब्राह्मणान् भोजयेच्चापि भक्ष्यैर्नानाविधैः शुभैः ॥
होमञ्च कारयेत्तत्र पूर्ववद्ब्राह्मणेन तु ।
तस्मै तां कदलीं दद्याद्वस्त्रालङ्कारपूर्विकाम् ॥
पूजिताय दरिद्राय वृत्तस्थायात्मवेदिने ।
धर्मज्ञायातिदान्ताय मन्त्रेणानेन तत्क्षयी ॥
'हिरण्यगर्भ पुरुष परात्पर जगन्मय ।
रम्भादानेन देवेश क्षयं क्षपय मे प्रभो'
पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ।
शिष्टैरिष्टैर्बन्धुभिश्च सह भोजनमाहरेत्" ॥

फलपूगेनेत्यादि । फलानां पूगः समूहः । पलेन तु । पलस्वरूपं परिभाषाप्रकरणे द्रष्टव्यम् । यथाविभवतः विभवानुसारेण । समर्थश्चेत् पलादधि केनापि कदलीं कारयेदित्यर्थः । सूत्रैरथावेष्ट्य वस्त्राद्यावेष्टनेन कदलीपूजोपलक्ष्यते । पूजामन्त्रश्च त्र्यम्बकं यजामह इत्ययम् । होमं च कारयेत्तत्र पूर्ववदिति पूर्वशब्देन मृत्युञ्जयमन्त्रस्योपलक्षितत्वात् । त्र्यम्बकमन्त्रश्च परिभाषायां कूष्माण्डहोमे प्रदर्शितः । कदलीमन्त्रेण परमपुरुषस्य रम्भादिदेवतात्वेनोपादानाच्च । तथा कर्मणो मृत्युनिर्हरणार्थत्वात् । होमसङ्ख्या चाष्टोत्तरशतं सहस्र-

मयुतं वा। द्रव्यमाज्यं तिलाश्च। कदलीपूजानन्तरं ब्राह्मणान् भोजयित्वा होमं कुर्यात्। वचनपाठगतक्रमबाधे प्रमाणाभावात्। एवं कदलीदानान्तं कर्म निर्वर्त्य स्वास्तिवाचनानन्तरं शिष्टैरिष्टैश्च भुञ्जीत। इति क्षयरोगहरं कदलीदानम्। अथ क्षयरोगहरव्याधि-प्रतिकृतिदानं ब्रह्माण्डपुराणे-

"धर्मशास्त्राण्यविज्ञाय प्रायश्चित्तं ददाति यः।
राजयक्ष्मा भवेत्तस्य रोगपीडाऽतिदारुणा॥
पूर्वोक्तेन विधानेन प्रदद्यात्प्रतिरूपकम्।"

पूर्वोक्तविधिरस्माभिः परिभाषायां प्रदर्शितः व्याधिप्रतिमादान-विधिप्रकरणे। प्रतिमालक्षणन्तु कर्मविपाकसारे

"राजयक्ष्मा कृशतनुः शरचापासितर्जनीः॥
दधत्त्रिनेत्रो दंष्ट्राभ्यां दष्टोष्ठो हन्तुमुद्यतः"॥

इति यक्ष्मरोगहरप्रतिकृतिदानम्। अथ साध्यरोगहरप्रतिकृतिदानं ब्रह्माण्डपुराणे

ब्रह्मोवाच,

"सुवर्णरत्नरजतैर्यथा शक्त्यनुरूपतः।
कृत्वा च प्रतिमां व्याधेर्दद्याद्विप्राय यत्नतः॥
शतेन वा तदर्द्धेन त्रिंशता निष्कसङ्ख्यया।
जातरूपमयं व्याधिरूपं तु कारयेत्॥
विधाय पात्रे सम्पूर्णे तण्डुलैः सितरूपकैः।
अलङ्कृत्य च सौवर्णं रूपं त्वगरुलेपनैः॥
वासोयुगेन संवेष्ट्य हिरण्यबहुभूषणैः।
अलङ्कृताय विप्राय दद्यान्मन्त्रमुदीरयन्"॥

मन्त्रमाह,

'ये मां रोगाः प्रबाधन्ते देहस्थाः सततं ततः।
गृह्णीष्व प्रतिरूपेण तान्रोगान् द्विजसत्तम'॥

प्रतिगृहीतुः कर्तव्यतामाह

"बाढमित्येव तद्रूपं गृह्णीयाद्व्याधिभिः समम्।
ततः स रोगी दाता च दीर्घायुष्यं प्रपद्यते"॥

सुवर्णरत्नरजतैरित्यादि । सुवर्णेन शरीरनिर्माणं, रत्नेन चक्षुषी, रजतेनाक्ष्णोः श्वेतगोलकौ । एवं यथाशक्ति प्रतिमामनुरूपतः कुर्यादित्यर्थः । निष्कस्वरूपं परिभाषायां परिमाणप्रकरणे ज्ञातव्यम् । जातरूपं सुवर्णम् । पात्रे कांस्यपात्रे । 'कांस्यं च यक्ष्मणो देय' मिति कर्मविपाकसङ्ग्रहदर्शनात् । इति साध्यसर्वरोगहरव्याधिप्रतिकृतिदानम् । प्रकारान्तरेण साध्यसर्वरोगहरं विरुग्विधाने--

"असाध्यव्याधिना ग्रस्त उग्रेण प्राणहारिणा ।
आ ते रौद्रेण सूक्तेन प्रत्यृचं वाग्यतः शुचिः ॥
पूर्वमाज्याहुतिं दत्वा उपस्थाय च शङ्करम् ।
हविःशेषेण वर्तेत एकान्तरमतन्द्रितः ॥
पूर्णे मासे जयेन्मृत्युं रोगेभ्यश्च प्रमुच्यते ।
होमकर्मण्यशक्तानां जपस्तद्द्विगुणो भवेत्" ॥

आ ते रौद्रेणेत्यादि । आ ते पितरित्यनेन रुद्रदैवतेन सूक्तेन । पूर्वमाज्याहुतिमिति । उपस्थानात् पूर्वं । हविःशेषेणेत्यादि । एकस्मिन् दिन उपवासोऽपरस्मिन् हविःशेषेण पारणम् । अत्र हविश्चरुरेवमाज्यमेव ॥ तथात्वे रोगिणो मासं शरीर निर्वाहानुपपत्तेः । अतश्च प्रतिदिनं चरुहोमानन्तरमाज्यहोमं कृत्वा शङ्करोपस्थानं कार्यम् ॥ होमः प्रत्यृचम् ॥ उपस्थानं सूक्तेन । व्याधितरतमभावेन सूक्तावृत्याऽष्टोत्तरशतं सहस्रं वा होमः कार्यः । स्वयमशक्तश्चेदाचार्येण कारयेत् । आचार्यस्याप्येकान्तरोपवासः पूर्ववदेव । मृत्युञ्जयेन पूजयेत् । सूक्तं रुद्रं जपेत् । आतेपितरित्यस्य पञ्चदशर्चस्य गृत्समदऋषिः । रुद्रो देवता । त्रिष्टुप् छन्दः । विहितार्थे विनियोगः ।

"आते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः॥(१)त्वा दत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः । व्यस्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः (२) श्रेष्ठो जातस्य रुद्र श्रिया-

सि तवस्तमस्तवसां वज्रबाहो । पर्षि णः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ( ३ ) ॥ मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती । उन्नो वीरां अर्पय भेषजेभि र्भिषक्तमं त्वा भिषजां शृणोमि (४) ॥ हवीमभिर्हवते यो हविर्भि रव स्तोमेभी रुद्रं दिषीय । ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै (५)॥ उन्मा ममन्दवृषभो मरुत्वान् त्वक्षीयसा वयसा नाधमानं । घृणीव च्छायामरपा अशीय विवासेयं रुद्रस्य सुम्नम् ॥ ( ६ ) क्व स्य ते रुद्र मिळयाकु र्हस्तो यो अस्ति भेषजो जलाषः । अपभर्ता रपसो दैव्यस्या भीनु मा वृषभ चक्षमीथाः ॥ (७) प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि । नमस्या कल्मलीकिनं नमोभि र्गृणीमासि त्वेषं रुद्रस्य नाम ॥ (८) स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रु : शुक्रेभिः पिपिशे हिरण्यैः । ईशानदस्य भुवनस्य भूरे र्न वा उ योषद् रुद्रादसुर्यम् ॥ (९) अर्हन् बिभर्षि सायकानि धन्वा र्हन् निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति (१०)॥ स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृळा जरित्रे रुद्र स्तवानो ऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ (११) कुमारश्चित् पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् । भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्व भेषजा रास्यस्मे॥ (१२)या वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु । यानि मनुरवृणीता पिता न स्ता शं च योश्च रुद्रस्य-वश्मि ॥ (१३) परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् । अव स्थिरा मघवद्भयस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ । (१४) एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि । अहवनश्रुन्नो रुद्रेह बोधि बृहद् वदेम विदथे सुवीराः ॥ (१५) ( मं. २, सू. ३३ )
इति प्रकारान्तरेण साध्यसर्वरोगहरणम् ।
अथ शातातपोक्तं राजयक्ष्महरणम्

" राजहा राजयक्ष्मी स्यादेषा तस्यापि निष्कृतिः ।
गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः ॥
घृतधेनुप्रदादेन तिलकुंभप्रदानतः ।
इत्यादिभिः क्रमेणैव क्षयरोगः प्रशाम्यति ॥

गवादीनि तिलकुम्भान्तानि शक्तिरोगाद्यनुसारेण व्यस्तानि समस्तानि वा दातव्यानि। आदिशब्देन ग्रहशान्तिविनायक शान्त्यादयो लक्ष्यन्ते। घृतधेनुस्तु मत्स्यपुराणे। तत्र गुडधेनु विधानस्यैव घृतधेन्वादावतिदिष्टत्वात् गुडधेनुविधिरुच्यते

"गुडधेनुविधानस्य यद्रूपमिह यत्फलम्।
तदिदानीं प्रवक्ष्यामि सर्वपापप्रणाशनम्॥
कृष्णाजिनं चतुर्हस्तं प्राक्ग्रीवं विन्यसेद्भुवि।
गोमयेनोपलिप्तायां दर्भानास्तीर्य यत्नतः"॥

अत्र हस्तोऽरत्निरिति दानखण्डे। यावद्भिरजिनैश्चतुर्हस्तमिता भूराच्छाद्यते तावन्त्यजिनानि ग्राह्याणीत्यर्थः। अरत्निशब्दस्य प्रादेशपर्यायत्वे त्वेकेनैवाजिनेनाच्छादनम्। अथवाऽऽयामविस्तारौ मिलित्वा चतुर्हस्तमितं ज्ञेयम्।

"लघ्वेणाजिनं तद्वद्वत्सस्य परिकल्पयेत्।
प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकाम्
प्राङ्मुखः प्राक्शिरा वत्सोपि तथैव तु।
उत्तमा गुडधेनुः स्यात्सदा भारचतुष्टयम्॥
वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता।
अर्द्धभारेण वत्सः स्यात् कनिष्ठा भारकेण तु॥
चतुर्थांशेन वत्सःस्या द्गृहवित्तानुसारतः।"

भारलक्षणं परिभाषायां परिमाणलक्षणेऽभ्यधायि।

गृहवित्तानुसारतः पूर्वोक्तोत्तममध्यमादिकल्पना भवतीत्यर्थः।

"धेनुवत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरावृतौ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ॥

अत्रमुक्ताफलसाहचर्याच्छुक्तिरपि मुक्ताशुक्तिकैव ग्राह्या।

सितसूत्रासिवालान्त्रौ सितकम्बलकम्बलौ।

कम्बल:सास्ना।

ताम्रगण्डकपृष्ठौ तौ सितचामररोमकौ॥

गण्डकं ककुदप्रदेशो गण्डस्थलंच।

विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ।
क्षौमपुच्छौ कांस्यदेहाविन्द्रनीलकतारकौ॥

तारका चक्षुर्मध्यविभाग:।

सुवर्णशृङ्गाभरणौ राजतक्षुरसंयुतौ।
नानाफलमयैर्दन्तै र्घ्राणगन्धकरण्डकौ॥

फलमयैर्दन्तै: संयुताविन्यन्वय:। अत्रच स्वशक्त्यनुसारेण सुवर्णशृङ्गादिकं विधेयम्। वित्तशाठ्यं न कारयेदित्यस्य सर्वशेषत्वात्।

इत्येवं रचयित्वा तौ धूपदीपैस्तथाऽर्चयेत्।

अर्चनमन्त्र:

"धेनुस्त्वं पृथिवी सर्वा यस्मात्केशवसन्निभा।
सर्वपापहरा नित्यमत:शान्तिं प्रयच्छ मे"॥

एवमनेन मन्त्रेण समभ्यर्च्य सवत्सां धेनुमामन्त्रयीत। तत्र मन्त्रणमन्त्रानाह।

"या लक्ष्मी: सर्वभूतानां या च देवेष्ववस्थिता।
धेनुरूपेण सा देवी मम पापं व्यपोहतु॥
देवस्था या च रुद्राणी शङ्करस्य सदा प्रिया।
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु॥
विष्णोर्वक्षसियालक्ष्मी: स्वाहा या च विभावसो:।
चन्द्रार्कशक्तिर्या धेनुरूपास्ति, सा श्रिये॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च।
लक्ष्मीर्या लोकपालानां सा धेनुर्वरदाऽस्तु मे॥
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां सदा।
सर्वपापहरा धेनुस्तस्माच्छान्तिं प्रयच्छ मे॥"
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत्।

ब्राह्मण: पुच्छदेशे प्रतिगृह्य स्वस्ति कुर्यात्। एवं गुडधेनुविधिमभिधायैतमेव विधिं घृतधेन्वादिष्वतिदिशति।

'विधानमेतद्धेनूनां सर्वासामिह पठ्यते'। सर्वासां प्रत्यक्षधेनु व्यतिरिक्तानाम् । प्रत्यक्षधेनावपि सुवर्णशृङ्गित्वादि यथाविभवतः समानमेव ।

"यास्तु पापविनाशिन्यः प्रथन्ते दश धेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥
प्रथमा गुडधेनुः स्यात् घृतधेनुस्तथाऽपरा ।
तिलधेनुस्तृतीया च चतुर्थी जलधेनुका ॥
क्षीरधेनुस्तु विख्याता मधुधेनुस्तथा परा ।
सप्तमी शर्कराधेनुर्दधिधेनुस्तथाष्टमी ॥
रसधेनुश्च नवमी दशमी स्यात् स्वरूपतः" ।

स्वरूपतः प्रत्यक्षधेनुरित्यर्थः ।

कुम्भाः स्युर्द्रवधेनूनामितरासां तु राशयः ।

कुम्भशब्दः कलशशब्दपर्यायः । अथवा परिमाणवचनः । तच्च परिमाणं परिभाषायां परिमाणप्रकरणे द्रष्टव्यम् ।

सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः ।
नवनीतेन रत्नैश्च तथान्येपि महर्षयः ॥
एतदेव विधानं स्यादेते चोपस्कराः स्मृताः ।
मन्त्रावाहनसंयुक्ताः सदा देयाश्च पर्वणि ॥
यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः ।
गुडधेन्वादयो देया उपरागादिपर्वसु ॥

इति गुडधेन्वादिदानविधिः ।

क्षयी क्षयरोगनिवृत्तये पूर्वोक्तां घृतधेनुं दद्यात् । घृतधेनुविधानान्यन्यान्यपि बहूनि सन्ति । तानि ग्रन्थगौरवभयान्न प्रदर्शितानि । अतो घृतधेन्वादिविधिषु विकल्पो वेदितव्यः । इति शातातपोक्तराजयक्ष्महरं दानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णः
पूर्णोष्टमोयं प्रथितस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवेऽष्टमस्तरङ्गः समाप्तः ॥

---

# नवमस्तरङ्गः

अथ शूलरोगहराणि दानानि। याज्ञवल्क्यः–" अन्नहर्ताऽमयावी स्यात् "। आमयावी शूलरोगवान्।

" धान्यं दशभ्यः कुम्भेभ्यो हरते द्विशतं दम " इति तेनैव कनिष्ठसाहसदण्डाभिधानात् कनिष्ठसाहसानामुपपातकसमत्वा-दुपपातकप्रायश्चित्तं त्रैमासिकं कर्तव्यं शूलरोगमात्रस्य। तत्रापि रोग-स्यासाध्यत्वे निदानभूतपापाभ्यासपरिकल्पनया षण्मासिकादीनि। व्याध्यल्पत्वे तु प्रायश्चित्ताल्पत्वमपि कल्पनीयम्। इति शूलरोगहर प्रायश्चित्तम्। अथ शूलरोगहरत्रिशूलदानम्। तदुक्तं चतुर्वर्गचिन्तामणौ –

" शूलेन शूली भवति मनुष्याणां च हिंसकः।
पलेनापि तदर्द्धेन तदर्द्धेनाथवा कृतम्॥
सौवर्णं राजतं वापि शूलं कुर्यात्प्रयत्नतः।
ताम्रेण वायसा वापि खादिरेणाथवा पुनः॥
रक्तवस्त्रेण संवेष्ट्य तिलानामुपरि न्यसेत्।
तिलानां तु परिमाणं द्रोणं वापि तदर्द्धकम्॥
तदर्द्धं च यथाशक्ति पूजयेद्ब्राह्मणं शुचिः।
अर्घादिमूलमन्त्रेण षोडशैवोपचारकान्॥
क्रियाविद्ब्राह्मणः पूजां कृत्वा होमञ्च कल्पयेत्।
शूलस्य दक्षिणे पार्श्वे स्थण्डिलेग्निः प्रणीयते।
समिदाज्यतिलान्हुत्वा ततःशान्तिं प्रकल्पयेत्॥
त्र्यंबकेनैव मन्त्रेण आज्यहोमः प्रशस्यते।
यत इन्द्रभयामहेतिन्हुत्वाजियत्नतः॥
शूलिनस्तु ततः शान्तिं ब्राह्मणः परिकल्पयेत्॥
तेनोदकेन वा सिञ्चेत् शूलिनं रोगिणं नरम्॥
ततो हुतवते शूलं पूजयित्वा स्वशक्तितः।
दद्यात्सदक्षिणं तत्तु प्राङ्मुखाय उदङ्मुखः॥

मन्त्रेणानेन पयसा सर्वं भक्त्या परिस्मरेत् ।
' त्वं शूल ब्रह्मणा सृष्टं त्रिपुराणां विनाशनम्
दैत्यानां दानवानां च शङ्करस्यायुधं तथा ॥
कुक्षिस्थमथ पार्श्वस्थमथवा पृष्ठसंस्थितम् ।
शूलं विनाशय त्वं मे महादेवेन धारितम् ' ॥

दान मंत्रः–

कुब्जकुंचितसर्वांगः शूलो यज्ञोपवीतधृक् ।
सद्यः प्राणान् हरेऽक्ष चिच्छिन्नेत्रः किंकिणीयुतः ॥
शूलस्य प्रतिमां दद्यात् ।
दत्वा स्नात्वाऽथभुञ्जीत ब्राह्मणैः सह बन्धुभिः ।
शूलहिंसासमुत्पन्नां वेदनामाशु नाशयेत् " ॥

पलेनेत्यादि । पलद्रोणयोर्लक्षणं परिभाषायां परिमाणप्रकरणेऽभिहितम् । पूजयेद्ब्राह्मणः शुचिरिति । ब्राह्मणः पूर्वोक्तशूलं पूजयेदित्यर्थः । शूलमन्त्रेणार्घाद्युपचारान् कल्पयेदित्यन्वयः । शूलमन्त्रः शैवपञ्चाक्षरो वा रुद्रप्रकाशको वैदिको मन्त्रो वा । शैवपञ्चाक्षरस्य वामदेव ऋषिः । पङ्क्तिः छन्दः । शिवो देवता । पूजायां विनियोगः । मन्त्रस्तु नमःशिवाय । केचित्प्रणवादि पठन्ति । वैदिकमन्त्रास्तु । त्र्यम्बकमित्यदयो बहवः परिभाषायां प्रदर्शिताः । समिदाज्यतिलान् हुत्वेति । समिदादिहोमेषु कर्मविपाकसङ्ग्रहादौ मन्त्रान्तराणि प्रदर्शितानि । तद्यथा । समिद्धोमे तावत् पुरुष एवेदमित्यस्य मन्त्रस्य नारायण ऋषिः । पुरुषो देवता । अनुष्टुप् छन्दः । समिद्धोमे विनियोगः । पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । ( मं. १०, सू. ९० मं. २ ) । समिधश्च यज्ञियाः । आज्यहोमे त्र्यम्बकमन्त्रः । तिलहोमे तु यत इन्द्र भयामह इति । मन्त्रद्वयमपि परिभाषायां कूष्माण्डहोमप्रकरणे प्रदर्शितम् । होमसङ्ख्यात्वष्टोत्तरशताद्ययुतान्ता व्याध्यादितरतमभावेन कल्प्या । ततः शान्तिं प्रकल्पयेदिति । शान्तिघोषः । शान्तिःतत्र आनो भद्राइत्यारभ्याश्वालायनीयः । शन्नो वातः पवतामिति तैत्तिरी-

याणाम्। एतद्वयमपि परिभाषायां व्याधिप्रतिमादानविधौ द्रष्टव्यम् । एतच्चोपलक्षणम् । यस्यां शाखायां या शान्तिः सा तच्छाखीयैर्ग्राह्या । एतच्च शान्तिवाचनं वारुणं कलशं संस्थाप्य तस्याग्रे कुर्यात्। ततस्तेनोदकेन शान्त्युदकेन शूलिनं नरमासिञ्चेत् । कलशस्थापनप्रकारस्तु नवग्रहयज्ञे सूर्यपूजानन्तरं दर्शितः । अभिषेक प्रकारोऽपि तत्रैव वसुधारानन्तरं दर्शितः । सर्वं परिस्मरेदिति । एवंविधपापाचरणादयं रोगः सञ्जातः, एतन्निवृत्तये वक्ष्यमाण शूलदानमंत्रस्थितविशेषणविशिष्टं शूलं संस्मृत्य ब्राह्मणाय दद्यातित्यर्थः । एतच्च सर्वशूलसाधारणम् । इति शूलरोगहरत्रिशूलदानम् । अथारुचिशूलहरम् । कर्मविपाकसंग्रहे

> "श्रद्धाहीनो धनवान् दानेष्वरतिः तामसदानी वा यः ।
> सोऽरुचिमान् शूली जायेता त्रैष निस्तारः ॥
> "चान्द्रायणं चातिकृच्छ्ं प्राजापत्यमथापरम् ।
> होमाद्यपि च कुर्वीत व्याध्यादेरनुरूपतः" ॥

चान्द्रायणादिनि व्यस्तानि समस्तानि वा यथाशक्ति रोगाद्यपेक्षया योज्यानीत्यर्थः । होमस्तु शूलदानोक्तप्रकारेण । आदिशब्देन विष्णुसहस्रनामापामार्जनविष्णुरुद्रहृदय स्तोत्राणि लक्ष्यन्ते । तानि च परिभाषायां दर्शितानि । तथा चाद्रायणादीन्यपि । इत्यरुचिरोगशूलहरं दानम् । अथ प्रकारान्तरेणारुचिशूलहरं कर्मविपाकसङ्ग्रहे—

> "साक्षाद्घ्नन्ति गवादीनि यः पुनर्जननान्तरे ।
> शिरोरोगी श्रोत्ररोगी शूलीं वाऽरुचिमान् भवेत् ॥
> एतन्निवर्तये वर्षं द्विवर्षं वा त्रिवर्षकम् ॥
> चरेद्व्रतं तदन्ते च गोहिरण्यादिकं दिशेत्" ॥

तत्र गोहननं यज्ञसाधनत्वादिगुणविशिष्टगोहननम् । प्रायश्चित्तस्य गुरुत्वात् । आदिशब्देन यज्ञविघातो भूम्यनृतञ्च । व्याधि गुरुलघुभावेनव वर्षैकादिप्रायश्चित्तानि योज्यानि । गोहिरण्यादिकमित्यादि शब्देन वासोऽभिधीयते । तदन्ते चेति चकारेणोद्यन्नद्येति

ऋग्जपः। जपसङ्ख्या चायुतम् 'उद्यन्नद्य'ऋचः परिभाषायां व्याधिप्रतिमादानविधौ द्रष्टव्याः। इति प्रकारान्तरेणारुविशूलहरम्। अथाजीर्णशूलहरम्। कर्मविपाकसङ्ग्रहे (समुच्चये) निदानमाह वृद्धशातातपः--

शूद्रस्यैव तु भुक्त्वान्नमव्रतस्य द्विजस्य च।
शूलव्याधिर्भवेन्नित्यमजीर्णान्नातिपीडितः॥

शूद्रस्यैवान्नं सततं जन्मान्तरे भुक्त्वा यस्तन्निमित्तप्रायश्चित्तमकुर्वन्नास्ते यश्चाव्रतस्य द्विजस्य नित्यकर्मानुष्ठानरहितस्य वार्द्धुषिकस्य चान्नं भुक्त्वा पूर्ववदास्ते स शूलव्याधिमान् भवेदित्यर्थः।

अत्रेयं निष्कृतिः कार्या उपवासत्रयं तथा।
दद्यात्पलत्रयं रूप्यं ब्राह्मणाय सकाञ्चनम्॥

पलमितिः परिभाषायां परिमाणप्रकरणेऽभ्यधायि। रजतदानमन्त्रोपि तत्रैव प्रायश्चित्तोपक्रमपद्धतौ। इत्यजीर्णशूलहरम्। अथ प्लीहशूलहरं कर्मविपाकसमुच्चये (संग्रहे)

"विश्वस्तविषदाता च प्लीहवान् जायते नरः"।
च शब्दात् शूली च।
"एतन्निर्हरणार्थं तु प्रायश्चित्तं समादिशेत्।
चान्द्रायणं पराकं च तथोद्यन्जप एव च।
अपामार्जनकस्यापि जपः सन्ध्यात्रये भवेत्"॥

उद्यन्नद्यऋचः परिभाषायां रोगप्रतिमादानविधौ द्रष्टव्याः। जपसंख्या त्वयुतम्। अपामार्जनस्तोत्रमपि परिभाषायां विष्णु सहस्रनामानन्तरं द्रष्टव्यम्। स्तोत्रजपस्त्वाव्याधिविमोक्षं त्रिसन्ध्यम्। चान्द्रायणपराकयोर्लक्षणमपि परिभाषायामेव। इति प्लीहशूलहरम्। अथ जठरशूलहरम्। कर्मविपाकसङ्ग्रहे--

"श्रुताध्ययनसम्पन्नं याचितारमकिञ्चनम्।
ब्राह्मणं दान्तमाहूय दानार्थं न ददाति यः॥
स भवेज्जठरे शूली तथा धानी च कर्हिचित्।
कृच्छ्रातिकृच्छ्रचान्द्राणि स कुर्याद्रोगमुक्तये"॥

चान्द्रं चान्द्रायणम् । कृच्छ्रादिस्वरूपाणि परिभाषायां मृग्याणि । एतानि समस्तानि व्यस्तानि वा रोगशान्तये गुरुलघुभावाद्यनुसारेण योज्यानि । इति जठरशूलहरम् । अथ कटिशूलहरं कर्मविपाकसमुच्चये

"गोगामी कटिशूली स्यात्तस्य चान्द्रायणं तथा।
कृच्छ्रं चैवातिकृच्छ्रं च जपं सौरं च निर्दिशेत् ॥
गां वासः काञ्चनं दद्यात्सहिरण्यं घृतं तथा" ॥

सौरजप उद्यन्नद्येति जपः । सच तृचः परिभाषायां दर्शितः । सङ्ख्या त्वयुतम् । गवादिदानमन्त्रा अपि तत्रैव प्रायश्चित्तोपक्रमपद्धतौ दर्शिताः । सहिरण्यघृतदाने आज्यावेक्षणमन्त्रः —

"अलक्ष्मीर्यच्च दौस्थ्यं मे सर्वगात्रेष्ववस्थितम् ।
तत्सर्वं शमयाज्य त्वं लक्ष्मीं पुष्टिं च वर्द्धय" इति ॥

इति कटिशूलहरम् । अथ हस्तशूलहरं कर्मविपाकसङ्ग्रहे—

"पूर्वजन्मनि नास्तिक्यात्सन्ध्यादिरहितो द्विजः ।
हस्तशूली स भवति निष्कद्वादशकं दिशेत् ॥
भोजयेद्ब्राह्मणान् भक्त्या जपेत्सौरं हिरण्यदः" ।

सौरं सूक्तं मन्त्रं वा। सौरमन्त्र अष्टाक्षरो वा उद्यन्नद्यतृचो वा। अनयोः स्वरूपं निष्कस्वरूपं च परिभाषायामुदीरितम् । सौरसूक्तन्तु । उदु त्यं जातवेदसमिति त्रयोदशर्चस्य सूक्तस्य काण्वःप्रस्कण्व ऋषिः । आद्या नव गायत्र्यः शिष्टा अनुष्टुभः । सूर्यो देवता । जपे विनियोगः। एतदपि सूक्तं परिभाषायां (महा) सौरप्रकरणे बोद्धव्यम्। हिरण्यद इति । भवेदिति शेषः । इति हस्तशूलहरम् । अथ कर्णशूलहरं । कर्मविपाकसङ्ग्रहे (समुच्चये)—

"मैथुनं शृणुयात्पित्रोः कर्णशूली भवेत्तु सः ।
स्याच्चैव बधिरः किञ्चित्कपालेऽसह्यशब्दवान् ॥

निष्कविंशतिकं दद्याद्ब्राह्मणाय कुटुम्बिने ।
विष्णुप्रकाशकान्मन्त्रान् जपेद्रोगोपशान्तये ॥
अपामार्जनपाठेन मन्त्रितं सजलं पिबेत् ।
भोजनं ब्राह्मणेभ्यश्च प्रदद्यात् दक्षिणां ततः ” ॥

मैथुनं शृणुयादित्यादि । मैथुनं मैथुनशब्दं बुद्धिपूर्वं शृणुयादित्यर्थः । निष्कस्वरूपं परिभाषायां परिमाणप्रकरणेऽभिहितम् । विष्णुप्रकाशकमन्त्राः पुरुषसूक्तं तद्विष्णोरिति त्र्यृचश्च । तत्र पुरुषसूक्तं परिभाषायामेव दर्शितम् । तद्विष्णोरिति त्र्यृचस्य ऋषिर्मेधातिथिः । विष्णुर्देवता । गायत्री छन्दः । जपे विनियोगः । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद् विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम् । मं. १, सू. २२, मं. १, ऋ २०, २१ । अपामार्जनमपि परिभाषायामेव । स जलं पिबेदिति । सः रोगी । पुरुषसूक्तादिजपसङ्ख्या व्याध्यनुसारेणाष्टोत्तरशताद्ययुतान्ता कल्प्या । इति कर्णशूलहरम् । अथ नयनशूलहरं कर्मविपाकसङ्ग्रहे–

“ नग्नां परस्त्रियं दृष्ट्वा सूर्यं चास्तमयोदये ।
नेत्रशूली भवेत्सोपि नेक्षितुं क्षमते दृशा ।
वर्चो मे देहि मन्त्रेण होमः स्यादष्टवाऽयुतम् ।
वयः सुपर्णा इति च नेत्रे सिञ्चेच वारिणा ।
अक्षिभ्यां त इति जपेन्नेत्रशूलं प्रशाम्यति ” ।

परस्त्रियां नग्नां दृष्ट्वेति । कामतः । तथा सूर्यमभ्युद्यन्तमस्तमयन्तम् । वर्चो मे देहीत्यनेन वर्चोदा असि वर्चो मे देहीति दशाक्षरो मन्त्रो लक्ष्यते । होमकाले स्वाहान्तः कर्तव्यः । अस्य प्रजापतयः परमेष्ठी वा देवा वा ऋषयः । अग्निर्देवता । अतिशक्वरी छन्दः । अष्ट वायुतमितिअष्टोत्तरमयुतम् । वयः सुपर्णा इत्यस्य गौरीवीति ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः । विहितार्थे विनियोगः । वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षु र्मुमुग्ध्यस्मान् निधयेव बद्धान् (मं. १०,

सू. ७३, ऋ. ११ )। अक्षिभ्यां ते नासिकाभ्यामित्येतत्सूक्तं परिभाषायां रोगप्रतिमादानविधौ द्रष्टव्यम्। यथाशक्ति यथारोगश्च जपे सङ्ख्या कल्प्या। नेत्रसेचनं च यावद्रोगमुक्तिः। यथाशक्ति ब्राह्मणान् भोजयेत्। सूर्यप्रीत्यर्थं सूर्यपूजा कार्या। नेत्राधिदेवतात्वात्तस्य। इति नेत्रशूलहरम्। अथ शातातपोक्तं शूलहरम्।

"शूली परोपतापेन जायते वपुषा तनुः।
सोन्नदानं प्रकुर्वीत तथा रुद्रं जपे बुधः"॥

वपुषा तनुः कृशशरीर इत्यर्थः। व्याधितरतमभावेनान्नदानादरेभ्यासः। रुद्रलक्षणं रुद्रविधाने परिभाषायां द्रष्टव्यम्। इति शातातपोक्तं शूलहरम्। अथ शूलरोगप्रतिकृतिदानम्। प्रतिकृतिलक्षणं च कर्मविपाकसारे ( संग्रहे )।

"अनुक्तेषु तु रोगेषु रोषाग्निज्वलितेक्षणम्।
भ्रूभङ्गभीषणं शक्तिं शूलं पाशाङ्कुशौ दधत्॥
चक्रशङ्खगदावज्रशरक्षुरधनूंषि च।
नासाग्रन्यस्ततर्जन्या तर्जयन्पारिपार्श्वगान्॥
दंष्ट्रादष्टाधरपुटं दूरात् पाणिं सदक्षिणम्।
उद्यन्नभिमुखं धावन् प्रहर्तुं पार्श्वयोः कृशम्॥
विशीर्णकेशं रोगाणां प्रतिरूपं प्रकल्पयेत्।
शतं तस्यार्द्धमर्द्धं वा हेम्नो निष्काणि तेन तु॥
तदेव प्रतिमामानं कर्मशान्तिष्वपि स्वतः।
अतोस्याल्पेन यो दद्यान्महादानं नराधमः॥
प्रतिगृह्णाति वा तस्य दुःखशोकावहं भवेत्।
'ये ये रोगाः प्रबाधन्ते देहस्थाः सततं नु माम्॥
गृहाण प्रतिरूपं तु सह रोगैर्द्विजोत्तम।
मन्त्रेणानेन तद्दद्यात्पूर्वरीत्या कृतार्चनम्॥
बाढमित्येव गृह्णीयात्तद्रूपं व्याधिभिः सह।
आचार्यं यजमानस्तु अनुयायाच्छतं पदम्"॥

अनुक्तेषु तु रोगेतुष्विति । यत्र रोगप्रतिमाया विशेषलक्षणं नाभिहितं तत्र रोगप्रतिमामेवंविधलक्षणोपेतां कुर्यादित्यर्थः । शक्त्यादिकं दधत् स्थितमित्यर्थः । उद्यन्प्रस्थितः । निष्कस्वरूपं परिमाणप्रकरणे बोद्धव्यम् । कर्मशान्तिष्वपि स्वत इति । एवमन्यत्रापि कर्मशान्तिषु स्वतः सामान्यन्यायेन प्राप्तत्वात् प्रतिमामानं कर्तव्यमित्यर्थः । यद्यप्येवं तथाप्यत्र चान्यत्र च व्याधिगुरुलघुभावापेक्षया शक्त्याद्यनुसारेण च प्रतिमामानं कल्प्यम् । नह्यशक्यं विदधाति शास्त्रम् ततश्च स्वत इति पदम् । तथा "देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पये" दिति बौधायनवचने शौचपदस्योपलक्षणार्थत्वाच्चावगन्तव्यम् । ये ये-रोगा इति दानमन्त्रः। पूर्वरीत्या कृतार्चनमिति । 'आतङ्कोदेवता तत्रे' त्यारभ्य परिभाषायां व्याधिप्रतिमादानविधावुक्तप्रकारेणेत्यर्थः । शतं पदमिति शतं पदानीत्यर्थः । समुदायापेक्षयैकवचनम् । इति शूलरोगहरप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णो
पूर्णोयमासीन्नवमस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे नवमस्तरङ्गः ॥

## दशमस्तरङ्गः

अथ शीतज्वरहराणि । तत्र गार्ग्यः ।

> ‘ ये पुनः क्रूरकर्माणः पापाः पिशुनचेतसः ।
> ते भवेयुः सदा शीतज्वरवन्तस्तदेनसः ॥
> शान्तयेऽयुतसङ्ख्याकं प्रकुर्यात्प्रयतो जपम् ।
> जातवेदसमन्त्रेण ब्राह्मणान् भोजयेत्ततः ॥
> सुरामांसोपहाराद्यैर्बलिः सर्वत्र शस्यते ।
> सहस्रकलशस्नानं शतभोजनमेव च ॥

सदा शीतज्वरवन्त इत्यादि । प्रतिदिनं शीतज्वरयुक्ता ज्वरप्रादुर्भावकाले शीतपूर्वकज्वरेण युक्ता इत्यर्थः । जातवेदसमन्त्रेण जपं कुर्यादित्यन्वयः। तत्रायुतसङ्ख्याकमित्युपलक्षणम् । रोगगुरुलघुभावेन जपेपि गुरुलघुभावः कल्प्यः । एवं ब्राह्मणभोजनेपि। एकं ब्राह्मणभोजनं जपाङ्गम् । अपर माभिषे काङ्गम् । सुरादिभिर्बलिरधिकारिभेदेन । सहस्रकलशस्नानन्तु नमकानुवाकैरीश्वरस्य । पुरुषसुक्तेन विष्णोः । “ शीतज्वरे तथा कुर्यादभिषेकं हरेर्बुध ” इति कर्मविपाकसङ्ग्रहेऽभिधानात् । नमकानुवाकमृष्यादीनि तथा रुद्राभिषेकप्रकारश्च परिभाषायां द्रष्टव्यः। पुरुषसूक्तस्यार्षाद्यपि तत्रैव द्रष्टव्यम्। जातवेदस मन्त्रस्य कश्यप ऋषिः। जातवेदा अग्निर्देवता। त्रिष्टुप् छन्दः। विहितार्थे विनियोगः। “जातवेदसे सुनवाम सोम मरा तीयतो नि दहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः। ( मं. २, सू. ९९, ऋ. १ )। इति शितज्वरहरम् । अथोष्णज्वरहरं कर्मविपाकसङ्ग्रहे—

> “ मंगलेषु च कार्येषु सततं कोपवान् नरः ।
> उष्णज्वराभिभूतः स्यात् तत्पापस्यापनुत्तये ॥
> सहस्रकलशस्नानं रुद्रेणेशस्य कारयेत् ।
> ब्राह्मणान् भोजयेच्छक्त्या जपो वै जातवेदसः ” ॥

तथा माहेश्वरतन्त्रेपि

"उष्णज्वरे महेशस्य प्रकुर्यादभिषेचन" मिति। रुद्रेण शतरुद्रेण नमकानुवाकैरित्यर्थः। अस्यार्षादि परिभाषायां द्रष्टव्यम्। जातवेदसस्य तु शीतज्वरहरे। जातवेदसग्रहणं मृत्युञ्जयस्याप्युपलक्षणम्। तस्य त्वार्षादि तैत्तिरीयशाखानुसारेण परिभाषायां कूष्माण्डहोमप्रकरणेऽभ्यधायि। अत्राश्वलायनशाखानुसारेणाभिधीयते। त्र्यम्बकं यजामह इत्यस्य मन्त्रस्य वसिष्ठ ऋषिः। मृत्युञ्जयो देवता। अनुष्टुप् छन्दः। इत्युष्णज्वरहरम्। अथ शातातपोक्तं विविधज्वरहरम्।

"देवस्वहरणाच्चैव जायते विविधज्वरः।
ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव तु॥
ज्वरे रुद्रजपं कुर्यान्महारुद्रं महाज्वरे।
महारुद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत्"॥

ज्वरे रुद्रजपमित्यादि। रुद्रमहारुद्रादिलक्षणानि रुद्रानुवाकानामार्षादि च परिभाषायामुदीरितम्। महारुद्रं जपेद्रौद्र इति। रौद्रे रुद्रसंबंधिनि माहेश्वरज्वरे कठिनतमे असाध्ये ज्वरे च महारुद्रं जपेत्। वैष्णवे तद्द्वयं। रुद्रजपं महारुद्रजपं च। अथवा तच्छब्देन बुद्धिस्थानि वैष्णवानि पुरुषसूक्तसहस्रनामापामार्जनविष्णुहृदयस्तोत्राणि परामृश्यन्ते। अतस्तद्द्वयं विष्णुरुद्रसम्बद्धं च शतरुद्रपुरुषसूक्तादि जपेत्। शतरुद्रादीनि च परिभाषायां दर्शितानि। इति शातातपप्रोक्तविविधज्वरहरम्। अथ सर्वज्वरहरं कुम्भदानम् पद्मपुराणे

"अंगारदाही ज्वरवान्...न फादिह जायते।
तत्र कुर्या(त्प्र)तीकारं यथा शास्त्रेषु निर्णयः॥
सुवर्णे राजते ताम्रे यथा लाभे च मृण्मये।
नवं कुम्भं समानीय मृण्मयं चाव्रणं दृढम्॥
लोहितं काष्ण्र्यरहितं स्थापयेत्तण्डुलोपरि।
परिमाणं तण्डुलानां द्रोणपञ्चकमिष्यते॥
विशुद्धास्तण्डुला ग्राह्याः श्वेतवस्त्रेण वेष्टयेत्।

मधुनाप्यथवाऽऽज्येन खण्डेनाथ गुडेन वा ॥
तैलेनाथांभसा वा तं पूरयेच्छक्तितो नरः।
श्वेतपुष्पैरर्चयेत्तं गन्धपुष्पैस्तथापरैः ॥
होमश्चपूर्ववत्कार्यः समिदाज्यचरूत्कटः।
सुवर्णेन यथाशक्त्या ब्राह्मणाय निवेदयेत् ॥
तस्मै हुतवते दद्याच्छ्रुतशीलाय संस्कृतम्।
मन्त्रेणानेन विधिवत्पूजयित्वा ज्वरी नरः ॥
'महेश देवदेवेश वासुदेव परात्पर।
कुम्भेनानेन दत्तेन ज्वरः क्षिप्रं प्रशाम्यतु ॥
एकान्तरं सन्निपातं तृतीयकचतुर्थकौ।
पाक्षिकं मासिकं वापि सांवत्सरिकमेव च ॥
नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ।
" ततो विप्रांश्च सन्तर्प्य मृष्टान्नैः पायसैर्घृतैः।
माषांस्तिलान् जलं वापि विप्रेभ्यः शक्तितो ददेत् "।

द्रोणपञ्चकमित्यादि। द्रोणस्वरूपं परिमाणप्रकरणे द्रष्टव्यम्। श्वेतवस्त्रेण वेष्टयेदिति। कुम्भमित्यन्वयः। तं कुम्भं। गन्धपुष्पैस्तथापरैरिति। अपरैरश्वेतै रक्तपीतादिभिरित्यर्थः। होमश्च पूर्ववदिति। पूर्ववत् पूर्वोक्तप्रकारेण। सच प्रकारः शूलहरत्रिशूलदाने द्रष्टव्यः। तिलस्थाने चरुरित्येतावान् विशेषः। कुम्भदानमन्त्रस्य विष्णुरुद्रप्रकाशकत्वात् कुम्भपूजापि रौद्रेण वैष्णवेन वा मन्त्रेण कार्या। होमोप्यनयोरन्यतरेण। तत्र रौद्रः पञ्चाक्षरमन्त्रः शूलरोगहरत्रिशूलदाने द्रष्टव्यः। रुद्रगायत्री तु दद्रुहरोमामहेश्वरदाने वक्ष्यते। अन्ये च त्र्यम्बकमित्यादयः परिभाषादिषु दर्शिताः। वैष्णवा अपि तद्विष्णोःपरममित्यादयः तत्रैव दर्शिताः। नारायणाष्टाक्षरमन्त्रस्त्वान्त्रवृद्धिहरनारायणमूर्तिदाने निरूप्यते। गोपालमन्त्रस्तु नक्तान्ध्यहरे। सुवर्णेन यथा शक्त्या इति। सुवर्णेन युतं कुम्भं निवेदयेदित्यन्वयः। महेशदेवदेवेशेत्यारभ्य श्लोकत्रयं दानमन्त्रः। इति सर्वज्वरहरकुम्भदानम्। अथ ज्वरतर्पणम्। तत्रायं क्रमः। गोविन्दसंज्ञकं कञ्चन तापसं तथा अपुत्रं

तापसान्तरं च तिलोदकैरञ्जलित्रयदानेन पृथक् पृथक् तर्पयित्वा पश्चात् ज्वरानुसारेणाष्टोत्तरशताद्ययुतं तर्पणं ज्वरमुद्दिश्य कर्तव्यम्। ज्वर-तर्पणे रक्ताक्षता रक्तपुष्पाणि वा ग्राह्याणि। तत्र तिलतर्पणमन्त्रः।

"योऽसौ सरस्वतीतीरे कुत्सगोत्रसमुद्भवः।
त्रिरात्रज्वरदाहेन मृतो गोविन्दसंज्ञकः॥
ज्वरापनुत्तये तस्मै ददाम्येतत्तिलोदकम्"।

तथा–

नद्यां च नर्मदा तीरे अपुत्रः तापसो मृतः।
रात्रौ ज्वरविनाशाय तस्मै दद्यात्तिलोदकम्॥

अथ ज्वरतर्पणमन्त्रः–

"त्रिपात् भस्मप्रहरणस्त्रिशिरा रक्तलोचनः।
स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः॥

इति ज्वरतर्पणम्। अथ ज्वरप्रतिकृतिदानम्। तल्लक्षणं च कर्मविपाकसारे।

"त्रिपाद्भस्मप्रहरणो रक्ताक्षः त्रिशिरा ज्वरः"।

भस्मप्रहरणो भस्मायुधः। पूजादिविधानं त्वातङ्को देवता तत्रे-त्यारभ्य परिभाषायां व्याधिप्रतिमादानविधावुक्तम्। इति ज्वरप्रति-कृतिदानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण पूर्णो
पूर्णोऽयमासीद्दशमस्तरङ्गः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे दशमस्तरङ्गः समाप्तः॥

---

# एकादशस्तरङ्गः ।

अथ श्वासहराणि । तत्र निदानमुमामहेश्वरसंवादे—

" कृतघ्नो जायते मर्त्यः कफवान् श्वासकासवान् ।

उष्णज्वरी च नित्यं स्यात्पित्तरोगसमन्वितः " ॥

एतन्निष्कृतिः कर्मविपाकसमुच्चये—

" चान्द्रायणत्रयं कुर्यात्पञ्चाशद्विप्रभोजनम् ।
अग्निं दूताख्यसूक्तेन चरुणा सर्पिषा युतम् ॥
अष्टाधिकं च जुहुयादुक्तरोगोपशान्तये " ।

अन्यच्च वायुपुराणे—

" तद्विष्णो " रिति सूक्तेन जपं कुर्याद्विजोत्तमान् ।
पूजयेत्भोजयेद्दद्यात्तन्मना नान्यमानसः " ॥

चान्द्रायणस्वरूपं कृच्छ्रलक्षणेऽभ्यधायि । चरुणा सर्पिषा युतमिति । चरुणा युतं सर्पिषा युतमिति प्रत्येकं सम्बध्यते । अग्निं दूताख्यसूक्तं सकलं वा होममन्त्रः प्रत्यृचं वा । अयं च व्यवस्थितो विकल्पः । व्याधिशत्तयाद्याधिक्ये सूक्तं सकलम् । अल्पत्वे प्रत्यृचमिति । एवं सर्वत्र वेदितव्यम् । तद्विष्णोरिति सूक्तेनेति । तद्विष्णोः परमं पदमित्यनया ऋचा प्रातर्युजा विबोधयेत्येतत्सूक्तं लक्ष्यते । तदन्तर्गतत्वात्तस्याः । एकस्यास्तस्याः सूक्तव्यपदेशाभावाच्च । दद्यात्तन्मना इति । दानं दद्यादित्यर्थः । तच्च देयं मधुसर्पिर्हिरण्यवासांसि । तत्र मधुदानमन्त्रः " यस्मात्पितॄणां श्राद्धे त्वं प्रीतिदं ह्यमृतोद्भवं । मधो तव प्रसादेन पाहि मां दुःखसागरात् " । आज्यादि दानमन्त्रास्तु प्रायश्चित्तोपक्रमपद्धतौ दर्शिताः । अग्निं दूतं वृणी मह इत्यस्य सूक्तस्य द्वादशर्चस्य मेधातिथिः ऋषिः । अग्निर्देवता । गायत्री छन्दः । विहितार्थे विनियोगः ।

"अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुं ॥१॥
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥२॥

अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे आसि होता न ईड्यः (३)
उशतो विताँ बोधय यदग्ने यासि दूत्यं। देवैरा सत्सि बर्हिषि (४)
घृताहवन दीदिवः प्रति ष्म रिषतो दह। अग्ने त्वं रक्षस्विनः (५)
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्यः (६)
कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम् (७)
यस्त्वामग्ने हविष्पति दूतं देव समपर्यति। तस्य स्म प्राविता भव (८)
यो अग्निं देववीतये हविष्माँ आविवासति। तस्मै पावक मृळय (९)
स नः पावक दीदिवोऽग्ने देवाँ इहा वह। उप यज्ञं हविश्च नः (१०)
स नः स्तवान आ भर गायत्रेण नवीयसा। रयिं वीरवतीमिषम् (११)
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः। इमं स्तोमं जुषस्व नः (१२)
इत्यग्निं दूतमिति सूक्तम् (मं. १, सू. १२)॥

प्रातर्युजा विबोधयेत्येकविंशर्चस्य मेधातिथि ऋषिः। आदितश्चतस्रोऽश्विन्यः। चतस्रः सावित्र्यः द्वे आग्नेय्यावेका देवीनामेकेन्द्राणीवरुणान्यग्नायीनां द्वे द्यावापृथिव्यावेका पार्थिवी षड्वैष्णव्यः। गायत्री छन्दः। विहितार्थे विनियोगः।

"प्रातर्युजा वि बोधयाश्विनावेह गच्छताम्। अस्य सोमस्य पीतये। (१) या सुरथा रथीतमो भा देवा दिविस्पृशा। अश्विना ता हवामहे (२) या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम्। (३) नहि वामस्ति दूरके यत्रा रथेन गच्छथः। अश्विना सोमिनो गृहम् (४) हिरण्यपाणिमूतये सवितारमुपह्वये। स चेत्ता देवता पदम्। (५) अपां नपातमवसे सवितारमुप स्तुहि। तस्य व्रतान्युश्मसि (६) विभक्तारं हवामहे वसोश्चित्रस्य राधसः। सवितारं नृचक्षसम् (७) सखाय आ नि षीदत सविता स्तोम्यो नु नः। दाता राधांसि शुम्भति (८) अग्ने पत्नीरिहा वह देवानामुशतीरुप। त्वष्टारं सोमपीतये (९) आ ग्ना अग्न इहावसे होत्रीं यविष्ठ भारतीम्। वरूत्रीं धिषणां वह (१०) अभि नो देवीरवसा महः शर्मणा नृपत्नीः। अच्छिन्नपत्राः सचन्ताम् (११)

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये। अग्नायीं सोमपीतये (१२) मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः। (१३) तयोरिद् घृतवत् पयो विप्रा रिहन्ति धीतिभिः। गन्धर्वस्य ध्रुवे पदे। (१४) स्योना पृथिवि भवा नृक्षरा निवेशिनी। यच्छा नः शर्म सप्रथः। (१५) अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्तधामभिः (१६) इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूळ्हमस्य पांसुरे। (१७) त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्। (१८) विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा (१९) तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् (२०) तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत् परमं पदम् (२१) इति प्रातर्युजाविबोधयेत्येतत्सूक्तम् (मं. १, सू. २२)॥ इति कफज्वरसहितश्वासकासहरम्। अथ प्रकारान्तरेण श्वासकासहरं। कर्मविपाकसङ्ग्रहे

"कुरुक्षेत्रादिदेशेषु कालेषु ग्रहणादिषु।
महादानानि गृह्णीयात् निषिद्धान्यथवा स्वयम्॥
अपात्रभूतो दातृभ्यो निषिद्धेभ्यश्च यो नरः।
स पामाश्वासकासैश्च कुक्षिस्थकृमिभिस्तथा॥
कण्डूत्या चैव पीड्येत तद्रोगस्य प्रशान्तये।
महिषीं यमदैवत्यां दद्याद्वित्तानुसारतः॥
काम्यं यद्दीयते दानं तत्समग्रं सुखावहम्।
असमग्रं तु दोषाय भवतीह परत्र च॥
जपेच्च पौरुषं सूक्तं नाम्नां चैव सहस्रकम्।
उद्यन्नद्यतृचं चर्वाऽऽज्येन होमश्चाष्टोत्तरं शतम्॥
हिरण्यरक्तवासांसि पश्चाशद्विप्रभोजनम्।
सहस्रकलशस्नानं प्रकुर्याद्रोगशान्तये"॥

निषिद्धानि कालपुरुषादीनि । स्वयमपात्रभूतो वेदनित्य-कर्मानुष्ठानरहितः पतितो वा । अनिषिद्धानि भूदानादीनि वा गृह्णीयात् । निषिद्धेभ्यो दातृभ्यः पतितादिभ्यः । महिषी-दानप्रकारः परिभाषायां देयवस्तुस्वरूपनिरूपणे द्रष्टव्यः । महिषीदानमन्त्रस्तु–

" कालमृत्युस्वरूपां तां महिषीं रक्त(त्न)भूषणाम् ।
सालङ्कारां प्रदास्यामि मम शान्तिं प्रयच्छतु ॥

पुरुषसूक्तविष्णुसहस्रनामोद्यन्नद्यतृचामृष्यादि परिभाषायां द्रष्टव्यम् । होमस्तूद्यन्नद्यतृचैव । हिरण्यरक्तवासांसि दद्यादिति शेषः । सहस्रकलशस्नानं नमकानुवाकेन रुद्रस्य । हिरण्यदानादि-मन्त्रास्तथा नमकानुवाकाश्च परिभाषायामेव निरूपिताः । अत्रापि व्याधिगुरु लघुभावेन महिषीदानादीनि समस्तव्यस्तानि च योज्यानि । अथ प्रकारान्तरेण श्वासकासहरम् । अथ शातातपोक्तं श्वासकासहरम् ।

"पिशुनो नरकस्यान्ते जायते श्वासकासवान् ।
घृतं तेन प्रदातव्यं सहस्रपलसङ्ख्यया ॥
उद्यन्नद्यजपः कार्यो होमश्चर्वाज्ययोरपि" ।

पलस्वरूपमुद्यन्नद्यतृचश्च परिभाषायामभ्यधायि । जपहोमयोः सङ्ख्या रोगानुसारेण कल्प्या । इति शातातपोक्तं श्वासकास-हरम् । अथ श्वासकासहरं ध्वजपाशदानं पद्मपुराणे

"श्वासकासयुतो मर्त्यो बन्दीग्रहणतो भवेत् " ।

बौधायनः–

"ध्वजं पाशं पलैकेन कुर्यात्तु रजतेन वा ।
पलार्द्धेनाथ शुद्धस्फटिकोपममादरात् ॥
रत्नैर्मरकतैः सम्यग्बद्धमङ्गेषु सर्वतः ।
कुम्भे तु स्थापयेत्सम्यक् तिलानां द्रोणपञ्चकम् ॥
कुम्भस्योपरि संस्थाप्य ध्वजं पाशं सुशोभनम् ।
निष्कद्वययुतं तन्तु ब्राह्मणाय निवेदयेत् ॥
वस्त्रेणावेष्टयेत्कुम्भं गन्धपुष्पाक्षतार्चितम् ।

शुभचित्तसमेताय श्रोत्रियाय कुटुम्बिने ॥
वरुणस्य तथा वायोः प्रीत्यर्थं विनिवेदयेत् ।
'नमः पाशभृते तुभ्यं नमो ध्वजकराय ते ॥
जलाधिपतये तुभ्यं वायो सर्वजनप्रिय ॥
युवयोः प्रीतये दत्तौ ध्वजपाशौ सुरार्चितौ ।
श्वासकासौ हरेतं मे प्रीतौ सर्वजनाश्रयौ" ॥
एवं कृत्वा श्वासकासी नीरोगस्तत्क्षणात्भवेत्" ॥

रजतेनेत्यादि । रजतेन वा सुवर्णेनेत्यर्थः । यदा तु रजतेन तदा शुद्धस्फटिकोपमम् । अङ्गेष्ववयवेषु तत्तत्प्रदेशेषु मरकतरत्नैर्वैडं युक्तं ध्वजं पाशं च कुर्यात् । कुम्भं च स्थापयेदित्यादि । एवं कुम्भं स्थापयित्वा तत्र कुम्भे पञ्चद्रोणान् तिलान् संस्थाप्य तस्य कुम्भस्योपरि ध्वजं पाशं च विन्यसेत् । कीदृशमित्यत आह । निष्कद्वयमिति । निष्कद्वयं सौवर्णं राजतं वा निष्कद्वयं ध्वजपाशौ च कुम्भे स्थापयेदित्यर्थः । ब्राह्मणाय निवेदनं कुम्भादि पूजानन्तरमेव । पूजाप्रकारमाह । वस्त्रेण वेष्टयेदिति । अत्र कुण्डले वरुणवायू तत्प्रकाशकमन्त्राभ्यामावाह्य षोडशोपचारैः पूजयित्वा ध्वजपाशौ च नाममन्त्रैः संपूज्य नमः पाशभृते तुभ्यमित्यादि मन्त्रेण ध्वजपाशावुक्तलक्षणाय ब्राह्मणाय दद्यात् । द्रोणनिष्कयोर्लक्षणं परिभाषाप्रकरणे द्रष्टव्यम् । वरुणवायुमन्त्रौ तु नवग्रहयज्ञप्रकरणे दर्शितौ । इति श्वासकासहरं ध्वजपाशदानम् । अथ श्वासकासमूर्तिदानम् । तल्लक्षणं कर्मविपाकसङ्ग्रहे—

"श्वासस्त्रिबाहुः पाशाक्षकमण्डलुयुतोज्वलन् ।
कासः कूर्माङ्गसन्धानो दीर्घो दण्डधरः कृशः ॥
करेण नादयन् घण्टां विवृताक्षोतिभीषणः ।

श्वासस्त्रिबाहुरिति । अत्र विशेषानुपादानात् दक्षिणे द्वयं वामेत्वेको बाहुः । एवमन्यत्रापि विषमबाहुस्थले विज्ञेयम् । कूर्माङ्गसन्धानः कूर्म इव संकुचिताङ्ग इत्यर्थः । यदा तु श्वासकासयोरेकैवमूर्तिस्तदा त्रिबाहुः संकुचितश्चेत्येवं कर्तव्या । एतत्प्रतिमापूजा

विधानन्तु 'आतङ्को देवता तत्रे' त्यारभ्य परिभाषायां व्याधिप्रति-
मादानविधावुक्तम्। इति श्वासकासमूर्तिदानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरार्चितेऽस्मि-
न्नेकादशोयं प्रथितस्तरङ्गः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे एकादशस्तरङ्गः।

# द्वादशस्तरङ्गः

अथ शोफहराणि ॥ तत्र कर्मविपाकसमुच्चये

" शोफी कृच्छ्रत्रयं कुर्याद्गायत्र्या अयुतं जपम् ।
तिलहोमसहस्रं तु जपेन्मृत्युञ्जयं तथा " ॥

तिलहोमस्तु व्याहृतिभिः । गायत्रीव्याहृतित्र्यम्बकमन्त्राणामृष्यादि तथा कृच्छ्रलक्षणं परिभाषायां द्रष्टव्यम् । मृत्युञ्जयजपसङ्ख्यापि सहस्रम् । इति कर्मविपाकसमुच्चयोक्तं शोफहरम् ।

अथ कर्मविपाकसंग्रहोक्तं शोफहरं

" अद्रौ मार्गे नदीतीरे छायायां पुलिने नरः ।
मूत्रं पुरीषं वल्मीके यः प्रमुञ्चेज्जलेऽपि वा ॥
श्वयथुव्याधिमाप्नोति एवमाह सदाशिवः ।

छायायामिति । वृक्षदेवालयादिछायायाम् । मूत्रपुरीषग्रहणं ष्ठीवनादेरुपलक्षणम् । अद्र्यादिग्रहणं पुण्यस्थानोपलक्षणार्थम् ।

इन्द्रं व इति मन्त्रं हि जपेदष्टोत्तरायुतम् ।
आपोहिष्ठेति होमःस्याच्चरुणा सर्पिषा युतः ॥

इन्द्रं वो विश्वतस्परीत्येषा परिभाषायां नवग्रहप्रकरणे लोकपालमन्त्रेषु द्रष्टव्यम्। आपोहिष्ठेति त्रिचस्तु परिभाषायामेव रोगप्रतिमादानविधौ द्रष्टव्यः। चरुणा सर्पिषा युत इति। चरुणा युतः सर्पिषा युत इति प्रत्येकं सम्बध्यते। व्याधितरतमभावेन तत्र होमसङ्ख्यायां न्यूनाधिकभावः परिकल्प्यः। इति कर्मविपाकोक्तं शोफहरम् । अथ शोफहरं वस्त्रदानम् ।

तत्र वृद्धबौधायनः–

" विघ्नकर्ता च भोक्तॄणां शोफी भवति मानवः ।
तस्य कर्मविपाकोक्तं व्याधिनाशनमुत्तमम् ॥
दानं वक्ष्याम्यशेषेण सर्वशोफविनाशनम् ।
क्षौमं वस्त्रं समानीय बहुमूल्यं च यद्भवेत् ॥

मुक्ताफलानि बध्नीयाद्वस्त्रप्रान्ते समन्ततः ।
कुङ्कुमेनाङ्कितं सम्यक् कर्पूरागरुधूपितम् ॥
तण्डुलोपरि संस्थाप्य तण्डुलाश्च स्वशक्तितः ।
उपचारैः षोडशभिराचार्यः पूजयेत्तदा ॥
होमं वापि प्रकुर्वीत समिदाज्यतिलैः क्रमात् ।
उद्बुध्यस्वेत्विदं विष्णुरथ व्याहृतिभिस्तथा ॥
मन्त्रैः क्रमेण जुहुयात् स्विष्टकृच्च ततः परम् ।
हुत्वा हुत्वाऽऽज्यसम्पातान् पात्रे सर्वान् निवेश्य तु ॥
सङ्ख्या चाष्टोत्तरशतमष्टाविंशतिरेव वा ।
सम्पातेनाङ्गमुन्मृज्य सर्वमेव हि रोगिणः ॥
अक्षिभ्यामितिसूक्तेन यथालिङ्गं तथैव च ।
वाससा मार्जनं कुर्यान्मार्जयेद्दर्भमुष्टिना ॥
आचार्याय च तद्वस्त्रं दद्यात्तच्च सदक्षिणम् ।
मन्त्रेणानेन विधिवद्दक्षिणाभिमुखः शुचिः ॥
'ऋषीणां प्रवरोऽगस्त्यो लोपामुद्रापतिः प्रभुः ॥
क्षौमवस्त्रप्रदानेन तुष्टो व्याधिं व्यपोहतु'॥
ब्राह्मणेभ्यस्तथाऽन्येभ्यो दद्याच्छक्त्या च दक्षिणाम् ।
ततः स्नात्वा शुचिर्भूतो वस्त्रमाल्योपशोभितः ॥

ब्राह्मणैर्बन्धुभिः सार्द्धं भुञ्जीत सुसमाहितः ।

तण्डुलाश्च स्वशक्तितइति। भवन्तीति शेषः। आचार्यः पूजयेदिति। क्षौमं वस्त्रमगस्त्यदैवत्यमाचार्यः पूजयेदित्यर्थः। पूजामन्त्रस्तु "अगस्त्यः खनमान इत्यस्यागस्त्यान्तेवासी ब्रह्मचारीऋषिः। इन्द्रो देवता। अगस्त्यप्रीतये वासो दीयत इति वस्त्रपूजायामगस्त्या देवता। त्रिष्टुप् छन्दः। वासःपूजायां विनियोगः।

"अगस्त्यः खनमानः खनित्रैः
पूजामपत्यं बलमिच्छमानः ।
उभौ वर्णावृषिरुग्रः पुपोष ।
सत्या देवेष्वाशिषो जगाम ॥" (मं. १, सू. १७९. ऋ. ६.)

उद्‌बुध्यस्वेत्यादि। "उद्‌बुध्यस्वाग्ने (१) इदं विष्णुः (२) व्याहृतीनाञ्च परिभाषायां नवग्रहप्रकरणे कूष्माण्डहोमप्रकरणे चार्षादि दर्शितम्। तथा स्विष्टकृद्धोमस्य च। हुत्वा हुत्वाऽऽज्यसम्पातानिति। यदाऽऽज्यहोमस्तदा प्रत्याहुतिहोमानन्तरं सम्पातानाज्यविन्दून् पात्रान्तरे स्थापयेत्। तेन सम्पातेनाज्यविन्दुसमुदायेन रोगिणः सर्वगात्रं परिमार्जयेत्। केन मन्त्रेण। अक्षिभ्यामितिसूक्तेन। एतत्सूक्तं रोगप्रतिमादानविधौ द्रष्टव्यम्। गात्रपरिमार्जनसाधनद्रव्यमाह। वाससा मार्जनं कुर्यादित्यादि। पूजितवाससा वस्त्रान्तरेण वा। प्रथमं वाससा परिमार्जनं पश्चाद्दर्भमुष्टिना। तद्वस्त्रं पूजितवस्त्रमाचार्याय दद्यात्। आचार्य इति प्रतिगृहीत्रुपलक्षणम्। तच्च दानं सदक्षिणं भवति। इति शोफहरवस्त्रदानम्। अथ शोफहरप्रतिमादानम्। तल्लक्षणं कर्मविपाकसारे

"शोफः पञ्चकरस्तीक्ष्णो दशाक्षः शरचापधृक्।
दधानः क्षुरिकां घण्टां कुलिशं च कृशस्तथा"॥

पञ्चकर इति। दक्षिणे त्रयः कराःवामे द्वाविति पञ्च। पूजाविधानन्तु 'आतङ्को देवता तत्रे' त्यारभ्य परिभाषायामुक्तं व्याधि प्रतिमादानविधौ। इति शोफहरशोफप्रतिमादानम्।

"महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नोपचिते तरङ्गः
पूर्णोऽभवद्द्वादश एष रम्यः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे द्वादशस्तरङ्गः॥

# त्रयोदशस्तरङ्गः

अथ पाण्डुरोगहराणि । तत्र कर्मविपाकसमुच्चये

"देवद्विजद्रव्यहारी पाण्डुरोगी भवेन्नरः ।
कृच्छ्रातिकृच्छ्रे कुर्यात्स चान्द्रायणमतन्द्रितः ॥
कुर्यात्कूष्माण्डहोमन्तु स्वर्णचन्द्रेऽन्नवाससी ।
ब्राह्मणेभ्यो यथाशक्ति पाण्डुरोगस्य शान्तये" ॥

देवद्विजेत्यादि । देवाश्च द्विजाश्च ॥ चान्द्रं रजतम् । कृच्छ्रादि-कूष्माण्डहोमपर्यन्तानां स्वरूपाणि तथा सुवर्णादिदानमन्त्राश्च परिभाषायां निरूपिताः । इति कर्मविपाकसमुच्चयोक्तं पाण्डुरोगहर-प्रायश्चित्तम् । अथ शिरोवेदनासहितपाण्डुरोगहरं कर्मविपाक-स हे-

"अग्निष्टोमादिकर्माणि प्रक्रम्य न समापयेत् ।
स पाण्डुरोगी भवति शिरोवेदनवांस्तथा ॥
कृच्छ्रातिकृच्छ्रे कुर्याच्च चान्द्रायणमतन्द्रितः
कुर्यात्कूष्माण्डहोमश्च स्वर्णचन्द्रान्नवाससी ।
ब्राह्मणेभ्यो यथाशक्ति पाण्डुरोगस्य शान्तये ।
शतं च भोजयेद्विप्रान् मिष्टान्नेन यथेप्सितम् ॥

कृच्छ्रादिलक्षणानि परिभाषायामुदीरितानि । इति शिरोवेदना-सहितपाण्डुरोगहरम् । अथ पाण्डुरोगहरपृथ्वीदानम् । तत्र शौनकः-

"अन्त्यजागमने मर्त्यः पाण्डुरोगी प्रजायते ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ॥
पलत्रयेण कुर्वीत रजतेन वसुन्धराम् ।
तदर्द्धेनाथवा कुर्याद्वित्तशाठ्यं न कारयेत् ॥
सपर्वतवनां कृत्स्नां समुद्रपरिवेष्टिताम् ।
नवरत्नानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् ॥
कांस्यपात्रे विनिक्षिप्य पलाष्टकविनिर्मिते ।
देवीमावाहयेत्तत्र सर्वाधारां हरिप्रियाम् ॥

'एह्येहि देवि धात्रि त्वं रूपेस्मिन् सम्यगाविश ।
सहिता पर्वतैर्द्वीपैः समुद्रैः सुमनोहरैः ' ॥
एवमावाह्य तां देवीं गन्धमाल्यैः समर्चयेत् ।
उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित् ॥
होमं वापि प्रकुर्वीत समिदाज्यतिलैरपि ।
भूमिर्भूत्वेति मन्त्रेण समिद्धोमः प्रकीर्तितः ॥
तथा भूमिर्भूमिमगान्माता मातरमित्यपि ।
मन्त्रः प्रकीर्तितश्चाग्नौ जुहुयात्सर्पिषा तिलैः ॥
अग्नेरुत्तरतश्चापि कुम्भं वस्त्रेण वेष्टितम् ।
स्थापयेदव्रणं शुभ्रमश्वत्थानादिमृत्तिकाम् ॥
प्रक्षिपेच्च तथा शुद्धवारिणा परिपूरितम् ।
पवमानादिभिर्मन्त्रैरभिषेकं च कारयेत् ॥
शंनो वातानुवाकेन शान्तिश्चापि प्रकल्पयेत् ।
अभिषिक्तस्य चाङ्गानि वस्त्रेण परिमार्जयेत् ॥
अक्षिभ्यामनुवाकेन यथालिङ्गं सदर्भकम् ।
आचार्याय तु तां पृथ्वीं दद्याद्रोगी समाहितः ॥
मन्त्रेणानेन विधिवत्प्राङ्मुखाय ह्युदङ्मुखः ।
'धात्री धरित्री भूतानां वराहेणोद्धृता पुरा ।
रत्नगर्भा समुद्रैकवसना सर्वशोभना ॥
दानेनानेन सुप्रीता पाण्डुरोगं व्यपोहतु ' " ।

पलत्रयेण कुर्वीतेत्यादि । पलरूपं परिमाणप्रकरणे द्रष्टव्यम् । गन्धमाल्यैः समर्चयेदिति । अर्चनन्तु भूमिर्भूम्नेत्यादिमन्त्रेण । अस्य मन्त्रस्याग्नि ऋषिः । भूमिर्देवता । उपरिष्टात् बृहती (छन्दः) । पूजायां होमे च विनियोगः ।

" भूमिर्भूम्नाद्यौर्धारिणान्तरिक्षं महित्वा ।
उपस्थे देव्यदिते ग्निमन्नाद्या द्या दधे " ॥

समिद्धोम इत्याज्यतिलहोमयोरप्युपलक्षणम् । अथवा तिलहोमो व्याहृतिभिः । होमसङ्ख्या चाष्टोत्तरशतादिसहस्रान्ता ।

भूमिपूजादौ मन्त्रविकल्पमाह–भूमिर्भूमिरित्यादिना। अस्याप्य-ग्निरेवर्षिः। भूर्देवता। अनुष्टुप् छन्दः। शुद्धवारिणा पूरितं कुम्भं स्थापयेदित्यन्वयः। कुम्भस्थापनप्रकारो मृत्तिकाश्च नवग्रहयज्ञ-प्रकरणे द्रष्टव्याः। पवमानादिभिर्मन्त्रैरिति। पवमानमन्त्राः 'स्वादि-ष्ठया मधिष्ठये' त्येवमादयः 'पवमानःसुवर्जन' इत्यनुवाकश्च। आदिशब्देन सूक्तान्तराण्यनुवाकान्तराणि च नानाशाखापरिपाठि-तान्यभिषेके विनियुक्तानि लक्ष्यन्ते। तानि च यथाशाखं ग्राह्याणि। स्वादिष्ठयेति सूक्तं मन्त्राश्चाऽग्रे प्रदर्श्यन्ते। पवमानः सुवर्जन इत्यनु-वाको गणहोमप्रकरणे दर्शितः। अभिषिक्तस्यचाङ्गानीति। अक्षीं-भ्यामित्यनुवाकेन मन्त्रेण सङ्भेकं यथा भवति तथा वस्त्रेण परि-मार्जनसाधनेनाभिषिक्तस्याङ्गानि परिमार्जयेदित्यर्थः। अक्षीभ्या-मितिसूक्तं रोगप्रतिमादानविधौ द्रष्टव्यम्। एवं पृथ्वीदाने कृते फलमाह–

अनेन विधिना दत्तं पृथ्वीदानं प्रयत्नतः।
यज्जातं वैकृतं मर्त्ये अन्त्यजागमनेन तु॥
तत्सर्वं नाशमायाति पाण्डुरोगादिकं महत्।
शान्त्यर्थे ब्राह्मणैः सार्द्धं कुर्यात्पुण्याहवादनम्॥

पृथ्वीदानानन्तरकर्तव्यम्। अथ स्वादिष्ठया मदिष्ठयेत्येतत्सू-क्तम्॥ अस्य दशर्चस्य सूक्तस्य विश्वामित्रो मधुच्छन्दा ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः। अभिषेके विनियोगः।

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।
इन्द्राय पातवे सुतः (१)
रक्षोहा विश्वचर्षणि रभि योनिमयोहतम्।
द्रुणा सधस्थमासदत् (२)
वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः।
पर्षि राधो मघोनाम् (३)
अभ्यर्ष महानां देवानां वीतिमन्धसा।
आभिवाज मुत श्रवः (४)

त्वामच्छा चरामसि तदिदर्थं दिवे दिवे ।
इन्दो त्वे न आशसः (५)
पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता ।
वारेण शश्वता तना (६)
तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश ।
स्वसारः पार्ये दिवि (७)
तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् ।
त्रिधातु वारणं मधु (८)
अभीममघ्न्या उत श्रीणन्ति धेनवः शिशुम् ।
सोममिन्द्राय पातवे (९)
अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते ।
शूरो मघा च मंहते (१०)
( मं. ९, सू. १ )

इति स्वादिष्ठयेति सूक्तम् । इति पाण्डुरोगहरं पृथ्वीदानम् । अथ शातातपोक्तं पाण्डुरोगहरम्—

" उरगे तु हते चैव पाण्डुरोगोऽभिजायते—
कस्तूरिकापलं दद्याद्ब्राह्मणाय स शुद्धये " ॥

एते च गुरुलघुपक्षाः व्याधितरतमभावानुसारेण योज्याः । इति शातातपोक्तं पाण्डुरोगहरम् । अथ पाण्डुरोगहरप्रतिमादानम् । तत्र प्रतिमालक्षणमनुक्तेषु च रोगेष्वित्यादिना शूलरोगप्रतिकरणे विहितम् । अवशिष्टविधिस्त्वातङ्को देवता तत्रेत्यारभ्य परिभाषायां रोगप्रतिमादानविधावुक्तः । इति पाण्डुरोगहरप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्ण-
स्त्रयोदशोयं प्रथितस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे त्रयोदशस्तरङ्गः ॥

# चतुर्दशस्तरङ्गः

अथान्त्रपीडाहराणि कर्मविपाकसमुच्चये

" छिन्नान्यन्त्राणि जायन्ते वैश्यहन्तुस्ततः परम् ।
ज्वरौ शीतोष्णकौ दाह अपाने तन्निवृत्तये ॥
कृच्छ्रातिकृच्छ्रं कुर्याच्च शतब्राह्मणभोजनम् ।
उद्यन्तृचजपश्चस्यादयुतत्रयसङ्ख्यया ॥
आते सूक्तेन चर्वाज्यं जुहुयाच्छतमष्ट च ।
अथवा महिषीं दद्यात्प्रतिरूपेण काञ्चनीम् " ॥

ज्वरौ शीतोष्णकावित्यादि । शीतज्वर उष्णज्वरश्च । कृच्छ्रातिकृच्छ्रस्वरूपमुद्यन्नद्यतृचश्च परिभाषायां द्रष्टव्यः । आते सूक्तेनेति । आते पितर्मरुता मिति सूक्तेन । एतच्च सूक्तं क्षयरोगप्रकरणे द्रष्टव्यम् । चरुंश्चाज्यं च प्रत्येकमष्टोत्तरशतं जुहुयात् । अत्र च सकलं सूक्तम् मन्त्रो न प्रत्यृचम् । महिषीदानमन्त्रस्तु श्वासकासप्रकरणे द्रष्टव्यः । महिषीप्रतिमायां सुवर्णपरिमाणं वित्ताद्यनुसारेण कल्प्यम् । इत्यान्त्रपीडाहरप्रायश्चित्तं महिषीदानं च ।

अथान्त्रवृद्धिहरनारायणमूर्तिदानम् । तच्च ब्रह्मप्रोक्ते—

" यज्ञविघ्नकरो मर्त्यो जायते चान्त्रवृद्धिमान् ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ।
कुर्यात्स्वर्णमयीं मूर्तिं शुभां नारायणस्य तु ।
व्यावहारिकनिष्काभ्यामेकेनापि तदर्द्धतः " ॥

नारायणमूर्तिलक्षणं पञ्चरात्रागमे

" नारायणे चतुर्बाहौ शङ्खं चक्रं तथोत्तरे ।
दक्षिणे तु गदां पद्मं नीलजीमूतसन्निभे ॥
वामे श्रीर्वल्लकीहस्ता पुष्टिः पद्मकराऽपर इति " ॥

नारायणे शङ्खादीनि विन्यसेत् । कथमित्यत आह शङ्खमित्यादि । उत्तरे वामभागे शङ्खमधस्ताचक्रमुपरि । दक्षिणे दक्षिणभागे उपरि गदां पद्ममधस्तात् । एवं चतुर्षु बाहुषु विन्यसेत् ।

वामे नारायणस्य वामपार्श्वे वल्लकीहस्ता हस्तद्वयास्थितवल्लकीयुक्ता लक्ष्मीः स्थापनीया। अपरे दक्षिणपार्श्वे पद्मकरैकैकपद्मशोभितहस्तद्वयोपेता पुष्टिः स्थापनीया। लक्ष्मीपुष्टी उभे अपि हेमयोः। एवं-विधां नारायणमूर्तिं वक्ष्यमाणप्रकारेण पूजयेदित्याह–

" प्रक्षाल्य पञ्चगव्येन स्थापयेत्कुङ्कुमोपरि।
श्वेतवस्त्रेण संवेष्ट्य गन्धमाल्यैः समर्चयेत् ॥
उपचारैः षोडशभिराचार्यो वैष्णवः शुचिः।
सर्वशास्त्रार्थतत्त्वज्ञो ब्रह्मविद्यासु निष्ठितः ॥
होमं च कारयेत्तत्र ह्याग्नेय्यां दिशि शास्त्रतः।
समिदाज्यतिलैश्चैव जुहुयान्मूलमन्त्रतः ॥
तिलान् व्याहृतिभिर्हुत्वा सर्वरोगात्प्रमुच्यते।
रोगी तथार्चयेद्देवं नारायणमनामयम् ॥
मूलमन्त्रेण विधिवन्नैवेद्यं च हरिष्यते।
नमोन्तनाम सोंकारं मूलमन्त्रः प्रकीर्तितः ॥
तत्र तां प्रतिमां दद्यात्प्राङ्मुखाय ह्युदङ्मुखः।
मन्त्रेणानेन विधिवद्भक्त्या परमया युतः ॥
'नारायण जगन्नाथ शङ्खचक्रगदाधर।
पूर्वजन्मनि यज्ञादेः विघ्नाद्यद्वैकृतं मम ॥
अन्त्रवृद्धिमहारोगं दानेनानेन तोषितः।
चक्रहस्त गदापाणे शमयाशु जगत्पते' ॥
एवं दत्वा तु तं देवं क्षमाप्य ब्राह्मणं ततः।
विप्राणां भोजनं दद्यात् स्नात्वा भुञ्जीत बन्धुभिः ॥
एवं कृत्वा समाप्नोति नीरोगत्वं नरो भुवि।
आरोग्ययुक्तो नित्यन्तु सुचिरं सुखमेधते " ॥

आग्नेय्यां दिशीत्यादि। नारायणमूर्तिपूजाप्रदेशादाग्नेय्याम्। शास्त्रतइति। स्वगृह्योक्तप्रकारेणाग्निप्रतिष्ठादिविधानेनेत्यर्थः। मूलमन्त्रतः समिदाज्ययोर्होमः। मूलमन्त्रेण नारायणमर्चयेदित्य-

न्वयः। विधिवन्नैवेद्यमिति। विधिवत्सन्निष्पाद्य तस्माच्चरोरुद्धृत्य नैवेद्यं नारायणाय दत्वाऽवशिष्टेन होमं कुर्यादित्यर्थः। विधिवत्सम्पादनं नाम गृह्योक्तप्रकारेण निर्वापादिविधिपूर्वकं चरुश्रवणम्। मूलमन्त्रमेवाह—नमोंतनामेति। नमः शब्दादन्ते स्थितिः यस्य नाम्नस्तत्तादृक्। मन्त्रस्तु 'ओं नमो नारायणाय'। अस्य मन्त्रस्य नारायण ऋषिः। दैवी गायत्री छन्दः। नारायणपरमात्मा देवता। विहितार्थे विनियोगः। होमसङ्ख्या चाष्टोत्तरशतादिर्देशकालवयःशक्त्याद्यपेक्षया कल्प्या। व्याहृतीनामृश्यादि कूष्माण्डहोमप्रकरणे तथा नवग्रहावाहनप्रकरणे च दर्शितम्। इत्यन्त्रवृद्धिहरनारायणमूर्तिदानम्। अथान्त्रवृद्धिमूर्तिदानम्। तल्लक्षणं कर्मविपाकसारे—

"अन्त्रवृद्धिः कृशो नित्यं मेदिनीमवलोकयन्।
प्रालम्बधारी सततं कपालेन पिबन्मधु" ॥

प्रालम्बधारीती। प्रालम्बशब्देनान्त्राण्युच्यन्ते। अथवा शिक्यादि। अन्यस्त्विति कर्तव्यताकलापो रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना दर्शितः। इत्यन्त्रवृद्धिमूर्तिदानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण पूर्ण-
श्चतुर्दशोयं प्रथितस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे चतुर्दशस्तरङ्गः ॥

# पञ्चदशस्तरङ्गः

अथ व्रणहराणि । अथ शातातपप्रोक्तं मस्तकव्रणहरम् ।

जात्युत्तमस्त्रीगमनाज्जायते मस्तकव्रणी ।
तस्यातङ्कविशुद्ध्यर्थं प्राजापत्यव्रतं चरेत् ॥

प्राजापत्यलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि । इति शातातपप्रोक्तं मस्तकव्रणहरम् ।

अथ नासिकाव्रणहरम् । शातातपः–

"श्रोत्रियस्त्रीप्रसङ्गेन जायते नासिकाव्रणी ।
आचरेत्स विशुद्ध्यर्थं प्राजापत्यचतुष्टयम् ॥

इति नासिकाव्रणहरम् । अथ प्रकारान्तरेण नासिकाव्रण-हरं कर्मविपाकसङ्ग्रहे—

"कर्मकाले कुक्कुटं च खरादीन्वा य ईक्षते ।
स नासिकाव्रणी च स्यादार्द्रनेत्रश्च जायते ॥
उद्यन्नद्यतृचेनाज्ये जुहुयादयुतं चरुम् ।
श्रीसूक्तं च जपेद्रक्षां दूर्वाक्षतविमिश्रिताम् ॥
शिखायां च निबध्नीयाच्छिवसङ्कल्पमन्त्रितम्" ॥

कर्मकाल इत्यादि । कर्मकाले कुक्कटखरचण्डालादीन् बुद्धिपूर्वकं दृष्ट्वा पश्चात् तत्प्रायश्चित्तत्वेनाचमनप्राणायामादीन् तत्कर्मस्वभिहितान्यो न करोति स एवं व्याधिमान् भवतीत्यर्थः । उद्यन्नद्येत्यस्यार्षादि परिभाषायां द्रष्टव्यम् । व्याधितरतमभावे-नायुतं तदर्द्धमधिकं वा हवनं कल्प्यम् । श्रीसूक्तजपेपि व्याध्याद्यपेक्षया सहस्राद्ययुतान्ता सङ्ख्या कल्प्या । शिव सङ्कल्पमन्त्रितां रक्षां निबध्नीयादित्यन्वयः । शिवसङ्कल्पसूक्त तु परिभाषायां रुद्रविधाने दर्शितम् । हिरण्यवर्णां हरिणीमित्येतस्य पञ्चदशर्चस्य श्रीसूक्तस्यानन्द चिक्लीत कर्दम इन्दिरासुता ऋषयः । श्रीर्देवता । आद्यास्तिस्रोऽनुष्टुभः एका प्रस्तारपङ्क्तिः द्वे तृष्टुभौ । सप्तमाद्या अनुष्टुभः अन्त्या प्रस्तारपङ्क्तिः । जपे विनियोगः ।

" हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥

तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् (२) अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम् (३) कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् (४) चन्द्रप्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणं प्र पद्ये लक्ष्मीर्मे नश्यतां त्वां वृणे (५) आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोथ विल्वः । तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः (६) उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोस्मि राष्ट्रेस्मिन् कीर्तिमृद्धिं ददातु मे (७) क्षुत्पिपासामलां ज्येष्ठा मलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिञ्च सर्वां निर्णुद मे गृहात् (८) गन्धद्वारां दुराधर्षां नित्यपुष्पां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोवह्वये श्रियम् (९) मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां श्रियः (१०) कर्दमेन प्रजा भूता मयि संभ कर्दमव। श्रियं वासय मे कुले मातरं पद्ममालिनीम् (११)आपःसृजन्तु स्निग्धानि चिक्लीत वसमे गृहे॥ नि च देवीं मातरं श्रियं वासय मे कुले (१२) आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह (१३) आर्द्रां पुष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह (१४) तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योश्वन्विन्देयं पुरुषानहम्" (१५) ॥ अथास्यैव च सूक्तस्य फलश्रुतिः

" यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥
पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि
विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि सं नि ध त्स्व॥

पद्मानने पद्मऊरु पद्माक्षि पद्मसंभवे ।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ॥
अश्वदायि गोदायि धनदायि महाधने ।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥
पुत्रपौत्रधनं धान्यं हस्त्यश्वाश्वतरी रथम् ।
प्रजानां वृद्धिदे माता आयुष्मन्तं करोतु मे ॥
धनमग्नि र्धनं वायु र्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पति र्वरुणो धनमुत्सृजेत् ॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥
श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥

इति श्री सूक्तम् ॥

इति प्रकारान्तरेण नासिकाव्रणहरम् । अथ हृदयव्रणहरं शातातपप्रोक्ते

" स्वजातिजायागमने जायते हृदयव्रणी ।
तत्पापस्य विशुध्यर्थं प्राजापत्यद्वयं चरेत् ॥

स्वजातिजायागमन इति । स्वजातिजायागमन इत्येकः समासः । अयमाभिप्रायः । ब्राह्मणादयः पुरुषा यथायोग्यं वर्णचतुष्टयेपि ब्राह्मणीं क्षत्रियां वैश्यां शूद्रां चेति परिणीय स्वस्वजातीयां ब्राह्मण्यादिस्त्रियं पातित्यादिदोषाभावेप्युपभोगात्परित्यजन्ति ते स्वजातीयागमना व्यपदिश्यन्त इति । तदा तेषु विहितानाचरणात् स्वजायागमनरूपेण विधारकप्रयत्नेन दुरितं पूर्वमुत्पद्यते तेन च कालान्तरे हृदयव्रणवन्तो भवन्तीति । अथवा केवलस्वजातीयामेव स्त्रियमुद्वाह्य व्यभिचारादिरतास्तां नोपभुञ्जते तेनापि तादृशा भवन्ति । स्वजातिजायागमन इत्यस्यान्योऽर्थः । ब्राह्मणस्य ब्राह्मणः स्वजातिः । एवं क्षत्रियादेरपि क्षत्रियादिः । तस्य जाया । सवर्णपुरुषान्तरभार्येत्यर्थः । तस्या उपभोगः स्वजातिजायागमनम् ।

प्राजापत्यलक्षणन्तु कृच्छ्रप्रकरणे द्रष्टव्यम् । इति हृदयव्रणहरम् । अथोरोव्रणहरं कर्मविपाकसमुच्चये—

" जलाग्न्युद्बन्धनाभिप्रायनिमित्तेन म्रियेत यः
भवेदुरसि दुष्टं हि व्रणं तस्यापि निष्कृतिः ॥
स दद्याद्गोद्वयं सम्यक् पञ्चाशद्द्विप्रभोजनम् ।
दक्षिणां च यथाशक्ति मुक्तो भवति रोगतः " ॥

अनधिकारिणाऽविहितमार्गेण जलादिमरण इत्यर्थः । गोदानमन्त्रस्तु प्रायश्चित्तोपक्रमपद्धतावुक्तः । इत्युरोरोगव्रणहरम् । अथ दक्षिणाङ्गव्रणहरं शातातपोक्तं

" पितृष्वस्राभिगमने दक्षिणाङ्गव्रणी भवेत् ।
तेनापि निष्कृतिः कार्या अजादानेन यत्नतः " ॥

अजादानमन्त्रस्तु नवग्रहयज्ञप्रकरणे द्रष्टव्यः । इति दक्षिणांगव्रणहरम् । अथ वामांगव्रणहरं शातातपप्रोक्ते

मातृष्वस्राभिगमने वामांगे तु व्रणी भवेत् ।
तेनापि निष्कृतिः कार्या सम्यग्दासीप्रदानतः ॥

सम्यगिति । शक्त्यनुसारेणालङ्कृत्य दद्यादित्यर्थः । दासीदानमन्त्रस्तु

" इयं दासी मया तुभ्यं श्रीवत्स प्रतिपादिता ।
सदा कर्मकरी भोग्या यथेष्टं भद्रमश्नुताम् ॥

इति वामाङ्गव्रणहरम् । अथाङ्गुलीव्रणहरं शातातपप्रोक्ते—

" फलहारी च पुरुषो भवेच्चैवाङ्गुलिव्रणी ।
नानाफलानामयुतं स दद्याच्च द्विजन्मने " ॥

इत्यङ्गुलिव्रणहरम् । अथ चरणव्रणहरं शातातपप्रोक्ते

"हीनजातिस्त्रीगमनाज्जायते चरणव्रणी ।
तत्पातकविशुद्ध्यर्थं प्राजापत्यं समाचरेत्" ॥

प्राजापत्यलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि । इति चरणव्रणहरम् । अथ भगव्रणहरं कर्मविपाकसङ्ग्रहे—

" मृते भर्तरि या नारी ब्रह्मचर्यविघातिनी ।
सा भवेद्व्रणदोषेण संभोक्तुं क्षमते न च ॥
संभोगानन्तरं तीव्रवेदना पुरुषस्य च ।
दद्यान्नीलवृषान् त्रीन्वै मधुसर्पिस्तिलाह्निकतान् ॥

व्रणदोषेणेति । व्रणदोषेण युक्ता भवेदित्यर्थः । संभोक्तुं न च क्षमत इत्यभिधानादर्थाद्योनावेव व्रणम् । च शब्दात् स्त्रीपुंसयोरुभयोरपि तीव्रवेदना भवति । नीलवृषानिति

" लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते " ॥

एवंलक्षितलक्षणाभावे तु वर्णेन नीलो ग्राह्यः । वृषदानमन्त्रस्तु नवग्रहप्रकरणे द्रष्टव्यः । इति भगव्रणहरम् । अथ भगन्दरव्रणहरं वायुपुराणे—

" यो गृहीत्वोत्कोचकं मोहात् नियुक्तो धर्मनिश्चये ।
भगन्दरो भवेत्तस्य ह्यधर्मं वदतो मुखे " ॥

यो गृहीत्वेति । यो मोहादुत्कोचं गृहीत्वा धर्मनिश्चये नियुक्तः सन्नधर्मं वदति तस्याधर्मं वदतो भगन्दरं भवतीत्यर्थः । ब्रह्मपुराणे

" आचार्यभार्यागमने भगन्दरयुतो भवेत् " ।

अत्र प्रतिक्रियामाह वृद्धगौतमः—

" माणिक्यं पद्मरागं च वज्रं वैडूर्यमेव च ।
गोमेदकं मरकतं [1]पद्मरागं च मौक्तिकम् ॥
हरितं च नवैतानि स्वर्णपात्रोपरि न्यसेत् ।
अथवा राजते ताम्रे गवाज्येन प्रपूरयेत् ॥
नवग्रहाणां प्रीत्यर्थं ब्रह्मणा निर्मितं पुरा ।
गन्धपुष्पाक्षतैर्धूपै नैवेद्यैस्तान् प्रपूजयेत् ॥
स्वलिङ्गैश्चैवमन्त्रैश्च होमः कार्यस्तु पूर्ववत् ।
ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ॥

1. पुष्यरागं

आदित्यादिग्रहाः सर्वे नवरत्नप्रदानतः ।

विनाशयन्तु मे हृष्टा क्षिप्रमेव भगन्दरम् ॥

अनेन कर्मणा नूनं यथावद्विहितेन तु ।

नरो नैरुज्यमाप्नोति निःसन्दिग्धं भगन्दरी " ॥

हरितं चेत्यादि । हरितं हरितरत्नम् । अथवा राजत इति । अथवेति पात्रविकल्पः । यस्मिन् स्वर्णादिपात्रे नवरत्नानि स्थापितानि तत्पात्रं गव्येनाज्येन पूरयित्वाऽऽदित्यादिग्रहाणां पुरतः स्थापयेत् । तान् ग्रहान् स्वलिङ्गै रादित्यादिप्रकाशकैर्मन्त्रैः पूर्ववत्पूजयेत् । पूजाप्रकारस्तु परिभाषायामस्माभि र्दर्शितः । आदित्यादिग्रहाः सर्वे इति रत्नोपेतपात्रदानमन्त्रः । एवं पात्रं दत्वा पश्चान्नवग्रहयज्ञऋत्विग्भ्यो दाक्षिणां दत्वा ग्रहयज्ञोक्तप्रकारेण ग्रहयज्ञशेषं समापयेत् । इति भगन्दरहरम् । अथ प्रकारान्तरेण भगन्दरव्रणहरं शातातपप्रोक्तं—

" स्वगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरी ।

तेनापि निष्कृतिः कार्या मेषीदानेन यत्नतः ॥

मेषदानविधिरग्रे मन्दाग्निहरप्रकरणे दर्शयिष्यते । अयन्तु विशेषः । तत्र रजतमयो मेषोऽत्र प्रत्यक्षमेषीति । सुवर्णखुरत्वाद्यः सकलोपि- विधिरत्रापि ग्राह्यः । मेषीदानमन्त्रः रहः कार्यः । तद्यथा ।

" देवानां यो मुखं हव्यवाहनः सर्वपूजितः ।

तस्य त्वं वाहनं पूज्यं देवेशेन्द्रैर्महर्षिभिः ॥

भगन्दरः पूर्वकर्मविपाकोत्थो ममास्ति यः ।

तत्सर्वं नाशय क्षिप्रं सौख्यं चापि प्रवर्द्धय " इति ।

इति प्रकारान्तरेण भगन्दरहरम् । अथ पूयव्रणहरं कर्मविपाकसङ्ग्रहे

" अतिमानादतिक्रोधा दतिस्नेहाद्भयादपि ।

यो धर्मनिश्चयं जानन्नन्यथा कुरुते नरः ॥

स पूयशोणितवहव्रणी तच्छान्तयेऽथ तु ।
तप्तकृच्छ्रं प्रकुर्याच्च तिलप्रस्थप्रदो भवेत् ॥
होमश्चरुघृताभ्यां च तिलैरष्टोत्तरं शतम् ।
सहस्रं वा व्याहृतिभिः कुर्यात्ब्राह्मणभोजनम् ” ॥

तप्तकृच्छ्रलक्षणं तु कृच्छ्रप्रकरणे द्रष्टव्यम् । प्रस्थलक्षणं तु परिमाण-प्रकरणेऽभ्यधायि । व्याधिगुरुलाघवभेदेन सहस्रं शतं वा होमः । ब्राह्मणभोजनं शक्त्यनुसारेण इति पूयव्रणहरम् । अथ नाडीव्रणहरमुमामहेश्वरसंवादे–

“ परेषां व्रणभेदेन मुष्टिघा तेन चैव हि ।
असत्यवचनाच्चैव प्लीहाप्लीहयुतस्तथा ॥
नाडीव्रणी वा जायेत तद्रोगस्यापनुत्तये ।
चान्द्रायणं चातिकृच्छ्रं यतिचान्द्रायणं चरेत् ॥
आते रौद्रेणसूक्तेन शतमष्टोत्तरं हुतिः ।
कूष्माण्डहोमः कर्तव्यः सोमारुद्राजपस्तथा ॥
यत्किञ्चिदग्निमान् सम्यक् जपेदयुतसङ्ख्यया” ।

चान्द्रायणादीनि व्याधिगुरुलघुभावेन व्यस्तानि समस्तानि वा योज्यानि । चान्द्रायणादीनि कृच्छ्रप्रकरणे द्रष्टव्यानि । आते पितर्मरुतामिति सूक्तमसाध्यसर्वरोगहरे द्रष्टव्यम् । सूक्तेन समग्रेण होमः । कूष्माण्डहोमः परिभाषायां दर्शितः । सोमारुद्रेत्यस्य सूक्तस्य बार्हस्पत्यः शयु ऋषिः । सोमारुद्रौ देवता । त्रिष्टुप् छन्दः । जपे विनियोगः । सा जपसङ्ख्या चाष्टोत्तरसहस्रकम्

“ सोमारुद्रा धारयेथा मसुर्यं प्र वामिष्टयोरमश्नुवन्तु । दमे दमे सप्तरत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे (१) सोमारुद्रा वि बृहतं विषूचीं ममीवा या नो गयमाविवेश । अरे बाधेथां निर्ऋतिं पराचै रस्मे भद्रा सौश्रवसानि सन्तु (२) सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् (३) तिग्मायुधौ तिग्म हेती सुशेवौ सोमारुद्रा विह सु मृळतं नः । प्र नो मुञ्चतं

वरुणस्य पाशात् गोपायतं नः सुमनस्यमाना" (४) इति सोमारुद्रेति सूक्तम् ॥ ( ऋ. मं. ६; सू. ७४ )

यत्किञ्चेदमित्यस्य वसिष्ठ ऋषिः। वरुणो देवता। जगती छन्दः। जपे विनियोगः।

यत् किं चेदं वरुण दैव्ये जने ऽभिद्रोहं मनुष्या ३ श्चरामसि। अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ( ऋ. मं. ७; सू. ८९; मं. ५ )

इति नाडीव्रणहरम्। अथ गण्डमालाहरं वायुपुराणे—

" गलगण्डी गणद्रव्यहर्ता भवति मानवः।
दानेन तत्प्रतीकारं वक्ष्यामि शृणु भास्कर ॥
माणिक्यं पद्मरागं च वज्रं मौक्तिकमेव च।
वैडूर्यं पुष्यरागश्च वज्रं मरकतं तथा ॥
एभिर्मालां प्रकुर्वीत सूत्रमप्यत्र राजतम्।
अलाभे मौक्तिकाद्यन्यतमैर्मालां प्रकल्पयेत् ॥
सर्वत्र राजतं सूत्रमिति वेदे प्रकल्पयेत्।
ताम्रपात्रे विनिक्षिप्य तिलानामुपरि न्यसेत् ॥
तिलानां च परीमाणं द्रोणपञ्चकमिष्यते।
यद्वा तदर्द्धमेव स्यात् स्वशक्त्या चापि कारयेत् ॥
महाशान्तिं तथा कुर्याद्ब्राह्मणैर्वेदपारगैः।

महाशान्तिर्नवग्रहशान्तिरिति चिन्तामणौ। सा चास्माभिः परिभाषायां दर्शिता।

" आचार्यस्तु, शुचिर्दक्षः सर्वशास्त्रार्थतत्त्ववित् ॥
श्रुतवृत्तोपसम्पन्नः सर्वप्राणिहिते रतः।
एवंविधं पूजयित्वा वस्त्रमाल्यानुलेपनैः ॥
होमश्च कारयेत्तेन समिदाज्यचरूत्कटम्।
आसत्येन तथा मन्त्रः सोमं राजानमित्यपि ॥
मन्त्रेण स्विष्टकृद्दद्याद्गलगण्डी च वाग्यतः।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥

'मालेयं 'ब्रह्मदैवत्या ब्रह्मविष्णुशिवादिभिः।
इन्द्रादिलोकपालैश्च तथा सर्वामरैरपि॥
इयं मे कण्ठलग्ना या धारिता प्रीतिपूर्वकम्।
ब्राह्मणाय प्रदत्तेयं गलगण्डं व्यपोहतु'॥
ग्रहशान्तिः कृता यैस्तु तेभ्यो दद्याच्च दक्षिणाम्।
पुण्याहवाचनं कृत्वा भुञ्जीत सह बन्धुभिः"॥

होमश्च कारयेत्तेनेत्यादि। अयश्च होमो ग्रहयज्ञहोम एव न ततः पृथग्भूतः। अत एवादित्यादिप्रकाशकमन्त्रो पलक्षणार्थं 'आसत्येन तथा मन्त्र' इत्याद्युक्तम्। मन्त्रेण स्विष्टकृदिति। स्विष्टकृद्धोम-मन्त्रस्तु नवग्रहयज्ञप्रकरणे कूष्माण्डहोमप्रकरणे च द्रष्टव्यः। गलगण्डी वाग्यतः सन् वक्ष्यमाणमन्त्रेण रत्नमालां दद्यादित्यन्वयः। मालेयमित्यारभ्य गलगण्डं व्यपोहत्वित्यन्तो दानमन्त्रः। ब्रह्मादि-भिरमरैर्येयं माला कण्ठलग्ना सती प्रीतिपूर्वकं धारिता सा ब्राह्मणाय प्रदत्तेयं मे गलगण्डं व्यपोहत्वित्यन्वयः। इति गलगण्डमालाहरम्।
अथ प्रकारान्तरेण गलगण्डमालाहरं कर्मविपाकसङ्ग्रहे—

"अध्यापयति शिष्यांस्तु यः प्रतार्य गुरुस्तथा।
शिष्यो गुरुं वञ्चयित्वा योऽधीते तस्य तस्य च॥
जायते गण्डमालाख्यो रोगस्तदुपशान्तये।
तद्यथा "अभक्ष्यभक्षपायी वा गण्डमाली भवेन्नरः॥
कृच्छ्रत्रयं प्रकुर्वीत चान्द्रायणमथापरम्।
अष्टोत्तरसहस्रन्तु जपेत्पुरुषसूक्तकम्॥
सौरमन्त्रजपस्तद्वद् अक्षीभ्यामिति मार्जनम्।
ब्राह्मणान् भोजयेच्छक्त्या ततो रोगात्प्रमुच्यते"॥

कृच्छ्रादिलक्षणं कृच्छ्रप्रकरणे निरूपितम्। सौरमन्त्रजपस्तद्वदिति। अष्टोत्तरसहस्रमित्यर्थः। स च मन्त्रः उद्यन्नद्य तृचः पुरुषसूक्तं वा। अयं तृचश्च परिभाषायां दर्शितः। अक्षीभ्यामिति सूक्तं च तत्रैव प्रदर्शि-

१ सर्व

तम् । मार्जनं शिरःप्रभृति पादपर्यन्तं कुशैरवमर्शनम् । इति प्रकारान्तरेण गण्डमालाहरम् । अथ सपित्तव्रणहरं कर्मविपाकसमुच्चये—

"चण्डालादिवचः शृण्वन्यो भुञ्जानस्तथैव हि ।
भुङ्क्ते स पाटलतनुः पित्राद्रोगी स जायते ॥
व्रणवांनपि, जायेत तत्पापस्यापनुत्तये ।
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ॥
यथाविभवतो दद्यात् तिलान् वेदविदे तथा ।
यमसूक्तेन विपेन्द्रं सर्पिषा मधुसूदनम् ॥
सहस्रं जुहुयादन्नं यमप्रीत्यर्थमेव च" ।

चण्डालादिवचः शृण्वन्नित्यादि । यो भोजनकालेऽसकृत्कामत श्चण्डालादिवचः श्रुत्वाऽपि भोजनं न परित्यजति । अथ च तत्प्रायश्चित्तमपि न करोति तस्य जन्मान्तरे पाटलतनुत्वादिरोगो भवति । कृच्छ्रादि लक्षणानि कृच्छ्रप्रकरणे द्रष्टव्यानि । यमसूक्तेनेति । यमसूक्तमत्रैवाग्रे प्रदर्श्यते । यमसूक्तेन प्रत्यृचं मधुसूदनमुद्दिश्य सहस्रं सर्पिषा सहस्रमन्नेन जुहुयात् । तथा यममुद्दिश्यापि सर्पिषाऽन्नेन च सहस्रं जुहुयात् । सहस्रमित्यष्टाधिकं सहस्रम् । सूक्तस्य त्रिषष्टिवारावृत्तावियं सङ्ख्या जायते । परेयिवांसं प्रवतो महीरन्विति षोडशर्चस्य यमसूक्तस्य यम ऋषिः । मधुसूदनमुद्दिश्य होमपक्षे यमगुणोपेतो मधुसूदनो देवता । यमोद्देशेन होमे तु मधुसूदनत्वगुणविशिष्टो यमो देवता । त्रिष्टुप् छन्दः । त्रयोदशी चतुर्दशी षोडशी चानुष्टुभः पञ्चदशी बृहती । होमे विनियोगः ।

"परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य (१) यमो नो गातुं प्रथवो विवेद नैषा गव्यूति रपभर्तवा उ । यत्रा नः पूर्वे पितरः परेयु रेना जज्ञानाः, पथ्या ३ अनु स्वाः (२) मातली कव्यैर्यमो अङ्गिरोभि र्बृहस्पति र्ऋकभिर्वावृधानः । याँश्च देवा वावृधुर्ये च देवान् त्स्वाहान्ये स्वधयान्ये मदन्ति (३) इमं यम प्रस्तरमा हि सीदा ङ्गिरोभिः पितृभि र्वावृधानः । आ त्वा मन्त्राः

कविश स्ता वह न्त्वेना राजन् हविषा मादयस्व (४) अङ्गिरोभि रा गहि यज्ञियेभि र्यम वैरूपैरिह मादयस्व विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य (५) अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयं सुमतौ यज्ञियाना मपि भद्रे सौमनसे स्याम (६) प्रेहि प्रेहि पथिभिः पूर्व्येभि र्यत्रा नः पूर्वे पितरः परेयुः। उभा राजाना स्वधया मदन्ता यमं, पश्यासि वरुणं च देवम् (७) सं गच्छस्व पितृभिः सं यमेने ष्टापूर्तेन परमे व्योमन्। हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः (८) अपेत वीत वि च सर्पतातो ऽस्मा एतं पितरो लोक मक्रन्। अहोभि-रद्भिरक्तु भिर्व्यक्तं यमो ददात्यवसानमस्मै (९) अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना यथा। अथा पितृ न त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति (१०) यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ। ताभ्यामेनं परि देहि राजन् त्स्वस्ति चास्मा अनमीवं च धेहि (११) उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु। तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् (१२) यमाय सोमं सुनुत यमाय जुहुता हविः। यमं ह यज्ञो गच्छ त्यग्निदूतो अरंकृतः (१३) यमाय घृतवद्धवि र्जुहोत प्र च तिष्ठत। स नो देवेष्वा यमद् दीर्घमायुः प्र जीवसे (१४) यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन। इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृभ्यः (१५) त्रिकद्रुकेभिः पतातिषळुर्वीरेक मिद्बृहत्। त्रिष्टुब्गा-यत्री छन्दांसि सर्वा ता यम आहिता (१६) (ऋ. मं. १०; सू. १४)

इति यमसूक्तम्।

इति सपित्तव्रणहरम्। अथ व्रणघ्नगजदानम्। वृद्धगौतमः—

पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः।
कारयेद्वाहनं हैमं चतुर्दन्तं च वारणम्॥
दन्ताःस्वर्णमयाः कार्या रत्नैर्नानाविधैर्युताः।
सर्वाभरणसंयुक्तं करिणं चोपकारकम्॥
आचार्यः प्रयतो भूत्वा तस्य पार्श्वे समाहितः।
उपचारैः षोडशभि रर्चयेद्गन्धपुष्पकैः॥

ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ।
श्रुतवृत्तोपसम्पन्नमनुद्वेगकरं नृणाम् ॥
भक्त्या सम्पूज्य वस्त्राद्यैर्होमं तेन च कारयेत् ।
मन्त्रैः पौराणिकैःसम्यक् संहिताशास्त्रचोदितैः ॥
'चत्वारो दिग्गजा ये च पुष्पदन्तादयो गजाः ।
सार्वभौमादयो ये च आहुत्या तोषयामि तान्' ॥
समिद्भिर्ज्वलिते होमो गजस्य प्रीतये भवेत् ।
तस्मै हुतवते सम्यक् गजप्रीत्यर्थमादृतः ॥
मन्त्रेणानेन शिखिवद्व्याकुलितमानसः ।
प्राङ्मुखाय उदङ्मुखो दद्याच्चेन्द्रस्य वाहनम् ॥
'ऐरावतश्चतुर्दन्तो गजानां नायकश्च यः ।
दिग्दन्तिनां पूज्यतमो व्रणं क्षपय मे प्रभो' ॥
अनन्तरं तु सम्पूज्य तमाचार्यं मुदान्वितः ।
ब्राह्मणान् भोजयित्वा तु स्वयं भुञ्जीत वाग्यतः ॥
एवं कृते व्रणाबाधा तत्क्षणादेव नश्यति ।
तेनैव व्रणिभिर्नूनं कार्यमारोग्यहेतवे" ॥

पलेन वा तदर्द्धेनेत्यादि । अत्र व्याधिनिदानं सपित्तव्रणहरोक्तमेव ज्ञेयम् । पललक्षणं परिभाषाप्रकरणोक्तं द्रष्टव्यम् । वाहनमितीन्द्रस्य वाहनमैरावण इत्यर्थः । उपकारकमिति भूमिधारणादिना विश्वोपकारकम् । पार्श्वं इतिसमीप इत्यर्थः । मन्त्रैःपौराणिकैरित्यादि । पौराणिकैरित्यादिभिः । संहिताशास्त्रचोदितैः संहिता मंत्र भागो वेदः सैव संहिता शासनाच्छास्त्रम् । अथवा शास्त्रं स्मृतिस्तत्र चोदितैः । एतदुक्तं भवति । वैदिकैः स्मार्तैश्च गजप्रकाशकैर्मन्त्रैरिति । ते च गणपतिप्रकाशकाः वैदिकाः स्वस्वशाखोक्ताः ग्राह्याः । तत्र केचन नवग्रह (यज्ञ) प्रकरणे दर्शिताः । तथा श्रोतःस्मार्तोपि मन्त्रो गजपतिगायत्री विनायकशान्तिप्रकरणे दर्शितः । अथवा पौराणिकैः पुराणविहितैः । तदेव प्रकटयति-संहिताशास्त्र चोदितैरिति । संहिताशास्त्राणि महाभारतादीनि ।

सर्वपुराणार्थसारत्वाद्भारतादीनि पुराणान्युच्यन्ते। तत्रोदितैर्मन्त्रैः। अथवा पौराणिका अन्ये संहिताशास्त्रचोदिता स्त्वपरे। तत्रैको मन्त्रः "ऐरावण चतुर्दन्त" इति गजदानमन्त्र एव पूजाहोमयोरपि ग्राह्यः। अपरो मन्त्रः 'चत्वारो दिग्गजा ये च' त्यत्रैव पूर्वोक्तः। मन्त्रान्तरन्तु–

"सुप्रतीक गजेन्द्र त्वं सरस्वत्यभिषेचक।
इन्द्रस्य वाहनं श्रेष्ठ, पूत, देवेन्द्रवन्दित" इति॥

एते मन्त्रा विकल्पेन ग्राह्याः। एषु, मन्त्रेषु, सुप्रतीकादीनि पदानीतरदिग्दन्तिनामप्युपलक्षकानि। इति व्रणघ्नगजदानम्। अथ पार्श्वस्फोटहरं कर्मविपाकसङ्ग्रहे–

"खरकाकादिमांसानां भक्षकः स्फोटवान् भवेत्।
पार्श्वयोस्तन्निवृत्त्यर्थं कृच्छ्रचान्द्रायणं तथा॥
अतिकृच्छ्रश्च कर्तव्यो जपश्चाष्टोत्तरायुतम्।
शिवसङ्कल्पसूक्तस्य पार्श्वस्फोटाद्विमुच्यते"॥

कृच्छ्रादिस्वरूपाणि कृच्छ्रप्रकरणे द्रष्टव्यानि। शिवसङ्कल्पसूक्तं तु परिभाषायां रुद्रविधाने प्रदर्शितम्। व्याधितारतम्यात् कृच्छ्रवृत्तिः कल्पनीया। इति पार्श्वस्फोटहरम्। अथ हस्तपादतलस्फोटहरं कर्मविपाक सङ्ग्रहे

"चण्डालकृतवापीषु तडागे कूपकादिषु।
स्नात्वा पीत्वा च सर्वाङ्गदाहवान् हस्तपादयोः॥
स्फोटयुक्तश्च स भवेत् कृच्छ्रं सान्तपनं चरेत्।
गां हिरण्यं च वासश्च दद्याच्छक्त्यनुसारतः"॥

कूप एव कूपकः। चण्डालेन यजमानेन कारितः। वाप्यादिष्वनातुरो ज्ञानपूर्वकमसकृन्नित्यनैमित्तिकादिस्नानादिकर्मकृत् सर्वाङ्गदाहादिमान् भवेदित्यर्थः। एतेन मसूरिकापि व्याख्याता। इति हस्तपादतलस्फोटहरम्। अथ स्त्रीस्तनस्फोट हरं कर्मविपाकसमुच्चये

" अवमन्य तु भर्तारं जारमालिङ्गितेन च ।
साई क्रीडति या नारी तमेवानुस्मरत्यपि ॥
तस्यास्तु स्तनयोः स्फोटा जायंते जननान्तरे ।
भगे च रक्तं स्रवते तद्रोगस्य प्रशान्तये ॥
दद्याद्गाः पञ्च लवणं हरिद्रां धान्यमेव च ।
उमामहेश्वरं चैव पूजयेच्च धने सति ॥
निष्कद्वादशकं दद्याज्जपेता मग्निसूक्तकम् ।

अवमन्यतिवत्यादि । अवमन्य तु भर्तारमित्यस्यैव विवरणं जार-मालिङ्गेत्यादिकम् । गाः पञ्च दद्यादित्यन्वयः । धने सति निष्कद्वाद-शकं दद्यात् । पूर्वोक्तगवादिदानानन्तरं धनवांश्चेत् द्वादश सौवर्णानि निष्काणि दद्यात् । धनरहितश्चेत् निष्कदानं यथाशक्ति कुर्यादित्यर्थः । लवणादीन्यपि विभवानुसारेण दद्यात् । तामग्निवर्णामित्यनेन जातवेदस इत्ययमनुवाको लक्ष्यते । जातवेदस इत्यस्य सप्तर्चस्यानु-वाकयस्य याज्ञिका देवता उपविषदृक्षयः दुर्गाग्निविष्णवो यथायोगं देवताः । त्रिष्टुप् छन्दः । जपे विनियोगः । जपसङ्ख्या चायुतम्

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः (१)
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः (२)
अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः (३)
विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि ।
अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् (४)
पृतनाजितं सहमानमुग्रमग्निं हुवेम परमात्सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः (५)
प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सात्सि ।
स्वां चाग्ने तनुवं विप्रयस्वास्मभ्यं च सौभगमायजस्व (६)

गोभिर्युष्टमायुषो निषिक्तं तवेन्द्रविष्णो रनु संवरेत् ।
नाकस्य पृष्ठमसि सस्वमानो वैष्णवी लोक इह मादयन्त (७)

इति स्त्रीस्तनस्फोटहरम् । अथ नानास्थानगतस्फोटहरं कर्मविपाकसमुच्चये–

" अनिर्दशायाः गोः पीत्वा पयः स्फोटकवान् भवेत् ।
उपवासत्रयं कृत्वा भोजयेद्विंशतिद्विजान् " ॥

इति नानास्थानगतस्फोटहरम् । अथ भगन्दरमूर्तिदानम् । तल्लक्षणं कर्मविपाकसारे–

" भगन्दरः प्रांशुशीर्णकेशो हृन्नाभिबन्धनः ।
पङ्गुः पाशाङ्कुशधरः पीठासीनः ककुद्धतः ॥

ककुद्धनुषाङ्गम् । तदिव ग्रीवा पश्चाद्भागे कृत्वा तत्र हतः प्रहारयुक्तः कर्तव्य इत्यर्थः । अथवा ककुच्छब्देन मस्तकं लक्ष्यते तत्र हतः । एतत्पूजाविधानं परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना प्रदर्शितम् । इति भगन्दररोगमूर्तिदानम् । अथ गण्डमालारोगप्रतिमादानम् । तल्लक्षणं कर्मविपाकसङ्ग्रहे–

" गण्डरोगः करैः षड्भिः शङ्खचक्रपरश्वधान् ।
पाशचापशरान् बिभ्रन् धावन् शीर्णशिरोरुहः " ॥

इति कर्तव्यताकलावस्तु परिभाषायां मातङ्को देवता तत्रेत्यादिना रोगप्रतिमादानविधावभ्यधायि । इति गण्डमालारोगप्रतिमादानम् । अथ व्रणमात्रमूर्तिदानम् । तल्लक्षणं चानुक्तेषु च रोगेष्वित्यादिना शूलरोगहरप्रकरणे निरुपितम् । पूजादिविधानं तु परिभाषायां रोगप्रतिमादानविधा वातंको देवता तत्रेत्यादिना निरूपितम् । इति व्रणमूर्तिदानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णे ।
पूर्णोऽभवत्पञ्चदशस्तरङ्गः ॥

इति श्री विश्वेश्वर विरचिते मदनमहार्णवे पञ्चदशस्तरङ्गः ।

# षोडशस्तरङ्गः

अथ वातरोगहराणि कर्मविपाकसङ्ग्रहे—

" देवानां ब्राह्मणानां वा धनापहरणात्तथा ।
स्वामिद्रोहाद्वातरोगी भवेत्तस्यापि निष्कृतिः ॥
कृच्छ्रातिकृच्छ्रे कुर्वीत चान्द्रायणमथापरम् ।
वात आवातु मन्त्रं च जपेदयुतसङ्ख्यया ॥
अग्निरस्मीत्यृचं चापि जपेच्च जुहुयादपि " ।

कृच्छ्रादिस्वरूपाणि परिभाषायां कृच्छ्रप्रकरणे द्रष्टव्यानि । वात आ वातु भेषजमित्यस्य वातायन उल ऋषिः । वायुर्देवता । गायत्री छन्दः । विहितार्थे विनियोगः ।

" वात आ वातु भेषजं शंभु मयोभु नो हृदे
प्र ण आयुंषि तारिषत् " (ऋ. मं. १०, सू. १८६, ऋ. १ )

अनयाऽयुतसङ्ख्यया जपस्तथाऽयुतसङ्ख्या होमश्च । एवमग्निरस्मीत्यनयापि । अस्य देवश्रवादेववाता विति द्वावृषी । अग्निर्देवता । त्रिष्टुप् छन्दः । विहितार्थे विनियोगः । अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ (शु. य. मा. अ. १८, मं. ६६) होमद्रव्यमाज्यम् । यथाशक्ति हिरण्यदानं कुर्वीत । इति वातरोगहरप्रायश्चित्तम् । अथ प्रकारान्तरेण वातरोगहरं कर्मविपाकसङ्ग्रहे—

" गुरुप्रत्यर्थितां यातो वातरोगी भवेन्नरः ।
नामत्रयेण कुर्वीत जपं होमश्च शान्तये " ॥

'अच्युताय नमः, अनन्ताय नमः, गोविन्दाय नम' इति नाममन्त्राः । अस्य नाममन्त्रस्य वशिष्ठकश्यपनारदा ऋषयः । महाविष्णुर्महानरसिंहो महावराहश्च देवता । अनुष्टुप् गायत्री छन्दसी । विहितार्थे विनियोगः । जपहोमयोः सङ्ख्या तु व्याध्यनुसारेण सहस्रादिलक्षान्ता कल्प्या । होमद्रव्यं चाज्यम् । केचन लिङ्गपुराणोक्तं 'प्रभुः शम्भुरुमापति' रिति नामत्रयं वर्णयन्ति । इति प्रकारान्तरेण वातरोगहरम् । अथोन्मादवायुरोगहरं कर्मविपाकसमुच्चये—

मोहयित्वा परान्यस्तु भुङ्क्ते वस्तु विगर्हितम् ।
उन्मादवातयुक्तः स्यात् कृच्छ्रं चान्द्रायणं तथा ।
जपेत् सारस्वतं मन्त्रं कुर्यात् ब्राह्मणतर्पणम् ॥

मोहयित्वेति। परानन्यान् शिक्षकत्वेन व्यवस्थितान् पित्राचार्यराजादीन् मोहयित्वा वञ्चयित्वा प्रतार्य विगर्हितं शास्त्रनिन्दितं वस्तु लशुनादि व्याध्यपनोदनादिनिमित्तमन्तरेण यो भुङ्क्ते इत्यर्थः। कृच्छादिलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि। सारस्वतमन्त्रो यद्वागिति द्वृचः। अस्य नेम ऋषिः। वाग्देवता। त्रिष्टुप् छन्दः। जपे विनियोगः।

"यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥
देवीं वाचमजनयन्त देवा स्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥
(मं ८; सू. १०० ऋ १०-११)

अत्रापि जपसङ्ख्या व्याध्यनुसारेणायुतादि कल्प्या। ब्राह्मणतर्पणमिति कुर्यादित्यनुषङ्गः। यथाशक्ति ब्राह्मणान् भोजयेदित्यर्थः। इत्युन्मादवायुहरम्। अथ धनुर्वातहरं कर्मविपाकसमुच्चये—

"अनिच्छतीमक्षतां य उपभुङ्क्ते परस्त्रियम्।
बलादाक्रम्य स नरः सर्वसन्धिषु वेदनाम् ॥
तीव्रमाप्नोत्यरुचिमान् धनुर्वातयुतो भवेत्।
ज्वरी तदपनुत्यर्थं महिषीदानमाचरेत् ॥
कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथापरम्।
उद्यन्नद्यजपश्चैव शक्त्या ब्राह्मणतर्पणम् ॥
नामत्रयं जपेन्मर्त्यो रोगशान्त्यर्थमात्मनः।
सहस्रनामकं चापि स्तोत्रं सम्यग्विधानतः ॥
अच्युतानन्तगोविन्दे त्येतन्नामत्रयं द्विजः।
अच्युतत्रितयावृत्त्या जपेद्रोगस्य शान्तये ॥
पुरुषसूक्तं जपेद्विद्वांस्ततो रोगात्प्रमुच्यते।

अनिच्छती मक्षतामित्यादि। अक्षतां अक्षतयोनिं पुरुषोपभोग रहितामिति यावत्। महिषी च सवत्सा देया। "प्रदद्यान्महिषीं कृष्णां सवत्सां पूजये त्तत" इति ब्रह्माण्डपुराणवचनात्। महिषी-दानमन्त्रस्तु श्वासकासहरे दर्शितः। कृच्छ्रादिस्वरूपं तु कृच्छ्र प्रकरणे द्रष्टव्यम्। उद्यन्नद्यतृचः परिभाषायां रोगप्रतिमादानविधौ द्रष्टव्याः। अत्र जपसङ्ख्याऽयुतत्रयम्। एवं सहस्रनामादीनामपि। नामत्रयस्यार्षादि तु प्रकारान्तरेण वातरोगहरेऽभ्यधायि। विष्णोः सहस्रनामानि पुरुषसूक्तं च परिभाषायां निरूपितम्। इति धनुर्वात-हरम्। अथ पक्षवातहरं शातातपप्रोक्ते—

" सभार्यां पक्षपाती च जायते पक्षघातवान्।
निष्कत्रयमितं हेम स दद्याच्च द्विजातये ॥
श्राद्धं च वैष्णवं कुर्यादात्मनो हितमिच्छता।
सप्त धान्यानि दद्याच्च गोदानं तत्र कारयेत्" ॥

निष्कस्वरूपं परिमाणप्रकरणे निरूपितम्। श्राद्धं च वैष्णवमिति। श्रद्धया दीयत इति श्राद्धम्। तदेव विष्णुदेवतात्वाद्वैष्णवं। विष्णू-द्देशेन ब्राह्मणान् यथाशक्ति भोजयेदित्यर्थः। सप्तधान्यानि व्रीह्यादीनि यथालाभोपपन्नानि द्रोणादनल्पपरिमाणानि देयानि। द्रोणस्वरूपं परिमाणप्रकरणे द्रष्टव्यम्। इति पक्षघातहरम्। अथ हिक्काहरं कर्मविपाकसमुच्चये—

" योऽकृत्वा ब्राह्मणो भुङ्क्ते स्नानहोमजपादिकम्।
स हिक्कारोगसंयुक्त स्तत्पापस्यापनुत्तये ॥
चान्द्रायणत्रयं कुर्यात् त्रीन् कृच्छ्रांश्च समाचरेत्।
तामग्निवर्णामितिच जपेत्सूक्तं समाहितः " ॥

चान्द्रायणप्राजापत्ययोस्तु स्वरूपं कृच्छ्रप्रकरणेऽभिहितम्। ताम-ग्निवर्णामिति सूक्तं तु स्त्रीस्तनस्फोटहरेऽभ्यधायि। जपसङ्ख्या तु व्याध्यनुसारेण सहस्राद्ययुतान्ता कल्प्या। इति हिक्काहरम्। अथ वातव्याधिहरं मृगदानम्। अस्य निदानं वायुपुराणे 'वातव्याधि-युतास्तेयी' ति। शान्त्युपायमाह बौधायनः

" हरिणं कारयेत्ताम्रं घनन्तु दशभिः पलैः ।
तदर्द्धेन तदर्द्धेन शृङ्गे हेममये दृढे ॥
तण्डुलोपरि संस्थाप्य ब्राह्मणाय निवेदयेत् ।
आढकत्रितयं वापि तदर्द्धं वा स्वशक्तितः ॥
पदेषु चतुर्षु स्थाप्यं कांस्यपात्रचतुष्टयम् ।
वायुदैवतमन्त्रैश्च होमं तत्र प्रकल्पयेत् ॥
समिदाज्यं चरुं कृत्वा शतमष्टोत्तरं द्विजः ।
अष्टाविंशतिरेवाथ मन्त्रेणानेन तं दिशेत् ॥
'वायो चरसि भूताना मन्तस्त्वं लोकपावनः ।
वाहनस्य प्रदानेन वातव्याधिं विनाशय' ॥
अनेन कृतमात्रेण यथोक्तेन विधानतः ।
वातव्याधिविनिर्मुक्तो नीरुक् ससुखमेधते " ॥

घनन्तु दशभिः पलैरित्यादि । घनं निबिडं दृढमिति यावत् । पलपरिमाणं परिमाणप्रकरणेऽभिहितम् । ब्राह्मणाय निवेदयेदिति । हरिणं 'वायुवाहनाय नम' इति मन्त्रेण षोडशोपचारैः पूजयित्वा वक्ष्यमाणहोमं च निर्वर्त्य पश्चात्तं हरिणं ब्राह्मणाय दद्यादित्यर्थः । तण्डुलपरिमाणमाह आढकत्रितयमिति।आढकस्वरूपं परिमाणप्रकरणे निरूपितम् । वायुदैवतमन्त्रैरित्यत्र मन्त्रैरिति बहुवचनं वायुदैवत्यानां मन्त्राणां बहुत्वादन्येषां भिन्नशाखापरिपठितानां उपलक्षणार्थम् । अतः स्वस्वशाखोक्तमन्त्रो विकल्पेन ग्राह्यः। अथवा समिदाज्यचरूणां तदपेक्षया बहुत्वम्। अतएतदुक्तं भवति। समिदादयो वायुदैवत्यैः पृथक् मन्त्रैर्होतव्य इति । तत्रैको मन्त्रो वातरोगहरप्रायश्चित्ते प्रदर्शितोऽपरे च मन्त्राः नवग्रहप्रकरणे दर्शिताः। समिदाज्यचरुं कृत्वेति । 'प्रादेशमात्राः समिध' इति समित्करणं समिधश्च याज्ञियाः। स्वगृह्योक्तविधिना आज्यसंस्कारः आज्यकरणम्। स्वगृह्योक्तविधिनैव निर्वापाद्युद्वासनप्रतिष्ठिताद्यन्तसंस्कारैश्च चरुनिष्पादनं चरुकरणम्। वायोचरसीति दानमन्त्रः। इति वातव्याधिहरं मृगदानम् । अथ रक्तवातहरं शातातपप्रोक्ते

" रक्तवस्त्रप्रवालानां हारी स्याद्रक्तवातवान् ।
सवस्त्रां महिषीं दद्या त्पद्मरागसमन्विताम् " ॥

वस्त्रमपि रक्तमेव । महिषीदानमन्त्रस्तु श्वासकासहरे द्रष्टव्यः । इति रक्तवातशमनम् । अथ रक्तवातपित्तहरं लक्ष्मीनारायणदानम् ।

वृद्धबौधायनः—

" सवर्णागमने रक्तवातवान् जायते नरः ।
सवर्णा स्त्रीगमने वातपित्तवानपि जायते ॥

" लक्ष्मीनारायणं रूपं सुवर्णेन प्रकल्पयेत् ।
पलेन वा तदर्द्धेन तदर्द्धार्द्धेनवा पुनः ॥
लक्ष्मीनारायणं रूपं सर्वदा सर्वकामदम् ।
पद्मासनगतं कुर्याद्देवदेवं चतुर्भुजम् ॥
दक्षिणाधःकरे पद्मं शङ्खमूर्ध्वकरे न्यसेत् ।
वामोर्ध्वे च करे चक्रं लक्ष्मीपृष्ठेऽपरः करः ॥
वामोत्सङ्गगता लक्ष्मीः रत्नपात्रकरा भवेत् ।
दक्षिणश्च करो देव्या पृष्ठे देवस्य चक्रिणः ॥
गरुडं राजतं कुर्याद्देवदेवस्य वाहनम् ।
पक्षौ च तस्य सौवर्णौ सुवर्णेनैव नासिका ॥
वस्त्रैरत्यन्तरुचिरैः परिधायातिकौतुकम् ।
मुक्तादामपरिक्षिप्तं चन्दनागरुलेपितम् ॥
अर्चयेत्कुसुमैर्युग्मं लक्ष्मीनारायणात्मकम् ।
प्रसन्नं रमणीयञ्च गरुडोपरि संस्थितम् ॥
ततो विप्रं समाहूय सुशीलं लक्षणान्वितम् ।
आचारवन्तं धर्मज्ञं वेदवेदाङ्गपारगम् ॥
प्रतिग्रहनिवृत्तञ्च श्रुतिस्मृतिपथे स्थितम् ।
स्वयं भक्त्या समानीय पूजयेद्वस्त्रकुण्डलैः ॥
कुङ्कुमागरुकर्पूरैरुपवीताङ्गुलीयकैः ।
पूर्वोक्तेन विधानेन होमं तत्र तु कारयेत् ॥
मन्त्रेणानेन तं दद्यात्सर्वलोकनमस्कृतम् ।

' लक्ष्मीपते देवकी नन्दनेश
क्षीराब्धिशायिन् वचसामगम्य ।

गोविन्द दामोदर वातरक्तं
विनाशयाशु क्षपितारिवर्ग '
लक्ष्मीनारायणस्यैवं मूर्तिं दत्वा च भक्तितः ।
आरोग्यवान् सुखी नित्यं जायते नात्र संशयः " ॥

पलेन वेति। पलस्वरूपं परिमाणप्रकरणे दर्शितम्। पूर्वोक्तेन विधानेनेति। होमं च कारयेत्तत्रे त्यारभ्यान्त्र वृद्धिहरनारायणदानोक्तप्रकारेणेत्यर्थः। यदा तु वातपित्तहरणार्थमिदं दानं क्रियते तदा लक्ष्मीपते देवकीनन्दनेशेत्यस्मिन् दानमन्त्रे गोविन्ददामोदर वातपित्तमित्यूहः कार्यः। इति वातपित्तहरं वातरक्तहरं लक्ष्मीनारायणमूर्तिदानम्। अथ वातपित्तहरं कर्मविपाकसमुच्चये—

" लशुनं गृञ्जनं तालफलं वाऽश्नाति यो द्विजः ।
स वातपित्तरोगी च भवेच्चान्द्रायणं चरेत् " ॥

औषधव्यतिरेकेण लशुनादिभक्षणे चान्द्रायणं । कामतश्चेत् द्विगुणम्। चान्द्रायणलक्षणं तु कृच्छ्रप्रकरणे द्रष्टव्यम्। इति वातपित्तहरम्।

अथ वातरक्तहरप्रायश्चित्तम्। शातातपः—

" रक्तवस्त्रप्रवालानां हारी स्याद्वातरक्तवान् ।
चान्द्रायणद्वयं कुर्यादेतद्रोगस्य शान्तये " ॥

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि । इति वातरक्तहर प्रायश्चित्तम्। अथ प्रकारान्तरेण वातरक्तहरप्रायश्चित्तम्। बौधायनः

" सवर्णागमने रक्तवातवान् जायते नरः ।
एतद्रोगनिवृत्त्यर्थं षडब्दं कृच्छमाचरेत् " ॥

षडब्दकृच्छ्रे प्राजापत्यकृच्छ्राणामशीत्युत्तरं शतं भवति। इदं च प्रायश्चित्तं स्वल्परोगस्यापि धनवतः। अधनस्याधिकारो रोगवतो वा। इति प्रकारान्तरेण वातरक्तप्रायश्चित्तम्। अथ वातरोगहरप्रतिमादानम्। तल्लक्षणं कर्मविपाकसारे

" वायुर्भयङ्करः पङ्गुः पाशी धावन् समन्ततः ।
विकीर्णकेशः पार्श्वस्थान् भर्त्सयन्नेणवाहनः " ॥

पूजाविधानन्तु परिभाषायां व्याधिप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना दर्शितम् । इति वातरोगप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णः
पूर्णस्तरङ्गः खलु षोडशोऽयम् ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे षोडशस्तरङ्गः

## सप्तदशस्तरङ्गः

अथ पित्तहराणि कर्मविपाकसङ्ग्रहे–

" वैद्यशास्त्रमदाद्यस्तु कृत्वौषधमथान्यथा ।
प्रयोजयेन्नरः सोयं रक्तपित्तयुतो भवेत् ॥
अष्टोत्तरायुतं वह्ना वह्निंदूतमिति ऋचा ।
चर्वाज्याभ्यां प्रजुहुयाद्रक्तपित्तापनुत्तये " ॥

वैद्यशास्त्रमहं जानामीति गर्वादौषधमन्यथा शास्त्रविरुद्धं कृत्वा प्रयोजयेदथवौषधं शास्त्राविरुद्धं कृत्वा शास्त्रानुक्तमार्गेण यो दद्यात्स रक्तपित्तवान् जायत इत्यर्थः। अथ वैद्यशास्त्रमदादित्येनेन भिषङ्मिथ्याचरणमभिहितम् । अतो व्याधितरतमभावेन भिषङ्मिथ्याचरणप्रायश्चित्तानि चान्द्रायणकृच्छ्रातिकृच्छ्रपराकादीनि व्यस्तानि समस्तानि वा योज्यानि । चान्द्रायणानि तथा पूर्वोक्तहोमश्चेति मिलित्वा द्वयमपि रोगनिवृत्तिसाधनम् । चान्द्रायणादिस्वरूपाणि कृच्छ्रप्रकरणेऽवगन्तव्यानि । अग्निं दूतं वृणीमह इत्यस्य ऋष्यादि श्वासकासहरे द्रष्टव्यम् । अयन्तु विशेषः । तत्रसूक्तं विनियुक्तमत्र प्रथमा ऋगेवेति । चरुणाऽयुतार्द्धमाज्येनार्द्धं मित्ययुतसङ्ख्या पूरणीया । अथवा व्याधिशक्त्याद्याधिक्ये चरुणाऽयुतमाज्येनायुत होमः । इति रक्तपित्तहरम् । अथ प्रकारान्तरेण रक्तपित्तहरं शातातपप्रोक्ते

" मद्यपो रक्तपित्ती स्यात्स दद्यात्सर्पिषो घटम् ।
मधुनोर्द्धघटं चैव सहिरण्यं विशुद्धये " ॥

अत्रापि मद्यपप्रायश्चित्तानि त्रैमासिकादीनि षडब्दपर्यन्तानि व्याधिशक्त्याद्यपेक्षया योज्यानि । एकस्मिन् मासि सार्द्धद्वयप्राजापत्यकृच्छ्रगणनया त्रैमासिकप्रायश्चित्ते सार्द्धसप्तप्राजापत्यकृच्छ्राणि भवन्ति । एवमन्यत्राप्यूह्यम् । आज्यदानमन्त्रस्तु प्रायश्चित्तोपक्रमपद्धतावुक्तः । मधुदानमन्त्रस्तृष्णज्वरसहितकफश्वासकासहरेऽभिहितः। इति प्रकारान्तरेण रक्तपित्तहरम्। अथ पित्तरोगहर-

प्रतिमादानम् । तल्लक्षणं चाऽ'नुक्तेषु तुरोगेष्वि' त्यादिना शूलरोगप्रकरणोक्तमेवात्रापि ज्ञेयम् । पूजाविधानं तु परिभाषायां प्रतिमादानविधा वातङ्को देवता तत्रेत्यादिना प्रपञ्चितम् ।

इति पित्तरोगहरप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णे
पूर्णोऽभवत्सप्तदशस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे सप्तदशस्तरङ्गः ।

# अष्टादशस्तरङ्गः

अथ श्लेष्महराणि । तत्र शातातपः

" त्रपुहारी च पुरुषो जायते श्लेष्मलः सदा " ।

अत्र "द्रव्याणा मल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः । चरेत्सान्तपनं कृच्छ्र" मिति मनूक्तं सान्तपनं चरेत् । सान्तपनलक्षणं कृच्छ्रप्रकरणेऽभितिहम् । इति श्लेष्महरम् । अथ प्रकारान्तरेण श्लेष्महरं शातातपोक्तं

" त्रपुहारी च पुरुषो जायते श्लेष्मलः सदा ।
उपोष्य दिवसं सोपि दद्यात्पलशतं त्रपु " ॥

पलप्रमाणं परिमाणप्रकरणे द्रष्टव्यम् । इति प्रकारान्तरेण श्लेष्महरम् । अथ चिकित्स्यकफव्याधिहरम् । यमः

" नित्यानुष्ठानविमुखः कफरोगी भवेन्नरः ।
पराभवं समाप्नोति चेत्याह भगवान्यमः ॥

पराभवं श्लेष्मणः शत्रुभ्यश्च समाप्नोतीत्यर्थः ।

तच्छान्तये मासमेकं यावकं भक्षयेन्नरः ।
सहस्रनामपाठश्च होमश्चाष्टोत्तरायुतम् ॥
नामत्रयेण कुर्वीत चर्वाज्यं च हविर्भवेत् " ।

यावकव्रतस्वरूपं कृच्छ्रप्रकरणेऽभिहितम् । एतैर्नियमैर्युक्तो मासं यावकं व्रतं कुर्यादित्यर्थः । विष्णुसहस्रनामानि परिभाषायां प्रदर्शितानि । नामत्रयस्यार्षादि वातरोगहरे द्रष्टव्यम् । नामत्रयेण होमः । सहस्रनामस्तोत्रस्य जपः । जपसङ्ख्या च व्याध्यनुसारेणाष्टोत्तर सहस्रादिका कल्प्या । इति चिकित्स्यकफव्याधिहरम् । अथ श्लेष्मरोगप्रतिमादानम् । तल्लक्षणं तु शूल रोग हरप्रकरणेऽनुक्तेषु तु रोगेष्वित्यादिनाऽभिहितमेवात्राप्यनुसन्धेयम् । पूजाविधानं तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवतेत्यादिनाऽभिहितम् । इति श्लेष्मरोगप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णे
प्यष्टादशो यं प्रथितस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे अष्टादशस्तरङ्गः

# एकोनविंशस्तरङ्गः

अथापस्माररहराणि शातातपप्रोक्ते

" धुर्तोऽपस्माररोगीस्यादतस्तद्दोषशान्तये ।
ब्रह्मकूर्चत्रयं कृत्वा धेनुं दद्यात्सदक्षिणाम् " ॥

ब्रह्मकूर्चलक्षणं कृच्छ्रप्रकरणे दर्शितम् । धेनुदानमन्त्रस्तु नवग्रह-यज्ञप्रकरणे दर्शितः । इत्यपस्माररहरम् । अथ प्रकारान्तरेणापस्माररहरं कर्मविपाकसङ्ग्रहे

" गुरौ स्वामिनि वा यस्तु प्रतिकूलं समाचरेत् ।
सोऽपस्मारी भवेत्तत्र कुर्याचान्द्रायणं नरः ॥
सदसस्पतिमन्त्रेण चर्वाज्यं जुहुयात्तथा ।
कयान इति सूक्तं तु जपेत् ब्राह्मणतर्पणम् ॥
कुर्याद्धिरण्यदानञ्च शक्त्या रोगस्य शान्तये " ।

चान्द्रायणं कृच्छ्रप्रकरणे द्रष्टव्यम् । चर्वाज्यं मिलितमेव साधनं न पृथक् पृथक् । होमसङ्ख्या तु रोगानुसारेणाष्टोत्तरशताद्ययुतान्ता कल्प्या । एवं सूक्तजपोपि । सदसस्पतिमित्यस्य मेधातिथि ऋषिः । सदसस्पति र्देवता । गायत्री छन्दः । होमे विनियोगः । सदसस्पति मद्भुतं प्रियमिन्द्रस्य काम्यं । सनिं मेधामयासिषम् (ऋ. मं. १; सू. १८, मं. ६ ) कया नश्चित्र आभुवदिति पञ्चदशर्चस्य सूक्तस्य वाम-देव ऋषिः । इन्द्रो देवता । गायत्री छन्दः । जपे विनियोगः ।

कया नश्चित्र आ भुव दूती सदावृधः सखा । कया शचिष्ठया वृता (१) कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृळहा चिदारुजे वसु (२) अभी षु णः सखीना मविता जरितॄणाम् । शतं भवास्यूतिभिः (३) अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः । नियुद्भि श्चर्षणीनाम् (४) प्रवता हि क्रतूना माहा पदेव गच्छसि । अभक्षि सूर्ये सचा (५) सं यत् त इन्द्र मन्यवः सं चक्राणि दधन्विरे । अध त्वे अध सूर्ये (६) उत स्मा हि त्वामाहुरि न्मघवानं शचीपते । दातार मविदीधयुम् (७) उत स्मा सद्य इत् परि शशमानाय सुन्वते । पुरू चिन्मंहसे वसु (८) नहि ष्मा ते शतं चन राधो वरन्त आमुरः ।

न च्यौत्नानि करिष्यतः (९) अस्माँ अवन्तु ते शात मस्मान् त्सहस्र-मूतयः। अस्मान् विश्वा अभिष्टयः (१०) अस्माँ इहा वृणीष्व सख्याय स्वस्तये। महो राये दिवित्मते (११) अस्माँ अविड्ढि विश्वहे न्द्र राया परीणसा। अस्मान् विश्वाभिरूतिभिः (१२) अस्मभ्यं ताँ अपा वृधि व्रजाँ अस्तेव गोमतः। नवाभिरिन्द्रोतिभिः (१३) अस्माकं धृष्णु या रथो द्युमाँ इन्द्रानपच्युतः। गव्युरश्वयुरीयते (१४) अस्मा कमुत्तमं कृधि श्रवो देवेषु सूर्य। वर्षिष्ठं द्या मिवो परि (१५) (ऋ. मं. ४ सू. ३१)

इति कया नश्चित्र इति सूक्तम्। इति प्रकारान्तरेणापस्मारहरम्। अपस्माररोगहरविनायकमूर्तिदानम्। तत्र बौधायनः:

"ब्राह्मणश्वासरोधेन ह्यपस्मारी भवेन्नरः।
वक्ष्ये तस्य प्रतीकारं दानहोमक्रियादिना॥
पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः।
विनायकप्रतिकृतिं कुर्यात्स्वर्णेन शोभनम्॥
राजतं च तथा नाग मुपवीतं प्रकल्पयेत्।
पुष्करं पद्मरागेण हस्तान्तस्य प्रकल्पयेत्॥
विनायकार्द्धमानेन आखुं देवस्य कल्पयेत्।
तस्याप्यङ्गे प्रदेयानि रत्नानि विविधानि च॥
माणिक्येन प्रकुर्वीत चक्षुषी तस्य शोभने।
पूर्वेद्युर्मण्डपं कुर्यात् स्तम्भैः षोडशभिर्दृढम्॥
यद्वा द्वादशभिः कुर्यादष्टाभिर्वा प्रयत्नतः।
मण्डपस्य चतुर्भागं वेदिकामपि कल्पयेत्॥
रात्रौ विनायकस्यापि ह्यधिवासनमिष्यते।
चतुर्भिर्ब्राह्मणैः सार्द्धमाचार्यः सर्वशास्त्रवित्॥
स्वयमेव तथा कार्यो धर्मज्ञः सत्यवाक् शुचिः।
कुलीनस्तरुणश्चैव सर्वप्राणिहिते रतः॥
रात्रौ जागरणं कृत्वा मध्यरात्रे बलिं हरेत्।
मत्स्यमांसेन सहितं तथा क्षीरोदनेन च॥

आचार्यः प्रयतो भूत्वा मन्त्रेणानेन संयतः ।
पूर्वस्यां दिशि तं दद्याद्बलिं वै सर्वकामिकम् ॥
आदित्या वसवो रुद्रा देवा भूतानि सर्वशः ।
सर्वाः पिशाचा डाकिन्यः शाकिन्यः पन्थदेवताः ॥
अपस्माराधिदैवं च वेताला नैर्ऋता स्तथा ।
बलिदानेन दत्तेन शान्तिं कुर्वन्तु सर्वतः ॥
ततः प्रभाते विमले स्नात्वा चाहृतवाससः ।
ऋत्विजः कटकैर्वस्त्रैरुपवीताङ्गुलीयकैः ।
कुण्डानि दिक्षु चत्वारि मेखलासंयुतानि च ।
कुर्यात्तेषु प्रकुर्वीत होमं मन्त्रैः स्वकैः स्वकैः ॥
पूर्वस्मिन् बह्वृचः कुर्युः समिदाज्यचरुत्कटम् ।
विनायकं समुद्दिश्य गणानां त्वेति मन्त्रतः ॥
अध्वर्युर्दक्षिणे कुण्डे होमं चैव प्रकल्पयेत् ।
छन्दोगः पश्चिमे कुण्डे सम्यग्घोमं समाचरेत् ॥
अथर्वणश्चोत्तरे कुण्डे होमं चैव प्रकल्पयेत् ।
विनायकाय देवाय सर्वभूतहिताय च ॥
समिदाज्यैश्चरुं हुत्वा पूर्णाहुत्यन्तमेव च ।
आचार्यः प्रतिमां तान्तु ब्राह्मणैः सह संयुतः ॥
आसने वेदिकामध्ये वितानेन परिश्रिते ।
तिलानामुपरि स्थाप्य गन्धपुष्पैः प्रपूजयेत् ॥
वस्त्रैर्नानाविधैः शुभ्रैः कर्पूरकटकादिभिः ।
उपचारैः षोडशभि नैवेद्याय च मोदकाः ॥
यथा देवे तथाऽऽचार्येऽप्यलङ्कारादि कल्पयेत् ।
आचार्यः परया भक्त्या गणेशाय प्रकल्पयेत् ॥
अपूपादि तथाऽन्यच्च कारयेद्भक्ष्यकान्वितम् ।
निवेद्य पार्वतीश्चापि देवदेवं महेश्वरम् ॥
पूजयेत्परया भक्त्या त्वाचार्यः स्वयमेव तु ।
तथैव रोगवान् भक्त्या संपूज्य गणनायकम् ॥

गणानां त्वेति मन्त्रेण तूष्णीं शूद्रस्तु पूजयेत् ।
ततो मध्यन्दिने प्राप्ते प्रतिमां दक्षिणायुताम् ॥
मन्त्रेणानेन दद्याच्च स रोगी प्राङ्मुखः स्वयम् ।
उदङ्मुखोपविष्टाय ब्राह्मणायातिभक्तितः ॥
' विनाशय प्रपन्नार्ति हर विघ्नं विनायक ।
त्वं देवैः प्रार्थितः पूर्वं सम्यग्विघ्नपरायणैः ॥
ब्राह्मणश्वासरोधेन यज्जातं मम वैकृतम् ।
पूर्वकर्मविपाकेन ह्यपस्मारोन्मदादिकम् ॥
जाड्यं वाप्यथवाऽधैर्यं नासिक्यं चापि भाषणम् ।
त्वदर्चायाः प्रदानेन रोगमाशु विनाशय ' ॥
चतुर्णां ब्राह्मणानां च दद्याच्छक्त्या च दक्षिणाम् ।
एवं कृत्वा गणपतेर्दानं मर्त्यः सुखी भवेत् " ॥

पलेन वा तदर्द्धेनेत्यादि । पललक्षणं परिमाणप्रकरणे द्रष्टव्यम् । पुष्करमिति । पुष्करं शुण्डाग्रभागः । हस्तमिति । हस्तः शुण्डादण्डः । चक्षुषीतस्येति । तस्य विनायकस्य विनायकवाहनमूषकस्यापि । मत्स्यमांसेनेत्यादि । मत्स्येन मांसेन क्षीरोदनेन च सहितं चित्रमन्नं बलिं दद्यादित्यर्थः । बलिदानमन्त्रमाह आदित्या वसवो रुद्रा इत्यादिना श्लोकद्वयेन । होममन्त्रैः स्वकैरिति । स्वकैः स्वशाखोक्तैर्विनायकप्रकाशकैर्मन्त्रैरित्यर्थः । तत्र विनायकप्रकाशकमन्त्रा विनायकशान्तौ नवग्रहयज्ञप्रकरणे प्रदर्शिताः । होमसङ्ख्या त्वष्टोत्तरशतादिसहस्रान्ता शक्त्यनुसारेण कल्प्या । पूर्वस्मिन् बह्वृच इत्यादि । विनायकाधिवासनवेदिकातः पूर्वादिदिशो ग्राह्याः । सहितसंभवे चतसृषु दिक्षु च बह्वचाभिः होमः कारयितव्यः । वेदचतुष्टयविदामभावे स्वशाखीयब्राह्मणेन, तस्याप्यभावे तस्मिन् कर्मण्याचार्यत्वेन यो वृतः तच्छाखानुसारेणाधिवासनादिकादग्नेय्यां दिशि कुण्डादिषु होमं चतुर्गुणं कारयेत् । एवमाचार्य ऋत्विक्सहितो होमं विधाय पूर्णाहुत्यन्ते पूर्वाधिवासितां विनायकप्रतिमां पुनः षोडशोपचारैः पूजयेदित्याह–आचार्यः प्रतिमां त्वेत्यादिना । भक्ष्यकान्वितं अपूपादि नैवेद्यार्थं कारयेदित्यर्थः । तूष्णीं शूद्रस्तु पूजयेदिति । आचार्येण

पूजितं विनायकं रोगवान्यजमानोपि पूजयेत्। स चेद्यजमानः शूद्रः स तूष्णीं मन्त्रेण विना पूजयेदित्यर्थः। विनायक प्रपन्नार्तिहरेत्यारभ्य रोगमाशु विनाशयेत्यन्तो विनायकदानमन्त्रः। त्वदर्चायाः प्रदानेनेति। अर्चायाः अर्चितायाः प्रतिमायाः। इत्यपस्माररोगहरं गणेशदानम्। अथापस्मारमूर्तिदानम्। तल्लक्षणमङ्गाद्युक्तेषु रोगेष्वित्यारभ्य शूलरोगहरप्रकरणे दर्शितम्। एवमत्रापि विज्ञेयम्। पूजाविधिस्तु परिभाषायां रोगप्रतिमादानविधा वातङ्को देवता तत्रेत्यादिना प्रदर्शितः। इत्यपस्मारमूर्तिदानम्।

"महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकराञ्चितेऽस्मि
न्नेकोनविंशः प्रथितस्तरङ्गः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे एकोनविंशस्तरङ्गः।

# विंशस्तरङ्गः

अथ शिरोरोगहराणि शातातपप्रोक्ते-

नागहारी च सततं पुरुषः शीर्षरोगवान् ॥

सीसं पलशतं दद्यादुपोष्य स तु वासरम्" ॥

नागः सीसम् । इति शिरोरोगहरं सीसदानम् । अथ प्रकारान्तरेण शिरोरोगहरं कर्मविपाकसङ्ग्रहे-

" गुरुपरोधी शिरसि रोगवान् जायते नरः ।

कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथापरम् ॥

औषधानि प्रदद्याच्च [illegible] तथैव च" ।

औषधानि वैद्यकशास्त्रे शिरोरोगहरत्वेनोक्तानि । कृच्छ्रातिकृच्छ्रयोर्लक्षणं कृच्छ्रप्रकरणेऽभ्यधायि । इति प्रकारान्तरेण शिरोरोगहरम् । अथ कर्मविपाकोक्तं शिरोरोगहरं ।

" प्रायोपवेशनादीनां व्रतानां त्यागकारणात् ।

शिरोरोगयुतो भूयात्तन्निष्कृतिरथोच्यते ॥

गोहत्यायाः व्रतं कुर्यात् पञ्चाशद्विप्रभोजनम् ।

उद्यन्नृचं जपेच्चैव होमः कूष्माण्ड एव च" ॥

भवेदिति शेषः । गोहत्याव्रतस्वरूपन्तु कृच्छ्रप्रकरणे निरूपितम् । विप्रभोजनमिति । विप्रान् भोजयेदित्यर्थः । उद्यन्नृचामिति । उद्यन्नद्य मित्रमहमिति ऋचः परिभाषायां [illegible]विधौ द्रष्टव्याः । एतज्जपसङ्ख्या तु [illegible] कल्प्या । कूष्माण्डहोमस्तु परिभाषायामेव दर्शितः । इति कर्मविपाकसङ्ग्रहोक्तं शिरोरोगहरम् । अथैकांशशिरोरोगहरम् । नारदः-

" ब्रह्मचारी यदाश्नीयाद्द्विश्राद्धे विशेषतः ।

एकांशेन शिरोरोगी भवतीत्याह नारदः ॥

अक्षीभ्यां त इतीत्येतत्सूक्तमष्टोत्तरं शतम् ।

जपेच्चरुघृताभ्यां च जुहुयाच्च तथैव हि ॥

औषधानि प्रदद्याच्च विप्रान् द्वादश भोजयेत्" ।

भिन्नपात्रे विशेषत इति। सुवर्णरजतपात्रव्यतिरिक्तभिन्नपात्र-भोजनम्। विशेषतो भिन्नकांस्यपात्रभोजनमित्यर्थः। अक्षिभ्यां ते नासिकाभ्यामिति सूक्तं परिभाषायां रोगप्रतिमादानविधौ द्रष्टव्यम्। जुहुयाच्च तथैवहीति। अष्टोत्तरशतमित्यर्थः। चरुणाष्टोत्तरं शतं घृतेन चाष्टोत्तरशतम्। अत्र समग्रं सूक्तं न तु प्रत्येकम्। औषधानि वैद्यकशास्त्रे शिरोरोगहरत्वेनोक्तानि। इत्येकांशशिरोरोगहरम्। अथ सूर्यावर्तहरं शातातपप्रोक्ते–

" औषधस्यापि हरणात्सूर्यावर्तः प्रजायते।
तेन सूर्यः प्रदातव्यो निष्कैकस्य यथाविधि " ॥

निष्कपरिमितसुवर्णनिर्मितसूर्यप्रतिमां दद्यादित्यर्थः। निष्कलक्षणं परिमाणप्रकरणेऽभ्यधायि। इति सूर्यावर्तहरम्। अथ शिरोरोगहरयज्ञोपवीतदानम्। एतन्निदानं पद्मपुराणे "ब्राह्मणद्विट् शिरोरोगी" ति। अत्र प्रतिकृतिर्वायुपुराणे–

" उपवीतं हिरण्येन निर्मितन्तु पलार्द्धतः।
तदर्द्धेन तदर्द्धेन यथाविभवतोऽपि वा ॥
उत्तरीयं राजतं च तावत्या सङ्ख्यया कृतम्।
ब्राह्मणाय ब्रह्मविद श्रोत्रियाय निवेदयेत् ॥
मन्त्रेणानेन विधिवत्पूजितायाङ्गुलीयकैः।
धाता विधाता जगतां परमात्मा चतुर्मुखः।
विनाशयतु मे क्षिप्रं रोगवेगं शिरोगतम् " ॥

अत्र यज्ञोपवीतदानमन्त्रे धाता विधातेत्यादि ब्रह्मप्रकाशकशब्दोपादानाद्ब्रह्मपूजां षोडशोपचारसहितां ब्रह्मप्रकाशकैर्मन्त्रै ब्रह्मजज्ञानमित्येवमादिभिर्नमोन्तैर्नाममन्त्रैर्वासोत्तरीये यज्ञोपवीते विधाय तद्यज्ञोपवीतं ब्राह्मणायोक्तप्रकारेण दद्यात्। ब्रह्मजज्ञानमित्यादयो ब्रह्मप्रकाशका मन्त्रा नवग्रहयज्ञप्रकरणे दर्शिताः। पलार्द्धेनेति। पललक्षणं परिमाणप्रकरणे निरूपितम्। यथा विभवतोऽपि वेति। समृद्धधनेन पलादप्यधिकपरिमाणेन सुवर्णेन यज्ञोपवीतं कारयेदित्यर्थः। यावदुन्मानं यज्ञोपवीतं तावदुन्मानमु-

त्तरीयं भवति। इति शिरोरोगघ्नयज्ञोपवीनदानम्। अथ शिरोरोगप्रतिमादानम्। तल्लक्षणश्चानुक्तेषु तु रोगेष्वित्यादिना शूलरोगहरप्रकरणोक्तमेवात्राप्यनुसन्धेयम्। पूजाविधानन्त्वातङ्को देवता तत्रेत्यादिना परिभाषायां रोगप्रतिमादानविधावुक्तम्। इति शिरोरोगप्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण तुङ्गो
विंशस्तरङ्गोयमगादगाधः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे विंशस्तरङ्गः

# एकविंशस्तरङ्गः

अथ मुखरोगहराणि। तत्र पूतिवक्त्रहरं कर्मविपाकसङ्ग्रहे–

" धर्मकर्माण्युपक्रम्य मध्ये त्यजति यो नरः।
अविद्यमान दोषं वा परेषां यः प्रकाशयेत्॥
स भवेत्पूतिवक्त्रस्तु कुर्याच्चान्द्रायणत्रयम्।
(धूपत्वक्?) चन्दनादीनि सुगन्धीनि च शक्तितः।
दद्याद्विप्राय पञ्चाशद्ब्राह्मणान् भोजयेत्तथा॥ "

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणे द्रष्टव्यम्। इतिपूतिवक्त्रहरम्। अथ प्रकारान्तरेण मुखरोगहरं कर्म विपाकसङ्ग्रहे–

" परवाचां विघ्नकर्ता मुखरोगी प्रजायते।
मर्मोद्घाटनतोऽन्येषां मुखरोगः प्रजायते॥
स कृच्छ्रत्रितयं कुर्यान्मन्त्रैर्व्याहृतिभिर्घृतम्।
जुहुयात्त्रिसहस्रञ्च दद्याद्व्रीह्यादि काञ्चनम् "॥

प्राजापत्यकृच्छ्रस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि। व्रीह्यादि दद्यात्काञ्चनं दद्यादित्यन्वयः। आदिशब्देन यवगोधूमादयो गृह्यन्ते। व्रीह्यादि स्वशक्त्यनुसारेण दद्यात्। इति मुखरोगहरम्। अथ प्रकारान्तरेण मुखरोगहरं शातातपप्रोक्ते–

" श्वमार्जारादिभिः स्पृष्टं भुक्त्वा दुर्गन्धवान् भवेत्।
पीत्वा त्रिरात्रं गोमूत्रं भोजयेद्ब्राह्मणत्रयम् "॥

दुर्गन्धवान् मुखदुर्गन्धवान् भवेत् भुक्त्वेति भोजनस्य निमित्तत्वेनोपादानात्। इति प्रकारान्तरेण मुखरोगहरम्। अथ मुखरोगहरं कर्मविपाकसमुच्चये–

" कूटसाक्षी भवेद्वक्त्ररोगी शोणितपित्तवान्
कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथापरम्॥
कुर्यात्कूष्माण्डहोमञ्च गायत्रीमयुतं जपेत्।
दद्याद्धिरण्यं व्रीहींश्च मुखरोगस्य शान्तये"॥

कृच्छ्रादिलक्षणानि कृच्छ्रप्रकरणे द्रष्टव्यानि। कूष्माण्डहोमः परिभाषायां निरूपितः। हिरण्यं व्रीहयश्च विभवानुसारेण दातव्याः। इति मुखरोगहरम्। अथ मुखरोगहरगजदानं बौधायनः-

" वाग्विरोधं गुरोः कृत्वा मुखरोगी भवेन्नरः।
तस्य दानेन विहितः प्रतिकारोयमुच्यते ॥
सौवर्णं राजतं ताम्रं पलार्द्धेन पलेन वा।
कारयेत्करिणं सौम्यं यथाविभवतोऽपि वा ॥
तस्यैव कारयेद्दन्तौ शुद्धेन रजतेन तु।
पुच्छं समौक्तिकं कुर्याद्रत्नानामक्षिणी तथा ॥
संवेष्ट्य पीतवस्त्रेण गन्धपुष्पाक्षतादिभिः।
अर्चयेद्धान्यराशिस्थं धान्यं द्रोणाष्टकं मतम् ॥
श्रुतवृत्तोपसम्पन्नं ब्राह्मणं संयतेन्द्रियम् ॥
दान्तं कुलीनं धर्मिष्ठमनुद्वेगकरं नृणाम्।
आहूय परया भक्त्या वस्त्रालङ्कारभूषणैः ॥
पूजयेत्प्रयतो भूत्वा तेनैतत्कर्म कारयेत्।
समिदाज्यतिलैश्चैव होमं चापि प्रवर्तयेत् ॥
अग्निनाग्निस्तथा घाये शुक्रज्योतिरिति क्रमात्।
मन्त्रा एते विनिर्दिष्टा इध्म आश्वत्थइष्यते ॥
कृत्वा चैतत्प्रणीताम्भस्ततो हस्त्यर्चनं भवेत्।
स्वाहान्तं कर्म कृत्वाऽथ प्रणीतामोक्षणं तथा ॥

पलेनार्द्धपलेन वेत्यादि। पलस्वरूपं परिमाणप्रकरणेऽवगन्तव्यम्। तस्यैवं कारयेदित्यादि। यो हस्ती सुवर्णेन ताम्रेण वा निर्मितस्तस्य शुद्धेन रजतेन कारयेत्। यदा रजतेन हस्ती निर्मितस्तदा रजतेन दन्तविधानं अनुपपन्नं रजतस्य प्राप्तत्वात्। द्रोणस्वरूपं धान्यमान प्रकरणे द्रष्टव्यम्। समिदाज्यहोमक्रमेण मन्त्रानाह अग्निनाग्निरित्यादि। अग्निनाग्निरित्यस्य मेधातिथि ऋषिः। आद्यपादे निर्मथ्याग्निराहवनीयाग्निश्च देवता इतरत्राग्निर्देवता। गायत्री छन्दः। समिद्धोमे विनियोगः

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्यः ॥
( तै. सं. १-४-४६, )

आघायेऽग्निमिन्धत इत्यस्य त्रिशोक ऋषिः अग्नीन्द्रौ देवता गायत्री छन्दः। आज्यहोमे विनियोगः। आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा (तै. ब्रा. २, ४, ५)

शुक्रज्योति रिति मन्त्रस्य यजुषोऽग्निकाण्डे वैश्वदेवकाण्डे च समाम्नायादग्निर्विश्वे देवा ऋषयः। मरुतो देवता अथवा लिङ्गोक्ता देवता। यजुष्ट्वान्न छन्दो नियमः। तिलहोमे विनियोगः। शुक्रज्योति श्च चित्र ज्योतिश्च सत्य ज्योतिश्च ज्योतिष्माँ श्च। शुक्रश्च ऋतपाश्चात्यँ हाः॥ (शु. य. अ. १८; मं. ८०)

इध्माश्वत्थ इष्यत इति। इध्मं इति विशेषोपादानाद्धोमसमिधः पालाशा भवन्ति। तदभावे यज्ञियकाष्ठैरिध्मादि भवति। होमसङ्ख्या चानिर्दिष्टत्वात्प्रत्येकमष्टोत्तरशतम्। कृत्वाचैव प्रणीतांभइति। कर्मसङ्कल्पानन्तरं स्वगृह्योक्तविधिनाग्निं प्रतिष्ठाप्य पात्राच्छादनानन्तरं प्रणीताम्भः प्रणीतापात्रस्थापनापर्यन्तं कृत्वा ततो हस्त्यर्चनं भवेत्। पूर्वोक्तधान्यराशिस्थं हस्तिनं षोडशोपचारैः पूजयेदित्यर्थः। हस्ती चात्र सुप्रतीको दिग्गजः। दानमन्त्रे सुप्रतीकश्रवणात्। स्वाहान्तं कर्मकृत्वेति। पूर्वोक्तप्रकारेण करिणं पूजयित्वा स्वाहान्तं कर्म समिदादिहोमकर्म निर्वत्य पश्चात्प्रणीताविमोक्षणं पूर्वस्थापित प्रणीतापात्रविसर्जनं स्वगृह्योक्तविधानेन कुर्यादित्यर्थः। एवं पूर्वोक्तकर्मानन्तरं किं कुर्यादित्यत आह–

" ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः।
तस्मै हुतवते दद्यात्करिणं तं सदक्षिणम्॥
मन्त्रेणानेन विधिवत्प्राङ्मुखाय विशेषतः।
'सुप्रतीक गजेन्द्र त्वं सरस्वत्यभिषेचकः॥
इन्द्रस्य वाहनेश त्वं सर्वदेवैश्च पूजितः।
दानेनानेन दत्तेन मुखरोगं विनाशय'॥
ब्राह्मणान् भोजयेदन्ते सार्द्धं भुञ्जीत बन्धुभिः"।

इति मुखरोगहरगजदानम्। अथ जिह्वारोगहरं शातातपप्रोक्ते–

" पक्वान्नहरणे चैव जिह्वारोगः प्रजायते ।
गायत्र्या स जपेत् लक्षं दशांशं जुहुयात्तिलैः " ॥

जपकरणाशक्तौ गायत्र्ययुतजपस्यैककृच्छ्रप्रत्याम्नायत्वाल्लक्षजपस्थाने दशकृच्छ्राणि कृत्वा गायत्र्या दशसहस्राणि जुहुयात्। कृच्छ्रस्वरूपं कृच्छ्रप्रकरणे द्रष्टव्यम्। इति जिह्वारोगहरम्। अथ प्रकारान्तरेण जिह्वारोगहरं कर्मविपाकसमुच्चये–

" परेषां दुःखकरणात् सर्वदानृतभाषणात् ।
जिह्वाछेदात्तथाऽन्येषां पक्षपाताच्च संसदि ॥
जिह्वारोगी भवेदास्ये व्रणी चैवाभिजायते ।
पराकत्रितयं चैव होमः कूष्माण्डसंज्ञकः ॥
कयानश्चित्रसूक्तस्य जपो होमस्तथैव च ।
व्रीह्यादीनां तथा दानमौषधस्य च संस्मृतम् " ॥

सर्वदेति। एतच्च पदं काकाक्षिवदुभयत्रापि संबध्यते। असकृदन्येषां दुःखकरणादसकृदनृतभाषणाच्चेत्यर्थः। पक्षपाताच्चेति। पक्षपातो व्यवहारिणः पराकलक्षणं कूष्माण्डहोमश्च परिभाषायामुदीरितः। कयानश्चित्र आभवदिति सूक्तमपस्माररोगहरप्रकरणे प्रदर्शितम्। अनेन सूक्तेन जपो होमश्च कर्तव्यः। जपहोमयोः सङ्ख्या व्याधिशक्त्यनुसारेणाष्टोत्तरशतादिका कल्प्या। सूक्तं सकलं मन्त्रः न प्रत्यृचम्। व्रीह्यादीनामित्यादिशब्देन यवगोधूममुद्गादीनि सप्त लक्ष्यन्ते। एतानि शक्त्यनुसारेण देयानि। औषधस्यायुर्वेदे जिह्वारोगहरत्वेनाभिहितस्य। इति प्रकारान्तरेण जिह्वारोगहरम्। अथ छर्दिरोगहरं शातातपप्रोक्ते–

" विषप्रदः छर्दिरोगी गां च दद्यात्पयस्विनीम् " ।

चकारादेककृच्छ्रः सौरमन्त्रजपश्च समुच्चीयते। कृच्छ्रशब्दस्तपोरूपः क्लेशसाध्यः चान्द्रायणादिपरः। अतो व्याध्याद्यनुसारेण प्राजापत्यपराकचान्द्रायणादिष्वन्यतमो ग्राह्यः। सौरमन्त्रश्च सौराष्टाक्षरो वोद्वयद्वयतृचो वा महासौरवर्गो वा। एते च परिभाषायामेव तत्र तत्र प्रदर्शिताः। तथा प्राजापत्यस्वरूपाण्यपि। गोदानमन्त्रश्च। जपसंख्या तु व्याध्याद्यनुसारेणाष्टोत्तरशताद्ययुतान्ता कल्प्या। इति छर्दिरोगहरम्। अथ दन्तपीडाहरं–

आमान्नहरणे चैव दन्तपीडा प्रजायते ।
स दद्यादाश्विनौ हेमनिष्कद्वयविनिर्मितौ ॥

निष्कस्वरूपं परिभाषाप्रकरणेऽभ्यधायि । अत्र चाश्विनप्रकाशकमंत्रेणाश्विनदेवतापूजां विधाय ब्राह्मणाय दद्यात् । स च मंत्रो नवग्रहयज्ञप्रकरणे विनायकादिपंचमंत्रेषु दर्शितः । इति दन्तपीडाहरम् । अथ श्यावदन्तहरं शातातपोक्ते—

" सुरापः श्यावदन्तः स्यात् प्राजापत्याष्टकं चरेत् ।
शर्कराया स्तुलाः सप्त प्रदद्यात्पापशुद्धये ॥
जपित्वा च महारुद्रं दशांशं जुहुयात्तिलान् ।
अभिषेकश्च कर्तव्यो मन्त्रैर्वरुणदैवतैः " ॥

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणे निरूपितम् । शर्करातुलापुरुषदानानि । आत्मानं शर्करया तोलयित्वा तां शर्करां ब्राह्मणेभ्यो दद्यादित्यर्थः । तुलादानमन्त्रस्तु—

" त्वं तुले सर्वभूतानां प्रमाणं परिकीर्तिता ।
मां तोलयसि संसारादुद्धरस्व नमोस्तु ते " ॥

महारुद्रलक्षणं तु परिभाषायां रुद्रविधाने दर्शितम् । दशांशहोममन्त्रविच्छेदस्तस्याहुतिसङ्ख्याविशेषश्च रुद्रविधान एव दर्शितः। वरुणदैवतैरित्युपलक्षणम् । अतः स्वस्वशाखासमाम्नातैः वारुणैरन्यैश्चाभिषेकं कृत्वा ततः स्मार्तैरभिषेकः कर्तव्यः । स्मार्ताश्च मन्त्रा नवग्रहप्रकरणे दर्शिताः । इति श्यावदन्तत्वहरम् । अथ निष्ठुरभाषित्वहरं शातातपप्रोक्ते

" परेषां कर्कशकरणा न्निष्ठुरोक्तिः प्रजायते ।
खरोक्तिर्हास्यकरणा द्द्यान्मौक्तिककाञ्चनम् " ॥

खरोक्तिर्निष्ठुरोक्तिर्नीरसोक्तिर्वा गर्दभस्वनत्वं वा परोद्वेगजननस्य हास्यस्य करणात् । मौक्तिककाञ्चनयोर्दानं शक्त्यनुसारेण । इति निष्ठुरभाषित्वादिहरम् । अथ मूकत्वहरं शातातपप्रोक्ते—

" मूको भ्रातृवधाच्चैव तस्येयं निष्कृतिः स्मृता ।
तेन पापविशुध्यर्थं यतिचान्द्रायणं चरेत् ॥
व्रतान्ते पुस्तकं दद्यात्सुवर्णपलसंयुतम् ।

ब्राह्मणाय चतुर्वेदविदे वस्त्रेण संयुतम् ॥
इमं मन्त्रं समुच्चार्य ब्राह्मणं तं विसर्जयेत् "।

यतिचान्द्रायणलक्षणं कृच्छ्रप्रकरणे निरूपितम्। तथा पललक्षणं परिभाषाप्रकरणे। इमं मन्त्रं समुच्चार्य पुस्तकं दद्यादित्यन्वयः। तमेव दानमन्त्रमाह—

" सरस्वति जगन्मातः शब्दब्रह्माधिदेवते।
दुष्कर्मकारिणं पापाद्रक्ष मां परमेश्वरि " ॥

इति मूकत्वहरम्। अथ मूकत्वहरतिलपद्मदानं।

" स्वरोपघाती वाचां च हर्ता मूकः प्रजायते।
वक्ष्यामि तत्प्रतीकारं येनसम्पद्यते सुखम् ॥

वाचां हर्ता गुर्वनुज्ञामन्तरेण वेदादिग्राही, पुस्तकहर्ता च।

" कुर्यात्स्वर्णमयं पद्मं पलार्द्धेन तदर्द्धतः।
यथाविभवतः सम्यक् वित्तशाठ्यं नकारयेत्" ॥

तदर्द्धेन पलार्द्धेन वेत्यर्थः। पलस्वरूपं वक्ष्यमाणाढकस्वरूपं च परिमाणप्रकरणे द्रष्टव्यम्।

रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रोपरि न्यसेत्।
ताम्रपात्रपरीमाणं पलानामष्टकं विदुः ॥
पीतवस्त्रेण संवेष्ट्य पात्रं तत्र विनिक्षिपेत्।
आढकद्वितयोन्मानं तिलराशौ प्रयत्नतः ॥
उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित्।
रक्तचन्दनपुष्पाद्यैर्मन्त्रेणानेन पूजयेत् ॥

पद्मपूजामन्त्रमाह—

" ब्रह्मणे च नमस्तुभ्यं विष्णोरमितनाभिजः।
अतिप्रीतिकरं भानो स्तथा रुद्रस्य चैव हि ॥
पूजां मम गृहाण त्वं सर्वक्लेशविनाशन"।

पूजानन्तरकर्तव्यमाह—

आग्नेय्यां दिशि वै होमः कर्तव्यो मन्त्रपूर्वकः
समिदाज्यतिलैश्चैव सावित्र्याष्टाक्षरेण तु ॥

समिद्धोमं प्रकुर्वीत सर्वरोगप्रशान्तये ।
आज्यहोमश्च कर्तव्य श्चित्रमित्यनया ऋचा ॥
तिलानां यत इन्द्रेति व्याहृतीभिरथापि वा ।
अग्नेरुत्तरदिग्भागे कलशस्थापनं भवेत् ॥
पूर्वोक्तेन विधानेन वाऽभिषेकादि कारयेत् ।
प्रणीतामोक्षपर्यन्तं कर्म कृत्वा विधानतः ॥
तस्मै हुतवते पद्मं दद्यात् स्मृत्वा चतुर्मुखम् ।
'देवानामपि सर्वेषां यतस्त्वं प्रीतिकारणम् ॥
विशेषतो ब्रह्मणश्च सरस्वत्या हरेरपि ।
यत्प्राग्वाचां निरोधेन वैरूप्यं मम देहजम् ।
स्वरोपघातजं तीव्रं दुःखं रोगकरं तथा ॥
तत्सर्वं नाशयन्त्वद्य ब्रह्मविष्णुशिवाग्नयः ।
त्रिदशादयश्च ये देवा हविष्मन्तस्तथा भुवि' ॥
एवं दत्वा तु तत्पद्ममाचार्यायातिभक्तितः ।
पृष्ठत स्तमनुव्रज्य स्वरभेदाद्विमुच्यते ॥
एवं पद्मोद्भवःप्राह नारदाय महात्मने" ।

आग्नेय्यां दिशि वै होम इत्यादि । पद्मस्थापनप्रदेशादाग्नेय्यां समिद्धोमः। सावित्राष्टाक्षरो मन्त्रः । सच परिभाषायां रोगप्रतिमा-दानविधावभिहितः। समिदाज्यहोमे चित्रं देवानामिति मन्त्रः। अस्य कुत्स ऋषिः । सूर्यो देवता । त्रिष्टुप् छन्दः । आज्यहोमे विनियोगः। चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावा-पृथिवी अन्तरिक्षं सूर्य आत्मा जगत स्तस्थुषश्च॥ ( तै. सं. १-४-४३ ) मन्त्रः । तिलहोमो यत इन्द्रेत्यनया व्याहृतिभिर्वा भवेत् । यतो इन्द्रेत्यस्य भर्गऋषिः । इन्द्रो देवता । बृहती छन्दः । तिलहोमे विनियोगः ।

यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये विद्विषो वि मृधो जहि ( तै. ब्रा. ३-६-११ )

व्याहृतीनामृष्यादि नवग्रहयज्ञे देवतावाहनप्रस्तावे प्रदर्शितम्। होमसङ्ख्या प्रत्येकमष्टोत्तरशतं सहस्रं वा। पूर्वोक्तेन विधानेति। अभिषेक प्रकरणोक्तेन विधानेन। तच्चास्माभिर्नवग्रहशान्तिप्रकरणे दर्शितम्। प्रणीतामोक्षपर्यन्तमिति। प्रणीतापात्रस्थोदकस्य विसर्जनपर्यन्तं कर्म स्वशाखोक्तविधिना कृत्वेत्यर्थः। देवान मपि सर्वेषामित्यारभ्य हविष्मन्तस्तथा सुवीत्यन्तः पद्मदानमन्त्रः। इति मूकत्वहरं तिलपद्मदानम्। अथ स्खलद्वाक्यत्वहरं कर्मविपाकसङ्ग्रहे–

" वेदं वा धर्मशास्त्रं वा विक्रीणीयाद्धि यो नरः।
अधीतं तस्य नायाति जिह्वायाः स्खलनं भवेत्॥

अपरिस्कुटवक्ता वा जिह्वायां व्रणवानपि।
कृच्छ्रातिकृच्छ्रौ कुर्वीत चान्द्रायणमथापि च॥

सूक्तं तमग्निवर्णाख्यं जपेच्चैवायुतत्रयम्।
दद्याद्धिरण्यं विप्रेभ्यो भोजनं च स्वशक्तितः "॥

वेदं वा धर्मशास्त्रं वा विक्रीणीयादिति। भृतकाध्यापक इत्यर्थः। कृच्छ्रादिलक्षणानि कृच्छ्रप्रकरणे दर्शितानि। एतानि व्याधि गुरुलघुभावेन समस्तानि व्यस्तानि वा योज्यानि। तामग्निवर्णामिति सूक्तं स्त्रीस्तनस्फोटहरे प्रदर्शितम्। इति स्खलद्वाक्यत्वहरम्। अथ गद्गदत्वहरसरस्वतीदानम्। तच्च वायुपुराणे–

" वाग्विरोधं गुरोः कृत्वा भवेद्गद्गदवाङ्नरः।
तस्य वक्ष्ये प्रतीकारं दानेन ऋषिभाषितम्॥
पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः।
सारस्वतीं तु प्रतिमां कुर्याद्भुजचतुष्टयाम्॥
वरदां चाक्षसूत्रं च बिभ्रतीं दक्षिणे करे।
पुस्तकं वाऽभयं वामे दधानां हंसवाहनाम्॥
अतिशुभ्रेण रौप्येण कूटस्वर्णेन वाऽऽसनम्।
प्रकुर्वीत तथा सम्यक् सौवर्णं पद्ममुत्तमम्॥

कूटस्वर्णेन ताम्रादिमिश्रितेन। रौप्येण कूटस्वर्णेन वाऽऽसनं पीठं विधाय तस्योपरि सौवर्णं पद्मं न्यसेदित्यर्थः।

पद्मस्योपरि संस्थाप्य देवीं वागीश्वरीं पराम् ।
मुक्तादामसमायुक्तां शुक्लवस्त्रेण संयुताम् ॥
वागीश्वर्यादिमन्त्रेण पूजयेत्पीततण्डुलैः ।
श्वेतपुष्पैः श्वेतगन्धैः सत्कृत्य विधिपूर्वकम् ॥

वागीश्वर्यादिमन्त्रेणेत्यादि । यद्वाग्वदुक्त्यविशेषेणमानान्तरं वागीश्वरीमन्त्रः । स चोन्मादवायुरोगहरे दर्शितः ।

ब्राह्मणः सर्वशास्त्रज्ञस्तेन होमं समाचरेत् ।
पायसं जुहुयादष्टशतं शालिमयं तथा ॥
जुहुयात्समिधश्चापि तथाऽऽज्यं च तिलानपि ।
कृताधिवासनामेनामाचार्याय निवेदयेत् ॥
संपूज्य ब्राह्मणं सम्यग्वस्त्रालङ्कारभूषणैः ।
मन्त्रेणानेनविधिवत्प्राङ्मुखाय ह्युदङ्मुखः ॥
'या वक्त्रे ब्रह्मणो देवी या सा वागीश्वरी परा ।
ब्रह्मविष्णुशिवैश्चान्यैः पूजिता सर्ववन्दिता ॥
तुष्टा भवतु दानेन दत्तेनानेन वाक् परा ।
वाग्विरोधं गुरोःकृत्वा यन्मे गद्गदभाषणम् ॥
तत्सर्वं क्षपय क्षिप्रं ब्राह्मी त्वं लोकपावनी' ।
अनुज्ञाप्य ब्राह्मणं तु स्वयं भुञ्जीत बन्धुभिः" ॥

अष्टशतमिति। अष्टाधिकं शतम्। कृताधिवासनामित्यनेन रात्रौ जागरणं लभ्यते। अतः पूर्वेद्यू रात्रावधिवास्य जागरणं विधाय प्रातः पुनः पूजयित्वा होमानन्तरं ब्राह्मणाय निवेदयेत्। या वक्त्रेत्यारभ्य लोकपावनीत्यन्तो दानमन्त्रः। इति गद्गदहरसरस्वतीदानम्। अथैडमूकत्वहरं शातातपप्रोक्ते–

" विद्यापुस्तकहारी च एडमूकः प्रजायते ।
इतिहासं शतं दद्या द्ब्राह्मणाय सदक्षिणम् ॥

गुर्वनुज्ञामन्तरेण वेदाद्यध्येता विद्याहारी। उत्पत्तिप्रभृति प्रतिबद्ध श्रोत्रेन्द्रियस्तादृग्वागिन्द्रियश्चैडमूकः। इतिहासशतं भारतम्।

पुस्तकदानमन्त्रस्तु मूकत्वहरे प्रदर्शितः। इत्येडमूकत्वहरम्। अथ स्खलद्वाक्यत्वहरं शातातपप्रोक्ते-

" शुकशारिकयोर्घातान्नरः स्खलितवाग्भवेत्।
सच्छास्त्रपुस्तकं दद्यात् सद्विप्राय सदक्षिणम्॥

प्रत्येकं शुकशारिकाहननं निमित्तं। सच्छास्त्राणि वेदाविरुद्धानि मीमांसादीनि। अत्रापि पुस्तकदाने मूकहरोक्तो मन्त्रो ग्राह्यः। इति स्खलद्वाक्यत्वहरम्। अथ साधारण्येन मुखरोगप्रतिमादानम्। तल्लक्षणं चानुक्तेषु तु रोगेष्वित्यादिना शूलरोगप्रकरणोक्तेनात्रापि विज्ञेयम्। पूजाविधानं त्वातङ्को देवता तत्रेत्यादिना परिभाषायां रोगप्रतिमादानविधाने उक्तम्। इति साधारण्येन मुखरोगप्रतिमादानम्। अथ जिह्वारोगप्रतिमादानं दन्तरोग प्रतिमादानञ्च। तल्लक्षणं च कर्मविपाकसङ्ग्रहे-

" लम्बाकारौ स्थितौ जिह्वादन्तरोगौ द्विवाहकौ "।

पूजादीतिकर्तव्यताकलापस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपितः। इति जिह्वारोगप्रतिमादानं दन्तरोगप्रतिमादानं च।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण पूर्ण
एकाधिको विंशतिकस्तरङ्गः॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे एकविंशस्तरङ्गः

# द्वाविंशस्तरङ्गः

अथ नासिकारोगहराणि । कर्मविपाकसंग्रहे–

" लवणस्यापहर्ता तु शीर्णघ्राणेन्द्रियादिकः ।
घर्घरस्वरवांश्चैव जायते तस्य निष्कृतिः ॥
उद्यन्नद्यतृचं सम्यक् जपेदष्टोत्तरायुतम् ।
जुहुयाच्चरुसर्पिर्भ्यां रक्तवासांसि काञ्चनम् ॥
दद्याद्देवद्विजगवां कुर्यात्पूजां स्वशक्तितः । "

उद्यन्नद्यतृचस्यार्षादि परिभाषायां रोगप्रतिमादानविधौ द्रष्टव्यम् । होमोप्यनेन तृचेन । होमसङ्ख्या च दशांशः । चरुणा च पृथक् सर्पिषा च पृथक् । वासांसीति बहुवचनात् त्रिभ्यो न न्यूनानि दद्यात् । काञ्चनं शक्त्यनुसारेण दद्यात् । देवद्विजगवां पूजा देवस्य सूर्यादेः सुवर्ण तिलकादिभिः पूजा । "आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा । महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुया" दिति याज्ञवल्क्य स्मरणात् । स्वामी स्कन्दः । द्विजपूजा स्रक्चन्दन-वासःसुवर्णादिभिः। गोपूजा आहारदानादिभिः । इति नासिका-रोगहरम् । अथ वक्रनासत्वहरं शातातपप्रोक्ते–

" कुक्कुटे निहते चैव वक्रनासः प्रजायते ।
तेन निष्कः प्रदातव्यो ब्राह्मणाय हिरण्मयः " ॥

निष्कस्वरूपं परिमाणप्रकरणेऽभ्यधायि । इति वक्रनासत्वहरम् । अथ नासिकारोगहरमूर्तिदानम् । तल्लक्षणञ्चानुक्तेषु तु रोगेष्वित्याद्यारभ्य शूलरोगहरप्रकरणोक्तमेवात्राप्यवगन्तव्यम् । पूजाविधानन्त्वातङ्को देवता तत्रेत्यादिना परिभाषायां रोगप्रतिमादानविधावुदीरितम् । इति नासिकारोगहरमूर्तिदानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरांचितेऽत्र
द्वाविंश एष प्रथितस्तरङ्गः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे द्वाविंशस्तरङ्गः

# त्रयोविंशस्तरङ्गः

अथ नेत्ररोगहराणि कर्मविपाकसमुच्चये–

" परदृष्टिविघातेन भिषङ्मिथ्याचरेण च।
कामात्परस्त्रियं दृष्ट्वा नेत्ररोगी भवेन्नरः॥
चान्द्रायणं पराकं च पश्चाद्विप्रभोजनम्।
कुर्याद्वयं सुपर्णेन चरुणा सर्पिषा तथा॥
अष्टोत्तरसहस्रं तु जुहुयाद्रोगशान्तये।
वर्चोदा असिमन्त्रं तु जपेदाज्यं सकाञ्चनम्॥
दद्याद्विप्रायविधिव न्नेत्ररोगः प्रशाम्यति "।

भिषङ्मिथ्याचरो भिषङ्मिथ्याचरणम्। चान्द्रायणादि लक्षणानि कृच्छ्रप्रकरणे निरूपितानि। विप्रभोजनमिति। एतच्च भोजनं मुद्गप्रधानम्। " मुद्गान्नं ब्रह्मणे दद्यान्नेत्ररोगापनुत्तय " इति ब्रह्माण्डपुराणस्मरणात्। वयं सुपर्ण इत्यनया ऋचा चरुघृताभ्यां पृथक् पृथगष्टोत्तरं सहस्रं जुहुयात्। इयं च ऋक् नेत्रशूलहरप्रकरणे प्रदर्शिता। वर्चोदा असीति मन्त्रोऽपि तत्रैव। जपसङ्ख्या तु व्याध्यनुसारेण सहस्राद्ययुतान्ता कल्प्या। सकाञ्चनाज्ये स्वस्वरूपं समीक्ष्य पश्चाद्ब्राह्मणाय दद्यात्। आज्यावेक्षणमन्त्रस्तु कटिशूलहरे दर्शितः। इति नेत्र रोगहरम्। अथ नेत्रपूयहरं कर्मविपाकसङ्ग्रहे–

" दम्पतिभ्यां प्रवृत्तं तु मैथुनं यो निरीक्षते।
स नेत्रपूययुक्तः स्यादक्षिभ्यामिति मन्त्रतः॥
जपहोमौ च कर्तव्यौ शक्त्या ब्राह्मणभोजनम्।
सहस्रकलशस्नानं रवेः कुर्याद्विजोत्तमः" ॥

नेत्रपूययुक्त इति। साक्षात्पूयं वा अतिप्रचुरतरदूषिका वा पूयमित्यभिधीयते। अक्षिभ्यामितीयमृङ्मन्त्रः इयं च ऋक् रोगप्रतिमादानविधौ दर्शिता। जपहोमयोः सङ्ख्या व्याधिगुरुलघुभावेनाष्टोत्तरशताद्ययुतान्ता कल्प्या। जपहोमौचेति च शब्देन पुनरग्नी

चक्षुरुदादित्यस्य मन्त्रस्य जपहोमौ समुच्चीयते अयं च मन्त्रो जन्म आत्मन इति इन्द्रमन्त्रप्रस्तावे कूष्माण्डहोमे प्रदर्शितः। जपहोमयोः सङ्ख्या तु पूर्वोक्तैव। रवेः सहस्रकलशस्नानं महासौरेण कुर्यात्। महासौरं नाम सूर्यदैवत्या ऋचः सूक्तानि च। एतेषामार्षादि परिभाषायां प्रदर्शितम्। इदं च स्नानं सूर्यमण्डलस्य मूर्तेर्वा कुर्यात्। स्नानीयद्रव्यं च दुग्धाज्यमधिक्षुरसपुण्यतीर्थोदकानि यथाशक्त्युपपन्नानि। इति नेत्रपूयहरम्। अथ प्रकारान्तरेण नेत्ररोगहरं शातातपप्रोक्ते—

" घृतचोरस्तु पुरुषो जायते नेत्ररोगवान्।
उपोष्य संप्रदद्याद्धि घृतधेनुं विधानतः " ॥

घृतधेनुविधिश्च क्षयरोग प्रकरणे द्रष्टव्यः। इति प्रकारान्तरेण नेत्ररोगहरम्। अथान्धत्वहरम्। अन्धत्वं नाम प्रतिबद्धदृष्टित्वं नोत्पादितनेत्रत्वम्। नक्तान्ध्यत्वं वा। शातातपप्रोक्ते—

" पितृहा चेतनाहीनो मातृहाऽन्धः प्रजायते।
नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥

चेतनाहीनो निश्चेष्टो निर्बुद्धिश्च। अस्यापि वक्ष्यमाणप्रायश्चित्तमेव रोगनिष्कृतिहेतुः। नरकान्तेऽन्धः प्रजायत इत्यन्वयः। प्रायश्चित्तमाह—

" प्राजापत्यानि कुर्वीत त्रिंशच्छास्त्रविधानतः।
व्रतान्ते कारयेन्नावं सुवर्णपलसङ्ख्यया " ॥
स्तम्भं रौप्यमयं चैव ताम्रपात्रं च पूर्ववत्।

पलसङ्ख्यया पलेनेत्यर्थः। स्तंभोपि पलेनैव। पूर्ववदिति। पलैश्चतुर्भिर्द्वाभ्यां वा ताम्रपात्रं भवेन्नवमिति परिभाषोक्तप्रकारेणेत्यर्थः। एतच्च पात्रं वक्ष्यमाण वासुदेवमूर्तिस्थापनार्थम्। पलस्वरूपं परिभाषायां परिमाणप्रकरणे निरूपितम्। तथा वक्ष्यमाणनिष्कस्वरूपमपि।

हेमनिष्केन कर्तव्यो देवः श्रीवत्सलाञ्छनः।
पट्टकूलेन संवेष्ट्य पूजयेत्तं विधानतः ॥
नौका द्विजाय दातव्या सर्वोपस्करसंयुता।

नौकेत्युपलक्षणम् । स्तम्भो विष्णुप्रतिमा च दातव्या । सर्वोपस्कारेति । उपस्कारो नौका दण्डः । सोपि सौवर्ण एव । तं वासुदेवं विधानतः पूजयेदित्युक्तम् । पूजाविधानं परिभाषायां ऋग्विधानस्य पुरुषसूक्तविधावस्माभिः प्रदर्शितम् । अत्रायं क्रमः । ताम्रपात्रे वासुदेवमूर्तिं संस्थाप्य तस्य पुरस्तान्नावं स्तम्भं चोपनिक्षिप्य वासुदेवं पूर्वोक्तप्रकारेण समभ्यर्च्य नौकादिसहितां वासुदेवप्रतिमां ब्राह्मणाय दद्यादिति । दानमन्त्रमाह–

" वासुदेव जगद्वन्द्य सर्वभूताशयस्थित ।
पातकार्णवमग्नं मां तारयाश्रितवत्सल " ॥
इत्युदीर्य प्रणम्याथ ब्राह्मणं तं विसर्जयेत् ।

इत्युदीर्य मन्त्रमुच्चार्य प्रतिमादिकं दत्वा प्रणम्य विसर्जयेत् । अन्येभ्योपि यथाशक्ति विप्रेभ्यो दक्षिणां दिशेत् । इत्यन्धत्वहरं चेतनाहीनत्वहरं च । अथ नीललोचनत्वहरं शातातपप्रोक्ते–

" शाकहारी च पुरुषो जायते नीललोचनः ।
ब्राह्मणाय प्रदातव्यं महानीलमणिद्वयम् ॥

इति नीललोचनत्वहरम् । अथ कपिलाक्षत्वहरं शातातपप्रोक्ते–

रीतिहृत्कपिलाक्षः स्यादुपोष्य दिवसद्वयम् ।
रीतिं पलशतं दद्यादलंकृत्य द्विजातये ॥

रीतिर्नाम ताम्रप्रकृतिको धातुविशेषः । पित्तलकमुत्युच्यते । पलस्वरूपं परिमाणप्रकरणे निरूपितम् । इति कपिलाक्षत्वहरम् । अथ मन्ददृष्टित्वहरं कर्मविपाकसङ्ग्रहे–

"उच्छिष्टः सन्न आदित्यं पश्येदुद्यन्तमम्बरे ।
मध्यंगतमथाऽस्तं च यान्तमुच्छिष्ट एव सन् ।
नक्षत्राण्यथवा चन्द्रं स भवेन्मन्ददृष्टियुक्" ।

अत्र निष्कृतिः कूर्मपुराणे–

" घृतेन चरुणा नेत्ररश्मेर्हीनो हुताशने ।
जुहुयादयुतं सम्यगिति शास्त्रविनिश्चयः ॥
दद्याद्वै रक्तवासांसि विप्राय व्याधिशान्तये ।

रोगाधिक्ये चरुघृताभ्यां प्रत्येकमयुतं जुहुयात्। रोगाल्पत्वे तदर्द्धं चरुणाऽर्द्धं घृतेनेति मिलित्वाऽयुतस्य सङ्ख्या पूरणीया। होममन्त्रस्तु 'उद्यन्नद्यमित्र' इति तृचः। स च परिभाषायां रोगप्रतिमा दानविधौ दर्शितः। अन्नदानं विप्रेभ्यः स्वशक्त्या। वासांसीति बहुवचनात् त्रिभ्यो न न्यूनानि। इति मन्ददृष्टित्वहरम्। अथ तिमिरहरं कर्मविपाकसमुच्चये—

" देवद्विजगृहे तीर्थे पुण्यस्थाने च संस्थितम्।
प्रदीपं भञ्जयित्वा तु तिमिरव्याधिमान् भवेत्॥
रूपप्रकाशकै र्मन्त्रै रभिमन्त्र्य जलं ततः।
गात्राणि प्रोक्षयेत्तस्मान्मुक्तो भवति किल्बिषात्॥
सहस्रकलशस्नानमीश्वरस्यापि कारयेत् "।

देवद्विजगृह इति। देवगृहे द्विजगृहे। पुण्यस्थाने पुराणश्रवणादिस्थाने चतुष्पथादौ च। रूपप्रकाशकैर्मन्त्रैः। गुणवचनेन रूपशब्देन रूपवचनेन प्रकृष्टप्रकाशवानादित्यो लक्ष्यते। अतः सूर्यप्रकाशकै र्मन्त्रै जलमभिमन्त्र्य गात्राण्यङ्गानि नेत्रप्रधानानि मुखस्थितानि प्रोक्षयेद्याव द्रोगनिवृत्तिः। एतदुक्तं भवति। सौरमन्त्रेष्वन्यतमेन सलिलमष्टोत्तरशतावर्त्याऽभिमन्त्र्य तेन नेत्रप्रधानं मुखं प्रक्षालयेदिति। रूपप्रकाशकैरित्यस्यान्योऽर्थः। रूपप्रकाशकैः नेत्रगततेजःप्रकाशकैः सौरैरन्यैश्च मन्त्रैः जलमभिमन्त्र्य तेन नेत्रप्रधानं मुखं प्रक्षालयेदिति। तत्रैको मन्त्र उद्यन्नद्यतृचः सौरपरिभाषायां रोगप्रतिमादानविधौ प्रदर्शितः अन्यश्च महासौरः परिभाषायां निरूपितः। तथा पुनरग्निश्चक्षुरदादिति कूष्माण्डहोमे मिन्दामन्त्रयोर्दर्शितः। वर्चो मे देहीति च वयः सुवर्णेति च मन्त्रौ नयनशूलहरे प्रदर्शितौ। एते च मन्त्रा विकल्पेन ग्राह्याः 'एकार्था स्तु विकल्पेर न्निति न्यायात्। इति तिमिरहरम्।

अथाक्षिवेदनाहरगरुडदानं पद्मपुराणे—

" परेषामक्षिरोधेन जायते ह्यक्षिवेदना।
वक्ष्यामि तत्प्रतीकारं ब्रह्मणा भाषितं पुरा॥

पलेन कारयेद्धेम्ना गरुडं विष्णुवाहनम् ।
राजतौ च तथा पक्षौ रत्नबद्धौ सुविस्तृतौ ॥
कर्तव्यं चाक्षियुगलं माणिक्याभ्यां प्रकल्पितम् ।
पादयोः स्वर्णकटकौ रत्नाभ्यां परिकल्पयेत् ॥

रत्नाभ्यामिति । रत्नद्वययुक्तौ कटकौ कुर्यादित्यर्थः ।

ग्रैवेयकं स्वर्णमयं ग्रीवायामपि विन्यसेत् ।
नासिकायां च वैडूर्यं मौक्तिकैः परिकल्पयेत् ॥

मौक्तिकैर्युक्तं वैडूर्यमित्यर्थः ।

वस्त्रैर्नानाविधैर्नद्धमलङ्कृत्य शुभाकृतिम् ।
स्थापयेत्पुरतो विष्णोः प्रीत्यर्थं च खगाधिपम् ॥
वेदवेदाङ्गकुशलं वेदविद्याविशारदम् ।
गन्धपुष्पाक्षतै वस्त्रै र्वृणीत ब्राह्मणोत्तमम् ॥
पूजयेत्स शुचिर्भूत्वा गन्धपुष्पाक्षतादिभिः ।
होमश्च तत्र कर्तव्यो मन्त्रै स्तद्वाचकैः शुभैः ॥
यद्वा गरुडगायत्र्या समिदाज्यतिलादिभिः ।
अग्नेः प्रतिष्ठा कार्या तु स्वगृह्योक्तविधानतः ॥

विष्णोः पुरत इति । विष्णवालये विष्णोः पुरतः स्थापयित्वैतत्कर्म कुर्यादित्यर्थः । अथवा शालिग्रामस्य पुरतः कार्यम् । मन्त्रैस्तद्वाचकैरिति । तद्वाचकै गरुडप्रकाशकैः । मन्त्रैरिति बहुवचनं स्वस्व शाखागतमन्त्रोपलक्षणार्थम् । तत्रैको मन्त्रः मनोजवा अयमान इति । अस्य नेमो भार्गव ऋषिः । सुवर्णो देवता । अनुष्टुप छन्दः । विहितार्थे विनियोगः "मनोजवा अयमान आयसी मतरत्पुरम् । दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत् ॥ (ऋ. मं. ८; सू. १००; मं. ८)

गरुडगायत्री । व्यास ऋषिः । ब्रह्मा च । गायत्री छन्दः ।

गरुडो देवता विहितार्थे विनियोगः । "पक्षिराजाय विद्महे स्वर्णपक्षाय धीमहि तन्नो गरुडः प्रचोदयात्" । समिदाज्यतिलादिभिरित्यादिशब्देन चरुयवव्रीहयो गृह्यन्ते । होमसङ्ख्या च प्रतिद्रव्यमष्टोत्तरशतम् । एवं संपूज्य हुत्वा च किं कुर्यादित्यत आह–

पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ।
तस्मै हुतवते दद्यात् शौरिप्रीत्यर्थमादृतः ॥
भक्त्या सम्पूज्य विधिवत् केयूरकटकादिभिः ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥

एतच्च पुण्याहवाचनं दानानन्तरं कर्तव्यम् । दानमन्त्रमाह–

" देवदेव जगन्नाथ लक्ष्मीप्रियपरायण ।
वाहनस्य प्रदानेन हर कर्मविपाकजम् ॥
अक्षिरोगं जगन्नाथ नारायण जगन्मय ।
पुष्पं वा पटलं वापि वातरक्तमथापि वा ॥
रक्तं वाप्यथ रक्ताक्षं तथार्बुदमथापि वा "।
ततो विसृज्य विप्रेन्द्रं शिष्टैरिष्टैः स्वबन्धुभिः ॥
स्नात्वा विप्रान् भोजयित्वा सुखी भवति मानवः ।

दानानन्तरं स्नात्वा पुण्याहवाचनं विधायाज्यावेक्षणं कृत्वा विप्रान् भोजयित्वा बन्धुभिस्सार्द्धं भुञ्जीतेत्यर्थः । पुण्याहवाचनं कार्यमित्यत्रैव प्राग्विहितम्। आज्यावेक्षणं तु ब्रह्माण्डपुराणे भिहितम्। "अक्षिसंभवरोगाणामाज्यं कनकसंयुतम् । दद्याद्विप्राय विधिवत्तद्रोगस्यापनुत्तये" इति। आज्यावेक्षणमन्त्रस्तु कटिशूलहरे प्रदर्शितः। इत्यक्षिरोगहरगरुडदानम् । अथ नक्तान्ध्यहरगोपालदानं ब्राह्मे–

" नक्तान्ध्यं जायते तस्य यो गवां नयनद्वये ।
करोति शूलप्रक्षेपं तस्य वक्ष्यामि निष्कृतिम् ॥
विष्णोः श्रीगोपालवेषस्य यथाशक्ति च भक्तितः ।
सुवर्णेन प्रतिकृतिं वेणुवादनतत्पराम् ॥
बर्हापीडकसंयुक्तां द्विभुजां भुवनोत्तराम् ।
कारयित्वा शुभाकारां प्रक्षाल्य शुचिवारिणा ॥
वस्त्रेण वेष्टयित्वा च गन्धमाल्यैः समर्चयेत् ।
तण्डुलोपरि संस्थाप्य देवं शक्त्यनुसारतः ॥
आचार्यः सर्वशास्त्रज्ञो वेदवेदाङ्गपारगः ।
पूजां च मूलमन्त्रेण कुर्या देवस्य भक्तितः " ॥

शक्त्यनुसारतो उपचारैः समर्चयेदित्यन्वयः । पूजां च मूलमन्त्रेणेति । मूलमन्त्रोद्धारश्लोकश्च मन्त्रशास्त्रे–

" वृन्दामध्यगतास्नाय गोवर्णा जलमध्यगाः ।
गोपीजनवल्लभाकाः स्युर्भायस्वाहा स्मरादिकाः " ॥

उध्दृतमन्त्रः । क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा । अस्य नारद ऋषिः । गायत्री छन्दः । गोपीजनवल्लभो देवता । विहितार्थे विनियोगः ।

होमश्च तत्र कुर्वीत समिदाज्यतिलैरपि ।
इदं विष्णुः प्रतद्विष्णु र्विष्णोर्नुक मितिक्रमात् ॥
मन्त्रा गृह्योक्तमार्गेण चाग्नेः संस्थापनं भवेत् ।
जुहुयान्मूलमन्त्रेण विधिसम्पादितं चरुम् ॥
प्रणीतामोक्षपर्यन्तं कृत्वा देवं प्रपूजयेत् ।
देवस्य दद्यान्नैवेद्यं हविः सर्वं समन्ततः ॥

इदं विष्णवादयो मन्त्राः क्रमेण समिदादिहोममन्त्रा भवन्तीत्यर्थः । समिद्धोमानन्तरं पूर्वोक्तेन मूलमन्त्रेण विधिसम्पादितं स्वगृह्योक्तपूर्वपक्वचरुं हुत्वा पश्चादाज्यादिहोमः कार्यः । होम संख्या प्रतिद्रव्यमष्टोत्तरशतम् । इदं विष्णुरित्यस्य ऋष्यादि नवग्रहयज्ञप्रकरणे दर्शितम् । प्रतद्विष्णु र्विष्णोर्नुकमित्यनयोस्तु दीर्घतमा ऋषिः । विष्णुर्देवता त्रिष्टुप छन्दः । क्रमेणाज्यतिलयोर्होमे विनियोगः । प्रतत् मन्त्रः ।

प्रतद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणे ष्वधिक्षियन्ति भुवनानि विश्वा ॥
(तै. ब्रा. २; ४; ३)

विष्णोर्नुक मन्त्रः ।

विष्णोर्नु, कं, वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥
(तै. सं. १-२-१३)

एवं होमं विधाय स्वगृह्योक्तमार्गेण प्रणीताविमोक्षपर्यन्तं कर्म कृत्वा पुनरपि देवं गोपीजनवल्लभमूर्तिं प्रपूजयेत् प्रकृष्टं यथा तथा पजयेत् । अस्यां पूजायां होमार्थं सम्पादितं हविः नैवेद्यमप्यत्र

सम्पादितं सर्वमपि पक्वान्नादि। एवं नैवेद्यं दत्वा पश्चात् समन्ततो देवमभितः परितो दद्यात्। अष्टासु दिक्षु बलिं हरेदित्यर्थः। पुर्वोक्तकर्मानन्तरं कर्तव्यमाह–

ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः।
दद्याद्रोगी पूर्वमुखः प्रतिमां तां सदक्षिणाम्॥
मन्त्रेणानेन विधिवन्नमस्कृत्याथ भक्तितः।

दानमन्त्रमाह–

"गोविंद गोपीजनवल्लभेश
कंसासुरघ्न त्रिदशेन्द्रवन्द्य।
गोवर्द्धनाद्रिप्रचुरैकहस्त
संरक्षिताशेषगवामनीक॥
गोचक्षुषश्चातिनिरोधनेन
जाताक्षिमान्द्यं मम नाशयाशु।
त्वदीयदानं हि सुदृष्टरूपं
नक्तान्ध्यमेतत्समपाकरोतु"॥
एवं कृत्वा प्रतीकारं गोपवेषस्य दानतः।
अचिरादेव हि सुखी जायते नात्र संशयः॥

इति नक्तान्ध्यहरगोपालदानम्। अथ कामिलाहरगरुडदानं। वृद्धगौतमः–

"कामिली भक्तचोरः स्यात्तस्य वक्ष्यामि निष्कृतिम्।
कुर्याच्च पक्षिराजानं विष्णोर्वाहनमुत्तमम्॥
सुवर्णेन यथाशक्ति पक्षयोर्मौक्तिकद्वयम्।
नासिकायां तथा वज्रमुत्तरीयं च राजतम्।
एवं कृत्वा गरुत्मन्तं घृतद्रोणोपरि न्यसेत्।

द्रोणलक्षणं परिमाणप्रकरणे द्रष्टव्यम्।

श्वेतवस्त्रेण संवेष्ट्य श्वेतमाल्यैः समर्चयेत्॥
सर्वशास्त्रार्थतत्वज्ञो वैष्णवो धर्मपाठकः।
ब्राह्मणस्त्वर्चितो भक्त्या यजमानेन शक्तितः॥

उपचारैः षोडशाभि र्द्विजमभ्यर्चयेत्तथा ।

द्विजं पक्षिणम् । गरुत्मन्तमिति यावत् । वृतो ब्राह्मणः श्वेतवस्त्रादिभि र्द्विजमभ्यर्चयेदित्यन्वयः ।

आग्नेय्यां दिशि होमश्च कर्तव्यः स्थण्डिले शुभे ॥
समिदाज्यतिलैस्तत्र पलाशसमिधः स्मृताः ।
मन्त्रो गरुडगायत्री समिदाज्याहुतौ भवेत् ॥
तिलहोमो व्याहृतिभिस्ततः स्विष्टकृतं जपेत् ।

आग्नेय्यां दिशीत्यादि । गरुडपूजास्थानाद्धोमस्थानम् । होमसङ्ख्या तु प्रतिद्रव्यमष्टोत्तरशतम् । गरुडगायत्री श्वित्रिवेदमाहरगरुडदाने दर्शिता । स्विष्टकृतं जपेत् । स्विष्टकृद्धोमः कर्तव्यः स्वस्वगृह्योक्तप्रकारेण । तत्र कश्चन स्विष्टकृद्धोमप्रकारः कूष्माण्डप्रकरणे द्रष्टव्यः ।

स्थापये दव्रणं कुम्भं श्वेतवस्त्रेण वेष्टयेत्
निक्षिपेत्पञ्च रत्नानि मृत्तिकापि च रोचनम् ।
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात्
पञ्चत्वक्पल्लवानि स्युः पूरयेत्तीर्थवारिणा ।

स्थापयेदव्रणं कुम्भमिति । अत्र पाठक्रमो न विवक्षितः । अतो होमात्पूर्वं गरुडपूजासमय एव तदनन्तरं वा ईशान्यां दिशि-कलशं स्थापयेत् । रोचना गोरोचना । पञ्चत्वगाम्राश्वत्थवटप्लक्षोदुम्बराणाम् । पल्लवान्यपि तेषामेव । अस्मिन् कलशे नवग्रहयज्ञप्रकरणोक्तैर्वारुणमन्त्रै र्वरुणाय नम इति नाममन्त्रेण वरुणमावाह्य संपूजयेत् । एवं गरुडपूजाकलशस्थापनहोमानन्तरं कर्तव्यमाह–

तेनाभिषेकं कुर्वीत आपोहिष्ठादिभिः क्रमात् ।
हिरण्यवर्ण इति च पवमानेन चैव हि ॥

आपोहिष्ठामयोभुव इति च हिरण्यवर्ण इत्यादयो मन्त्राः परिभाषायां रोगप्रतिमादानविधौ द्रष्टव्याः । पवमानेन ' स्वादिष्ठये ' ति सूक्तेन 'पवमानः सुवर्जन' इत्यनुवाकेन च । तत्र स्वादिष्ठयेति

सूक्तं पाण्डुरोगहरपृथ्वीदाने द्रष्टव्यम् । पवमानः सुवर्जन इत्यनुवाकस्तु गणहोमप्रकरणे दर्शितः। एवमभिषेकानन्तरं किं कुर्यादित्यत आह–

ततः स्नात्वा शुची रोगी विष्णोर्वाहनमुत्तमम् ।
सदक्षिणं मुदा युक्तः प्राङ्मुखाय निवेदयेत् ॥
मन्त्रेणानेन विधिवद्ब्राह्मणाय ह्युदङ्मुखः ।
'श्रीकृष्ण परमानन्द जगतः परिपालक ।
पूर्वजन्मनि यत्पापं भक्तचौर्ये मया कृतम् ॥
तेन प्राप्तं च वैरूप्यं यन्मयात्यन्तदुःसहम् ।
कामिलोत्थमिदं देव तव वाहनदानतः
विनाशयाशु मे कृष्ण जगतां पालकोह्यसि' ॥
एवं गरुडदानं तु कृत्वा मर्त्यः सुखी भवेत् ।
आचार्यं भोजयित्वा तु प्रणिपत्य विसर्जयेत् ॥

इति कामिलाहरगरुडदानम् । अथ केकराक्षत्वशमनं । शातातपप्रोक्ते–

तरक्षौ निहते चैव जायते केकरेक्षणः ।
दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये ॥

तरक्षुर्मृगादनः । रत्नधेनुविधिस्तु क्षयरोगहरे घृतधेनुप्रसङ्गे दर्शितः । इति केकराक्षत्वहरम् । अथ पिङ्गलेक्षणत्वहरं शातातपप्रोक्ते–

मार्जारे निहते चैव जायते पिङ्गलेक्षणः ।
तेन वैडूर्यरत्नानि दातव्यानि स्वशक्तितः ॥

रत्नानीति बहुवचनं त्रिभ्योऽन्यूनत्वप्रतिपादनार्थम् । स्वशक्तित इति । त्रिष्वपि तेषु मूल्यगताल्पत्वबहुत्वद्योतनार्थं त्रिभ्योप्यधिकसङ्ख्याद्योतनार्थं च। इति पिङ्गलेक्षणत्वहरम् । अथ नेत्ररोगहरतर्पणम् । तत्रायं वैदिकमन्त्रसम्प्रदायः। तद्यथा। उद्यन्नद्येति तृचेन पच्छोर्द्धर्चशऋक्शः सार्द्धर्क्शस्ततस्तृचेनेति । पूर्वोक्त-

मार्षाद्यत्र सौकर्यार्थमभिधीयते। उद्यन्नद्येति तृचस्य काण्वः प्रस्कण्व ऋषिः। सूर्यो देवता। अनुष्टुप् छन्दः। तर्पणे विनियोगः।

ॐ उद्यन्नद्य मित्रमहः ॐ सूर्यं तर्पयामि। ॐ आरोह न्नुत्तरां दिवं ॐ सूर्यं तर्पयामि। ॐ हृद्रोगं मम ॐ सूर्यं तर्पयामि। ॐ हरिमाणं च नाशय ॐ सूर्यं तर्पयामि। ॐ शुकेषु मे हरिमाणं ॐ सूर्यं तर्पयामि। ॐ रोपणाकासु दध्मसि ॐ सूर्यं तर्पयामि। ॐ अथो हारिद्रवेषु मे ॐ सूर्यंतर्पयामि। ॐ हरिमाणं निदध्मसि ॐ सूर्यं तर्पयामि। ॐ उदगादयमादित्यः ॐ सूर्यं तर्पयामि। ॐ विश्वेन सहसा सह ॐ सूर्यं तर्पयामि। ॐ द्विषन्तं मह्यं रन्धयन् ॐ सूर्यं तर्पयामि। ॐ मो अहं द्विषते रधं ॐ सूर्यं तर्पयामि। इति पच्छः। अथार्द्धर्चशः। ॐ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं ॐ सू०। ॐ हृद्रोगं मम सूर्य हरिमाणं च नाशय ॐ सू०। ॐ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ॐ सू०। ॐ अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॐ सूर्यं०। ॐ उदगादयमादित्यो विश्वेन सहसा सह ॐ सू०। ॐ द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधंम् ॐ सू०।

इत्यर्द्धर्चशः। अथर्क्शः।

ॐ उद्यन्नद्य मित्रमह आरोहन्नुत्तरांदिवम् हृद्रोगं ममसूर्य हरिमाणं च नाशय ॐ सूर्यं तर्पयामि। ॐ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॐ सू०। ॐ उदगादयमादित्यो विश्वेन सहसा सह द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधंम् ॐ सू०।

इति ऋक्शः। अथ सार्द्धर्क्शः

ॐ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् हृद्रोगं ममसूर्य हरिमाणं च नाशय शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ॐ सू०। ॐ अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि उदगादयमादित्यो विश्वेन सहसा सह द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधंम् ॐ सूर्यं०।

एवं तृचेन पुनरपि द्विः । अस्य सकलस्यापि तर्पणप्रयोगस्य व्याध्यनुसारेणाष्टाविंशतिरष्टोत्तरशतमित्याद्यावृत्तिः कल्पनीया। अत्र तर्पणे रक्ताक्षतरक्तपुष्पाणि ग्राह्याणि। अयं तर्पणप्रकारो न केवलं नेत्ररोगहरः अपि तु ज्वरहरोपि। इति नेत्ररोगहरतर्पणम्। अथ कामिलारोगप्रतिमादानम्। तल्लक्षणं कर्मविपाकसारे—

पीताङ्गः कामिलारोगः कपालमुसलान्वितः

पूजाविधानं त्वातङ्को देवता तन्त्रेत्यादिना परिभाषायां रोगप्रतिमादानविधावाख्यातम्। इति कामिलारोगहरप्रतिमादानम्। अथ साधारण्येन नेत्ररोगप्रतिमादानम्। तल्लक्षणं कर्मविपाकसारे—

अक्षोक्षरोगस्तूणीरपाशभृद्वरदाभयः।

पूजादीतिकर्तव्यताकलापस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवतेत्यादिना दर्शितः। इति साधारण्येन नेत्ररोगप्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे<br>
मान्धातृनाम्नो मदनात्मजस्य।<br>
सत्कर्मरत्नौघचिते गतोयं<br>
ख्यातस्त्रयोविंशतया तरङ्गः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे त्रयोविंशस्तरङ्गः

# चतुर्विंशस्तरङ्गः

अथ कर्णरोगहराणि कर्मविपाकसङ्ग्रहे–

मातापितृगुरूणां च देवब्राह्मणयोस्तथा ।
शृणोति निन्दां बुध्या यः कर्णाभ्यां तस्य शोणितम् ॥
पूयं च प्रभवत्तस्य शान्तिः कृच्छ्रचतुष्टयात् ।
हिरण्यरक्तवस्त्राणां दानाद्ब्राह्मणभोजनात् ॥
जपाद्धोमाच्च भवति सौरमन्त्रेण शक्तितः ॥

शक्तित इति सर्वत्र संबध्यते । अथ कृच्छ्रेष्वपि शक्त्यनुसारेण प्राजापत्यपराकचान्द्रायणादीनि ग्राह्याणि । एतल्लक्षणानि कृच्छ्र-प्रकरणे प्रदर्शितानि । हिरण्यादिदानान्यपि शक्त्यनुसारेण कुर्वीत । जपहोमश्च सौरमन्त्रेणाष्टोत्तरशतादिः कार्यः । सौरमन्त्रश्चोद्यन्नद्य-तृचः । अस्य ऋष्यादि नेत्ररोगहरतर्पणे दर्शितम् । इति कर्णपूय शोणितहरम् । अथ कर्णकृमिहरं कर्मविपाकसमुच्चये–

सर्वाचारविहीनस्तु प्रेतश्राद्धादिभोजनः ।
स भवेत्कृमिकर्णस्तु तत्पापस्यापनुत्तये ॥
दद्यान्नीलवृषाणं च यथोक्तविधिना नरः ।

नीलवृषलक्षणं भगन्दरव्रणेऽभिहितम्–

विधानतः

" वृषदाने शुभोऽनड्वान् सशुक्लाम्बरकाञ्चनः " इत्यनेन प्रकारेण । वृषदानमन्त्रस्तु नवग्रहयज्ञे प्रदर्शितः। इति कर्णकृमिरोगहरम् । अथ बाधिर्यहरम् । शातातपप्रोक्ते–

स्वसृघाती च बधिरो नरकान्ते प्रजायते ।
तेन कार्यं विशुध्यर्थं यतिचान्द्रायणत्रयम् ॥
व्रतान्ते पुस्तकं दद्यात्सुवर्णपलसंयुतम् ।
ब्राह्मणाय चतुर्वेदविदे वस्त्रेण संयुतम् ॥
इमं मन्त्रं समुच्चार्य ब्राह्मणं तं विसर्जयेत् ।

इमं मन्त्रं समुच्चार्य पुस्तकं दद्यादित्यन्वयः ।

तमेव दानमन्त्रमाह्—

'सरस्वति जगन्मातः शब्दब्रह्माधिदेवते ।
दुष्कर्मकारिणं पापं रक्ष मां परमेश्वरि' ॥

यतिचान्द्रायणलक्षणं कृच्छ्रप्रकरणे पलप्रमाणं परिमाणप्रकरणे चाभिहितम् । इति बाधिर्यहरम् । अथ कर्णकुब्जत्वहरम् ।

शातातपप्रोक्ते—

शय्यां दद्यात्स विप्राय सोपधानां सतूलिकाम् ।

शय्यादानमन्त्रस्तु नवग्रहयज्ञप्रकरणे दर्शितः । इति कर्णकुब्जत्वहरम् । अथ कर्णरोगप्रतिमादानम् ।

तल्लक्षणं कर्मविपाकसारे—

कर्णरोगः क्वणद्घण्टः सकपालो जपन् स्थितः ॥

पूजाविधिस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिनाऽऽख्यातः । इति कर्णरोगहरप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे ।
मान्धातृनाम्नो मदनात्मजस्य ॥
सत्कर्मरत्नोपचिते गतोयं ।
ख्यात श्चतुर्विंशतया तरङ्गः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे चतुर्विंशस्तरङ्गः

# पञ्चविंशस्तरङ्गः

अथ कण्ठरोगहराणि । शातातपप्रोक्ते–

अश्वे विनिहते चैव वक्रकण्ठः प्रजायते ।
प्राजापत्यानि चत्वारि सप्तधान्यानि चोत्सृजेत् ॥
शतं पलानि दद्याच्च चन्दनं स द्विजायते ।

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणे बोद्धव्यम् । इति वक्रकण्ठरोगहरम् । अथ दीर्घगलत्वहरं शातातपप्रोक्ते–

बकघाती दीर्घगलो दद्याद्गां धवलां शुभाम् ।

गोदानमन्त्रो नवग्रहयज्ञप्रकरणे दर्शितः । इति दीर्घगलत्वहरम् । अथ कण्ठरोगहरं ब्रह्माण्डपुराणे–

अभक्ष्यभक्षदोषात्तु कण्ठरोगः प्रजायते ।
कृच्छ्रत्रयं प्रकुर्वीत दद्याद्धेनुं सदक्षिणाम् ।
दद्याद्वै कण्ठरोगाणां कम्बलं कमलोद्भव ।

कृच्छ्रलक्षणं कृच्छ्रप्रकरणे दर्शितम् । धेनुदानमन्त्रस्तु नवग्रहयज्ञप्रकरणेऽभिहितः । कम्बलदानमन्त्रस्तु–

ऊर्णाच्छादन लोकानां शीतघातभयापह ।
सर्वदुःखक्षयो यस्मादतः शान्तिं प्रयच्छमे ॥

इति कण्ठरोगहरम् । अथ विकृतस्वरत्वहरम् ।

शातातपप्रोक्ते

" उष्ट्रे विनिहते चैव जायते विकृतस्वरः ।
स तत्पापविशुध्यर्थं कृच्छ्रमेकं चरेन्नरः ॥
कर्पूरस्य पलं दद्यात् क्षरद्रव्याणि शक्तितः ।

कृच्छ्रपलयोः स्वरूपं परिभाषायां तत्तत्प्रकरणेऽभिहितम् । कर्पूरदानमन्त्रस्तु–

कर्पूरं रुचिरं विप्र गृहाणेमं सुपूजितम् ।
पुण्यगन्धस्थिता सा मे कमला प्रीयतामिति ॥

इति विकृतस्वरहरम्। अथ कण्ठरोगप्रतिमादानम्। तल्लक्षणं कर्मविपाकसारे–

कण्ठरोगः करालास्यो द्विभुजः पाशकुन्तधृक्।
कपालमालादुर्दर्शः सोष्णीषो हारभूषणः॥

पूजादीतिकर्तव्यताकलापस्तु परिभाषायामाताङ्को देवता तत्रे-त्यादिना रोगप्रतिमादानविधौ दर्शितः। इति कण्ठरोगप्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण पूर्णे
पूर्णस्तरङ्गः खलु पञ्चविंशः॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे पञ्चविंशस्तरङ्गः

# षड्विंशस्तरङ्गः

अथ पाणिरोगहराणि शातातपप्रोक्ते—

पारावते च निहते पीतपाणिः प्रजायते ।
पारावतं स सौवर्णं प्रदद्यान्निष्कमात्रकम् ॥

निष्कप्रकारः परिमाणप्रकरणेऽभिहितः। इति पीतपाणिहरम् । अथ ह्रस्वपाणित्वहरं शातातपप्रोक्ते—

कन्दमूलस्य हरणात् ह्रस्वपाणिः प्रजायते ।
देवतायतने कुर्या दुद्यानं तस्य शान्तये ॥
चान्द्रायणं च कुर्वीत ब्रह्मकूर्चं विधानतः ।

चान्द्रायणब्रह्मकूर्चयोर्विधानं कृच्छ्रप्रकरणेऽभ्यधायि । इति ह्रस्वपाणित्वहरम् । अथ स्विन्नपाणित्वहरं शातातपप्रोक्ते—

क्षारहारी च पुरुषः स्विन्नपाणिः प्रजायते ।
स दद्याच्चैव विप्राय काश्मीरं तु पलत्रयम् ॥

काश्मीरं कुङ्कुमकेसरः । तद्दानमन्त्रस्तु विकृतस्वरहरोक्तः कर्पूरदानमन्त्र एव । तत्र कर्पूरं रुचिरमित्यत्र काश्मीरं रुचिरमित्यूहः कार्यः। पलस्वरूपं परिमाणप्रकरणे निरूपितम् । इति स्विन्नपाणित्वहरम् । अथ भुजस्तम्भशमनं शातापप्रोक्ते—

अयोनौ चैव गमनात् भुजस्तम्भः प्रजायते ।
सहस्रकलशस्नानं शम्भोः पूजा यथाविधि ॥
चान्द्रायणस्याचरणा त्तप्तकृच्छ्राच्च निष्कृतिः ।

ईश्वरस्य सहस्रकलशस्नानप्रकारः पूजाप्रकारश्च रुद्रविधाने अभिषेकप्रकरणे निरूपितः। तत्र स्नाने च रुद्रानुवाको मन्त्रः। चान्द्रायण तप्तकृच्छ्रयोर्लक्षणं कृच्छ्र प्रकरणे प्रदर्शितम्। इति भुजस्तम्भशमनम्। अथ कुनखित्वहरं शातातपप्रोक्ते—

कुनखी नरकस्यान्ते जायते विप्रहेमहृत् ।
स सुवर्णपलं दद्यात्कृत्वा चान्द्रायणत्रयम्

कुनखी जायत इत्यन्वयः। पलचान्द्रायणयोर्लक्षणं तत्तत्प्रकरणेऽभिहितम्। इति कुनखित्वहरम्। अथ पाणिरोगहरप्रतिमादानम्। तल्लक्षणं चानुक्तेषु तु रोगेष्वित्यादिना शूलरोगहरप्रकरणोक्तमेवात्राप्यनुसन्धेयम्। पूजादिविधानं तु परिभाषायामातङ्को देवता तत्रेत्यादिना रोगप्रतिमादानविधौ निरूपितम्। इति पाणिरोग प्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण पूर्णे।
षड्विंश एष प्रथितस्तरङ्गः॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे षड्विंशस्तरङ्गः

# सप्तविंशस्तरङ्गः

अथ हृदयरोगहराणि शातातपप्रोक्ते–

[illegible] भुक्त्वा जायते कृमिलोदरः ।
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति ॥

गोमूत्रयावकयोर्लक्षणं कृच्छ्रप्रकरणेऽभिहितम् । इति कृमिलोदरत्वहरम् । अथ हृत्कृमित्वहरं शातातपप्रोक्ते–

अभक्ष्यभक्षणे चैव जायन्ते कृमयो हृदि ।
यथावत्तद्विशुध्यर्थमुपोष्यं भीष्मपञ्चकम् ॥

यथावत् व्रताङ्गभूतब्रह्मचर्यहविष्याशनादियुक्तमित्यर्थः । कार्तिकशुक्लैकादश्यादीनि माघशुक्लैकादश्यादीनि वा पञ्चदिनानि भीष्मपञ्चकमित्युच्यते । इति हृत्कृमिहरम् । अथ कृमिकुक्षित्वहरम् । कर्मविपाकसमुच्चये–

गजे विनिहते चाश्वे कृमिकुक्षिस्तु जायते ।

तथा

मृते भर्तरि या नारी नीलं वस्त्रं प्रधारयेत् ।
सा मृता नरकं याति कृमिकुक्षिस्ततः परम् ॥

ततः परं नरकोपभोगानन्तरम् । मानुषशरीरमासाद्येत्यर्थः ।

स नीलवृषभान् पञ्च दद्याचान्द्रायणव्रतम् ।
कुर्यात्रिंशद्द्विजा भोज्या दद्याच्छक्त्या तथौषधम् ॥

नीलवृषलक्षणं भगव्रणहरेऽभिहितम् । वृषभदानमन्त्रस्तु नवग्रहयज्ञप्रकरणेऽभिहितः । चान्द्रायणस्वरूपं तु कृच्छ्रप्रकरणेऽभ्यधायि । औषधं कृमिकुक्षिहरत्वेन वैद्यकशास्त्रोक्तम् । इति कृमिकुक्षित्वहरम् । अथ कृशोदरहरं शातातपप्रोक्ते–

भुक्त्वा चास्पृश्यसंस्पृष्टं जायते तु कृशोदरः ।
त्रिरात्रं वैष्णवं कुर्यात् पातकाद्वै स मुच्यते ॥

वैष्णवं विष्णूद्देशेन क्रियमाणं व्रतमुपवासात्मकं कुर्यादित्यर्थः । इति कृशोदरत्वहरम् । अथोदरगुल्महरम् । शातातपप्रोक्ते–

इक्षोर्विकारहारी च भवेदुदरगुल्मवान् ।
गुडधेनुः प्रदातव्या तेन तद्दोषशान्तये ॥

गुडधेनुविधिस्तु क्षयरोगप्रकरणेऽभिहितः । इत्युदरगुल्महरम् ।

अथ वातगुल्महरम् । कर्मविपाकसङ्ग्रहे—

गुरुप्रत्यर्थितां यातो गुल्मवान् जायते नरः ।

गुल्मवान् वातगुल्मवानित्यर्थः ।

आचरेत्तन्निवृत्त्यर्थं मासमेकं पयोव्रतम् ॥
मुञ्चामित्वेन सूक्तेन प्रत्यृचं चरुसर्पिषा ।
जुहुयादयुतं सम्य ग्वात आवात भेषजम् ॥
एतत्सूक्तं जपेद्दद्या दन्नदानं च शक्तितः ।

पयोव्रतस्वरूपं कृच्छ्रप्रकरणे समुपवर्णितम् । मुञ्चामित्वेति पञ्चर्चस्य प्राजापत्यो यक्ष्मनाशन ऋषिः । यक्ष्मघ्नी देवता । त्रिष्टुप् छन्दः । अन्त्यानुष्टुप् । होमे विनियोगः । मुञ्चामेति पञ्चर्चसूक्तम् । मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् । यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव । तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय । सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् । शतं यथेमं शरदो न यातीन्द्रो विश्वस्य दुरितस्य पारम् । शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः । आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव । सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् । (ऋ. मं. १० सू. १६१:). चरुसर्पिषेति । चरुणाऽयुतं सर्पिषा चायुतम् । स्वस्ति नः वात आवातु भेषज मिति तृचस्य सूक्तस्य वायन उल ऋषिः । वायुर्देवता । गायत्री छन्दः । जपे विनियोगः । जपसङ्ख्याप्ययुतमेव ।

"वात आवातु भेषजं शम्भु मयोभु नो हृद । प्रण आयुंषि तारिषत् । १ । उत वात पितासि न उत भ्रातोत नः सखा । सनो जीवातवे कृधि । २ । यददो वात ते गृहेऽ ३ मृतस्य निधिर्हितः ततो नो देहि जीवसे । ३ इति वात आवातु इति सक्तम् । ( ऋ. मं. १०; सू. १८६ ).

इति वातगुल्महरम्। अथ गुल्महरविनायकदानं पद्मपुराणे " गुल्मी स्यादन्त्यजागमे " अत्र शान्तिमयूखात् बौधायनः-

सौवर्णं राजतं ताम्रं कारयेत्कांस्यतोपि वा।
यद्वार्कमूलेन काष्ठेन गणेशं शक्तितो नरः॥
पुष्करं कल्पयेद्धैमं सौवर्णं लोचनद्वयम्।

[illegible] द्रष्टव्यम्।

आखुं च कल्पयेत्तस्य यथा देवो विनिर्मितः॥

यथा येन सुवर्णेन देवो गणेशो निर्मितस्तेनैवाखुमपि कल्पये-दित्यर्थः।

नागयज्ञोपवीतं च कल्पयेत्तस्य गुल्मवान्।
चन्दनागरुवस्त्राद्यैः पूजितं तं विनायकम्॥
सहिरण्यं ब्राह्मणाय स्वशक्त्या पूजिताय च।
कृतहोमाय शान्ताय सर्वशास्त्रार्थवेदिने॥
मन्त्रेणानेन विधिवद्दक्षिणाभिमुखाय च।

दद्यादिति शेषः। विनायकं वक्ष्यमाणमन्त्रैः पूजयित्वा तैरेव होममप्याज्येनाष्टोत्तरशतादिसहस्रान्तं व्याध्यनुसारेण विधाय ततस्तं विनायकं स्वशक्त्यनुसारेण हिरण्योपेतं ब्राह्मणाय दद्या-दित्यर्थः। दानमन्त्रमाह-

" विनायक गणेशान सर्वदेवनमस्कृत।
पार्वतीनन्दन मम गुल्ममाशु विनाशय "॥
कृतेनानेन दानेन नीरोगो जायते नरः।

विनायकपूजायां होमे च मन्त्रः। तत्र गायत्री विनायकशान्तौ दर्शिता। तथान्ये विनायकप्रकाशका मन्त्रा नवग्रहशान्तौ निरू-पिताः। तथान्येपि विनायकप्रकाशका मन्त्राः स्वस्वशाखोक्ता ग्राह्याः। इति गुल्महरविनायकदानम्। अथ गुल्मप्रतिमादानम्। तल्लक्षणं कर्मविपाकसारे-

गुल्मः कुञ्चितसर्वाङ्गो दण्डधारी भयङ्करः।
दधानः किङ्किणीमालां बद्धकेशो द्विलोचनः॥

पूजादीतिकर्तव्यता तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपिता। इति गुल्मप्रतिदानम्। अथ यकृत्प्लीह जलोदरहरं शातातपप्रोक्ते—

गर्भपातनजा रोगा यकृत्प्लीहजलोदराः।
तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम्॥
एतेषु दद्याद्विप्राय जलधेनुं विधानतः।
सुवर्णरौप्यताम्राणां पलत्रयसमन्वितम्॥

प्रायश्चित्तमिदं स्मृतमिति। इदं कर्मविपाके सामन्यप्राप्तं षड्वार्षिकमित्यर्थः। एतच्च षड्वार्षिकं साशीतिशतकृच्छ्रद इत्यनेन परिभाषायां दर्शितम्। प्रायश्चित्तप्रकारोऽपि परिभाषायामेव। जलधेनुविधानं तु क्षयरोगहरधेनुविधानप्रसङ्गे दर्शितम्। पलत्रयसमन्वितमिति। सुवर्णस्यैकं पलं रजतस्यैकं तथा ताम्रस्यापीति मिलित्वा पलत्रयं। तेन युक्तम्। पललक्षणं परिमाणप्रकरणे द्रष्टव्यम्। इति यकृत् प्लीहजलोदरहरम्। अथ प्लीहोदरहरं। कर्मविपाकसङ्ग्रहे—

भृतकाध्यापको यस्तु कन्यादूषणतत्परः।
प्लीहवान् स भवेद्विप्रो जपेच्छ्रीसूक्तमत्र हि॥
अयुतत्रयसंख्याकं प्लीहोदरविमुक्तये।
प्रत्यृचं च भवेद्धोमश्चरुणा सर्पिषा पृथक्॥

श्रीसूक्तस्य ऋष्यादि नासिकाव्रणहरप्रकरणेऽभ्यधायि। होमस्तु व्याधिशक्त्याद्यनुसारेणायुतत्रयमर्द्धदशांशो भवति। इति प्लीहोदरहरम्। अथोदरव्याधिहरं कर्मविपाकसमुच्चये—

यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः।
स भवेदुदरव्याधिपीडितो भुवि मानवः॥
कुर्यात् कृच्छ्रं चातिकृच्छ्रं चान्द्रायणमथापरम्।
सहस्रकलशस्नानमीश्वरस्य तु कारयेत्॥
जपेदयुतसङ्ख्याकं मुद्यन्नद्यतृचं तथा।
आतेपितरिसूक्तं च घृतेन चरुणा पृथक्॥

अष्टोत्तरसहस्रं हि जुहुयाच्च ततः परम् ।
मधुनाऽऽज्येन संयुक्तं हिरण्यं शक्तितो दिशेत् ॥

प्राजापत्यकृच्छ्रादिलक्षणानि कृच्छ्रप्रकरणे द्रष्टव्यानि । सहस्र-कलशस्नानं शतरुद्रेण । अस्य :त्वार्षादि रुद्रविधाने द्रष्टव्यम् । उद्वयं तृचस्यार्षादि परिभाषायां रोगप्रतिमादानविधौ । आते पितरित्यस्य त्वार्षादि [illegible] । मधुनाज्येन संयुक्तं हिरण्यमिति । त्रीण्यपि पृथक् पृथक् दद्यात् । अथवा हिरण्यं प्रधानं मधुसर्पिषी अङ्गं । यथा पृथक् पृथक् दीयते तद्दानम् । मन्त्रा अपि पृथगेव । तत्राज्यदानमन्त्रहिरण्यदानमन्त्राः प्रायश्चित्तो-पक्रमपद्धतौ दर्शिताः । मधुदानमन्त्रस्तु [illegible] । यदा तु हिरण्य प्राधान्येन मधुसर्पिषी दीयेते तदा केवलहिरण्यदानमन्त्र मेवोच्चार्य ' मध्वाज्योपेतं हिरण्यं तुभ्यमहं संप्रदद ' इति प्रयोगः कार्यः । इत्युदरव्याधिहरम् । अथ जलोदरहरं कर्मविपाकसङ्ग्रहे–

राज्ञा वा तन्नियुक्तेन नियुक्तो धर्मनिश्चये ।
पुराहितः प्राड्विवाकः सचिवो वाऽन्यथा चरेत् ॥
जलोदरत्वं प्राप्नोति तस्य वक्ष्यामि निष्कृतिम् ।
पयसा वर्तयन्मासत्रितयं व्रतमुत्तमम् ॥
सहस्रकलशस्नानं महादेवस्य चैव हि ।
भोजयेच्च शतं विप्रान्मुच्यते किल्बिषात्ततः ॥

पयोव्रतलक्षणं कृच्छ्रप्रकरणे द्रष्टव्यम् । सहस्रकलशस्नानं शत-रुद्रेण । अस्य त्वार्षादि तथा स्नानविधिश्च रुद्रविधाने प्रदर्शितम् । इति जलोदरहरम् । अथ जलोदरहरमकरदानम् । तत्र निदानं पद्मपुराणे–

उदरव्याधियुक्तस्तु भवेद्गुर्वङ्गनागमे ।

उदरव्याधिर्जलोदरव्याधिरित्यर्थः । अत्र निष्कृतिमाह बौधायनः

कुर्यात्तु मकरं सम्यग्राजतं ताम्रमेव च ।
पलत्रयेण द्वाभ्यां वा यद्वैकेन शुभाकृतिम् ॥

पुच्छे रत्नानि देयानि कटिं रौप्येण कारयेत् ।
नेत्रे स्वर्णमये कार्ये जिह्वां रीत्या प्रकल्पयेत् ॥
पादयोः प्रक्षिपेत्तत्र घृतपात्रं पुरो द्वयोः ।

यदा ताम्रेण निर्मितो मकरस्तदायं विशेषः। कटिं रौप्येण कारयेदिति । शिष्टं पक्षद्वयेपि समानम् । रीतिः पित्तलकाख्यः। पादयोः प्रक्षिपेदिति। अग्रिमपादद्वयस्य पुरतो घृतपात्रद्वयं प्रक्षिपेदित्यर्थः।

कृष्णवस्त्रेण संवेष्ट्य चन्दनागरुचर्चितम् ॥
ताम्रे तु जलपात्रे तु स्थापयेन्मकरं शुभम् ।
ब्राह्मणं वृत्तसम्पन्नं वृद्धं दान्तमलोलुपम् ॥
वस्त्रैः कटककेयूरैः पूजयेदङ्गुलीयकैः ।
होमो वरुणदैवत्यै मन्त्रैः कार्यो यथाविधि ॥

वरुणदैवत्यैरिति बहुवचनं स्वस्वशाखोक्तवारुणमन्त्रप्राप्त्यर्थम्। तत्र वरुणप्रकाशका मन्त्राः 'त्वं नो अग्ने तत्वायामी' त्यादयो मन्त्रा नवग्रहयज्ञप्रकरणेऽष्टदिक्पालावाहनप्रस्तावे दर्शिताः। होमसङ्ख्या त्वष्टोत्तरशतम् । द्रव्यमाज्यम्। होमश्च वरुणपूजां मकरपूजां च विधाय स्वगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य कार्यः । ततः किं कुर्यादित्यत्राह–

ततस्त्वौदरिको विप्रे मकरं तं निवेदयेत् ।

विप्राय दद्यादित्यर्थः । दानमन्त्रमाह–

जलानामधिदेवेश पश्चिमाशापते विभो ।
उदरव्याधिनाशं मे कुरु दानेन तोषितः ॥

इति जलोदरहरमकरदानम् । अथ यकृत्प्लीहप्रतिमादानम् । तल्लक्षणमपि कर्मविपाकसारे–

प्लीहा यकृद्गुदर्कौ च वरदाभयधारिणौ ।
कृष्णाङ्गौ पाशदुष्प्रेक्षौ खड्गदण्डभयङ्करौ ॥

गुदर्कः गुदजो रोगः । अत्र विशेषणेषु लिङ्गव्यत्ययः छान्दसः । पूजाविधानं परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रे-

त्यादिना प्रपञ्चितम्। इति यकृत्प्लीहप्रतिमादानम्। अथ महोदर प्रतिमादानम्। एतल्लक्षणमपि कर्मविपाकसमुच्चये-

" महोदरमय स्थूलः क्रूरो महिषपृष्ठगः।
खड्गचर्मधरः कान्तस्तथा पीताम्बरावृतः ॥

पूजादीतिकर्तव्यताकलापस्तु परिभाषायां रोगजनितप्रायश्चित्तविधा-वातङ्को देवता मन्त्रादिरपि दर्शितः। इति महोदरप्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नप्रकरेण पूर्णे
पूर्णस्तरङ्गः खलु सप्तविंशः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे सप्तविंशस्तरङ्गः

## अष्टाविंशस्तरङ्गः

अथ मन्दाग्निहराणि । शातातपप्रोक्ते

मन्दोदराग्निर्भवति सति द्रव्ये न वै यजेत् ॥

सति द्रव्ये कदन्नद इत्यपिपाठः ।

प्राजापत्यत्रयं कृत्वा भोजयेत्स शतं द्विजान् ।

न वै यजेदिति । नित्यनैमित्तिकानि सायं प्रातर्होमवैश्वदेव प्रायश्चित्तहोमादीन्यनापदि यो न कुर्यादित्यर्थः । प्राजापत्यलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि । इति मन्दाग्निहरम् । अथ प्रकारान्तरेण मन्दाग्निहरम् । वृद्धपाराशरः –

गोमांसखादको मन्दजठराग्निर्भवेन्नरः ।

प्राजापत्यं चरेत् कृच्छ्रमतिकृच्छ्रं तथैव च ॥

अग्निमन्त्रं जपेन्नित्यं श्रीसूक्तं च विचक्षणः ।

प्राजापत्यादिस्वरूपं कृच्छप्रकरणे निरूपितम् । अग्निरस्मीत्यग्नि-मन्त्रो वातरोगहरप्रायश्चित्ते प्रदर्शितः । श्रीसूक्तस्यार्षादि नासिका-व्रणहरेऽभिहितम् । अनयोश्च जपो यावद्रोगशान्तिः तावत् प्रति-दिनमष्टाविंशत्यादिको भवेत् । इति प्रकारान्तरेण मन्दाग्निहरम् । अथ कर्मविपाकसङ्ग्रहे मदाग्निहरं–

अकारणं गरं दत्वा प्रमापयति यः पुनः ।

स मन्दाग्निर्भवेदेव मृतकल्पश्च जायते ॥

आ ते रुद्रेण सूक्तेन चरुश्च जुहुयात् घृतम् ।

अष्टोत्तरायुतं सम्यक् तत्पापस्यापनुत्तये ॥

तामग्निवर्णामिति च जपेत्सूक्तं सहस्रकम् ।

भोजयेद्‌ब्राह्मणान् सम्यक् चत्वारिंशत्सुखी भवेत् ॥

आ ते रुद्रेणेत्यादि । आ ते पितर्मरुतामित्येतत्सूक्त मृग्विधानोक्ताऽसाध्यसर्वरोगहरे प्रदर्शितम् । तामग्निवर्णामिति सूक्तं स्त्रीस्तनस्फो-टहरेऽभ्याधायि । इति कर्मविपाकसङ्ग्रहोक्तं मन्दाग्निहरम् । अथ बौधायनोक्तं मन्दाग्निहरं मेषदानम् । बौधायनः–

अग्निमान्द्यं भवेत्तस्य यस्त्रेताग्निविनाशकः ।
वक्ष्यामि [illegible] यथोक्तं ब्रह्मणा पुरा ॥
पलेन च पलार्द्धेन तदर्द्धार्द्धेन वा पुनः ।
राजतं कारयेत्सौम्यमग्नेर्वाहनमुत्तमम् ॥

अग्नेर्वाहनं मेषः ।

सौवर्णास्तु खुराः कार्याः श्वेतवस्त्रेण वेष्टयेत् ।
श्वेतमाल्यैः श्वेतगन्धै धूपं दद्यान्मधूत्कटम् ॥
तण्डुलोपरि संस्थाप्य वाहनं पूजयेत्सुधीः ।
तण्डुलानां परीमाणं द्रोणकचतुष्टयम् ॥

द्रोणस्वरूपं परिमाणप्रकरणेऽवगन्तव्यम् । एवं पूजयित्वा पूजा-
प्रदेशादाग्नेय्यां दिशि होमः कार्य इत्याह–

आग्नेय्यां दिशि होमश्च समिदाज्यतिलैरपि ।
आचार्येण विनीतेन सर्वशास्त्रार्थवेदिना ॥
बह्वृचेन तु कर्तव्य स्तत्र मन्त्रानिमांञ्छृणु ।
अग्निर्मूर्धेति मन्त्रेण समिद्धोमः प्रशस्यते ॥
अग्ने नयेत्याज्यहोमो प्यग्निनाग्निस्तिलैस्तथा ।
मन्त्राध्यायोक्तमार्गेण तत्राग्नेः स्थापनं भवेत् ॥
प्रणीतामोक्षपर्यन्ते कृते स्नानं विधीयते ।
आपोहिष्ठेत्यपि तृचा हिरण्येति तृचेन च ॥
पवमानानुवाकेन मार्जयेद्रोगिणं शतम् ।
शन्नो वातानुवाकेन शान्तिं चापि प्रकल्पयेत् ॥
तस्मै हुतवते रोगी प्राङ्मुखाय ह्युदङ्मुखः ।
सदक्षिणं पूजिताय दद्याद्वाहनमुत्तमम् ॥
देवानां यो मुखं हव्यवाहनः सर्वपूजितः ।
तस्य त्वं वाहनं पूज्यं देवैः सेन्द्रैर्महर्षिभिः ॥
अग्निमान्द्यं पूर्वकर्मविपाकोयं तु यन्मम ।
तत्सर्वं नाशय क्षिप्रं जठराग्निं प्रवर्द्धय ॥

एवं विप्राय यो दद्यादग्नेर्वाहनमुत्तमम् ।
बलवानग्निमान् मर्त्यो जीवेद्वर्षशतं पुनः ॥
ततः स्वबन्धुभिर्विप्रैः स्नात्वा भुञ्जीत मानवः ।

अग्निर्मूर्धेत्यादि । अग्निर्मूर्धेत्ययं मन्त्रो नवग्रहयज्ञे मङ्गलपूजाद्यङ्गत्वेन प्रदर्शितः । अग्निनाग्नि रित्ययं तु मुखरोगहरगजदाने । अग्ने नयेत्यस्य अगस्त्य ऋषिः । अग्नि र्देवता । त्रिष्टुप् छन्दः । आज्यहोमे विनियोगः । अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्य स्म जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम (ऋ. मं. १; सू. १८९; मं. १) मन्त्राध्यायोक्तमार्गेणेति । मन्त्राध्यायो गृह्यम् । प्रणीतामोक्षः पात्रस्थोदकविसर्जनम् । एतदन्ते होमकर्मणि कृते सति स्नानं विधीयते । वक्ष्यमाणमन्त्रैरभिषेकः कार्य इत्यर्थः । अत्राभिषेकविधानादेवाग्निवाहनपूजाप्रदेशादीशानदिग्भागे कलशं स्थापयित्वा तत्र वरुणं नवग्रहयज्ञप्रकरणोक्तैर्मन्त्रै र्नाममन्त्रेण चावाह्य पूजयित्वा ततः पूर्वोक्तप्रकारेण हुत्वा तं रोगिणं वारुणकलशोदकेनाभिषिञ्चेत् । अभिषेकमन्त्रानाह आपोहिष्ठेत्यादिना पवमानानुवाकेनेत्यन्तेन । तत्रापो हिष्ठा मयोभुव इति तृचो हिरण्यवर्ण इति तृचश्च परिभाषायां रोगप्रतिमादानविधावुदीरिताः । पवमानः सुवर्जन इत्ययमनुवाको गणहोमप्रकरणे दर्शितः । शन्नो वातानुवाकेनेति । अनेन च स्वस्वशाखोक्ता शान्ति रुपलक्ष्यते । तत्र शन्नो वात इत्यादिः तैत्तिरीयघोषशान्तिः । तथाऽश्वलायनघोषशान्तिः परिभाषायामेव रोगप्रतिमादानविधौ निरूपिता । इत्यग्निमान्द्यहरं बौधायनोक्तं मेषदानम् । अथाजीर्णहरं कर्मविपाकसङ्ग्रहे–

अन्नहर्ता त्वजीर्णी च भवेदस्य तु निष्कृतिः ।
उपवासत्रयं कुर्यात् प्राजापत्यमथापि वा ॥
जुहुयाच्चरुसर्पिर्भ्या मग्निरस्मीत्यृचानया ।
अष्टोत्तरसहस्रं हि जुहुयाच्च जपेत्तथा ॥

उपवासत्रयप्राजापत्ययोः शरीरदार्ढ्याद्यनुसारेण व्यवस्था विज्ञेया । चरुणा सर्पिषा च (अष्टोत्तर) सहस्रं जुहुयात् । अयं च

होमो जपानन्तरम्। जपोपि सहस्रद्वयम्। अग्निरस्मीत्यस्याष्यादि वातरोगहरप्रायश्चित्ते प्रदर्शितम्। ऋग्विधाने–

यस्य भुक्तं न जीर्येत न तिष्ठेद्वा कथञ्चन।
ध्यात्वा वाऽऽतुरमन्नस्य ह्यग्निरस्मीत्यृचं जपेत् ॥

ध्यात्वा वातुरमन्नस्य इति। अन्नस्य स्मरणतः आतुरं वान्त्यादिकं [illegible]। अथ प्रकारान्तरेणाजीर्णहरं शातातपप्रोक्ते–

परान्नविघ्नकरणा दजीर्णमपि जायते।
लक्षहोमं प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥

लक्षहोम एव प्रायश्चित्तः। यद्वा समर्थश्चेल्लक्षहोममपि कृत्वा यथाविधि प्रायश्चित्तं कृच्छ्रातिकृच्छ्रचान्द्रायणादीनि व्याध्यनुसारेण व्यस्तानि समस्तानि वा कुर्वीत। लक्षहोमप्रकारश्च नवग्रहयज्ञप्रकारेण ग्रहपूजां कुण्डमण्डपादिकं च विधाय व्याहृतिभिर्गायत्र्या वा तिलव्रीहियवैर्लक्षसङ्ख्यया होमं कुर्वीत। ततो वसुधारां निवर्तयेत्। एतच्च सर्वं परिभाषायामस्माभिरभिहितम्। कृच्छ्रादिलक्षणान्यपि तत्रैव द्रष्टव्यानि। इति प्रकारान्तरेणाजीर्णहरम्। अथ मन्दाग्निप्रतिमादानम्। एतल्लक्षणन्त्वनुक्तेषु रोगेष्वित्यादिना शूलरोगप्रकरणोक्तमेवात्राप्यनुसन्धेयम्। पूजाविधान मातङ्गो देवता तत्रेत्यारभ्य परिभाषायां रोगप्रतिमादानविधावुदीरितम्। इति मन्दाग्निप्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
सत्कर्मरत्नौघनिधानमष्टा
विंशस्तरङ्गोयमगादगाधः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे अष्टाविंशस्तरङ्गः

# एकोनत्रिंशस्तरङ्गः

अथ प्रज्ञाहीनत्वहराणि। अग्निमान्द्यस्यान्तः शरीराङ्गत्वेन तत्प्रती-कारकर्मानन्तरमान्तरत्वेन बुद्धिस्थत्वादस्य प्रकरणस्य सङ्गतिः। पराशरः—

परापलापान्मर्त्यस्तु मतिहीनो भवेदसौ।
अतिकृच्छ्रं तदा कुर्याच्चान्द्रायणसमन्वितम्॥

अतिकृच्छ्रादिस्वरूपं कृच्छ्रप्रकरणे द्रष्टव्यम्।

इति प्रज्ञाहीनत्वहरम्। अथ प्रज्ञाजाड्यहरं घण्टादानं ब्रह्मवैवर्ते—

गुरुणा ह्यननुज्ञातो यो वेदाध्ययनं चरेत्।

चरेत् कुर्यादित्यर्थः। धातूनामनेकार्थकत्वात्।

स जडः प्रज्ञया हीनः संसारे जायते नरः॥
वक्ष्यामि तत्प्रतीकारं शुद्धकांस्यमयीं दृढाम्।
शोभनां कारयेद्घण्टां शुभरेखाविभूषिताम्॥
पलैस्तु कुर्याद्विंशत्या त्रिंशता वा तदर्द्धतः।
सुस्वरां तामतिश्लक्ष्णां पञ्चगव्येन धावयेत्॥

पलस्वरूपं परिमाणप्रकरणे द्रष्टव्यम्। धावयेच्छोधयेत्।

श्वेतवस्त्रेण संवीतां तण्डुलोपरि विन्यसेत्।
तण्डुलानां परीमाणं द्रोणत्रितयमिष्यते॥
तदर्द्धमथवा ग्राह्यं परिमाणं स्वशक्तितः।
आचार्यः सर्वशास्त्रज्ञो वेदवेदाङ्गपारगः॥
धर्मशास्त्रेषु कुशलो स्वाचारः संयतेन्द्रियः।
आहूय परया भक्त्या पूजयेत्तं विधानतः॥

विधानत आचार्यपूजनं नाम गन्धमाल्यवस्त्रादिभिरर्चनम्। वृतेनाचार्येण घण्टादिपूजा कर्तव्येत्याह—

तेनैव कारयेत्पूजां विधितः शास्त्रचोदितैः।
उपचारैः षोडशभि र्मन्त्रेणानेन भक्तितः॥
आवाहयेत्तु वागीशीं घण्टायां परमेश्वरीम्।

आवाहनमन्त्रः

> एह्येहि देवि सर्वेशि घण्टायां सन्निधिं कुरु ।
> सर्वशास्त्रोपकारा त्वं ज्ञानमुद्रे परात्परे' ॥
> एव मावाह्य तां घण्टां ब्रह्माणं चापि पूजयेत् ।

तां घण्टामिति । अत्र घण्टाशब्देन घण्टायामावाहिता सरस्वती लक्ष्यते । अस्यास्तु पूजा यद्वागिति तृचेन । अयं च तृगुन्मादवायुहरे प्रदर्शितः । [illegible] ब्रह्मजज्ञानामिति नवग्रहयज्ञप्रकरणेऽभिहितः । पूजानन्तरकर्तव्यतामाह–

> स्वगृह्योक्तप्रकारेण प्रतिष्ठाप्य हुताशनम् ।
> होमं कुर्यात्प्रयत्नेन समिदाज्यतिलैरपि ॥
> नैवेद्यं पायसं दद्याद्देव्यै च ब्रह्मणे तथा ।
> सरस्वति प्रेदमिति मन्त्रो वाऽत्र तु सम्मतः ॥

अत्र पूजयां होमकर्मणि च अयं वा मन्त्रो यद्वागिति तृचो वा विकल्पेन ग्राह्यः । सरस्वतिप्रेदमवेति मन्त्रप्रश्नसमाम्नायतयाऽस्या अग्निः ऋषिः । सरस्वती देवता । अनुष्टुप् छन्दः । पूजादिषु विनियोगः । सरस्वति प्रेदमव सुभगे वाजिनीवती । यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः । ( पारस्कर गृ. सू. ८. कण्डिका )

> तस्मै हुतवते दद्यात् तां घण्टां पूजिताय तु ।
> मन्त्रेणानेन विधिवद्रोगी पूर्वमुखः शुचिः ॥
> उदङ्मुखोपविष्टाय स्मृत्वा वागीश्वरीं पराम् ।
> .....

दानमन्त्रमाह–

> 'गुरोरवज्ञया यच्च स्वाध्यायाध्ययनं कृतम् ।
> सरस्वति जगन्मात र्जगज्जाड्यापहारिणि ॥
> साक्षात् ब्रह्मकलत्रं त्वं विष्णुरुद्रादिभिः स्तुता ।
> तन्मम ध्यायतोत्यर्थं[1] जाड्यं हर वरानने ॥
> घण्टादानेन तुष्टा त्वं ब्रह्मणा निर्मिता पुरा' ।
> एवं दानं तु दत्वा च तमाचार्यं क्षमाप्य च ॥
> अन्येभ्यः शक्तितो दद्याद्ब्राह्मणेभ्यश्च भोजनम् ।

---

१ तन्ममाध्ययनेच्छोश्च

ततः स्वबन्धुभिः सार्द्धं स्नात्वा भुञ्जीत मानवः ॥

एवं यः कुरुते दानं प्रज्ञाहीनो जडोपि वा ।

प्रज्ञावान् स जडो य स्तु जायते वाक्पतिर्यथा" ॥

इति प्रज्ञाजाड्यहरघण्टादानम् ।

अथ चेतनाहीनत्वहरं शातातपप्रोक्ते–

पितृहा चेतनाहीनो मातृहान्धश्च जायते ।

नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥

नरकान्ते मानुषं शरीरमासाद्य तत्र चेतनाहीनो जायत इत्यर्थः । प्रायश्चित्तस्वरूपं सविशेषं नेत्ररोगप्रकरणेऽन्धत्वहरे प्रदर्शितम् । इति चेतनाहीनत्वहरम् । अथ प्रज्ञाहीनत्वरोगप्रतिमादानम् । एतल्लक्षणन्तु चानुक्तेषु तु रोगेष्वित्यादिना शूलरोगहरप्रकरणोक्तमेवात्राप्यपि विज्ञेयम् । पूजादीतिकर्तव्यताकलापस्तु परिभाषायामातङ्को देवता तत्रेत्यादिना रोगप्रतिमादानविधावुक्तः । इति प्रज्ञाहीनत्वरोगप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे ।

मान्धातृनाम्नो मदनात्मजस्य ।

सत्कर्मरत्नौघनिधानभून ।

स्त्रिंशस्तरङ्गोयमगादगाधः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे एकोनत्रिंशस्तरङ्गः

# त्रिंशस्तरङ्गः

अथ मूत्रकृच्छ्रहराणि । शातातपप्रोक्ते-

गुरुजायाभिगमनान्मूत्रकृच्छ्रं प्रजायते ।
तेनापि निष्कृतिः कार्या शास्त्रदृष्टेन वर्त्मना ॥

शास्त्रदृष्टेन वर्त्मनेत्यनेन द्विधा निष्कृति रुच्यते । तत्रैका प्राजापत्यादिकृच्छ्ररूपा । सा च नरकाद्युपभोगेन कर्मणः क्षीणत्वात्तदनुरूपप्रायश्चित्तस्यार्द्धं तदर्द्धं वा शास्त्रानुसारेण कल्प्या । अपरां निष्कृतिमाह-

स्थापयेत्कुम्भमेकं तु पश्चिमायां शुभं[1] दिशि ।
नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम् ॥
तस्योपरि न्यसेद्देवं लोहपात्रे प्रचेतसम् ।
सुवर्णनिष्कषट्केन निर्मितं यादसां पतिम् ॥
यजेत्पुरुषसूक्तेन वरुणं विश्वरूपिणम् ।

वरुणमूर्तिस्तु पाशवरदकरा मकरवाहना च भवति ।

सामविद्ब्राह्मणेनात्र[2] सामवेदं समापयेत् ।
सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया ॥
दद्याद्विप्राय सम्पूज्य 'निष्पापः स्या'मिति ब्रुवन् ।
'यादसामधिपो देवो विश्वेषामपि पावनः ।
संसाराब्धेः कर्णधारो वरुणः पावनोऽस्तु मे ' ॥
इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि ।
दद्यादेवमलङ्कृत्य मूत्रकृच्छ्रप्रशान्तये ॥

अत्रायं प्रयोगः । स्वानुकूले शुभे दिने स्थण्डिलमुपलिप्यालङ्कृत्य तत्र पश्चिमदिग्भागे कलशं स्थाप्य तदुपर्यायसं पात्रं निक्षिप्य तत्रोक्तवरुणप्रतिमां विधाय तथा विंशतिनिष्कनिर्मितां सौवर्णीं मूत्रकृच्छ्रपुत्रिकामपि निक्षिप्य ततो वरुणं पुरुषसूक्तेन षोडशोपचारैः पूजयेत् । रोगप्रतिमां तु 'मूत्रकृच्छ्राधिदेवतायै नम'

---

१ शुभे
२ ब्राह्मणस्तत्र

इति नाममन्त्रेणार्चयेत् । अथ सामवेदविदा ब्राह्मणेन पूजित प्रतिमासन्निधौ वेदपारायणं कारयेत् । तदभावे तु बह्वृचेन वा यथासम्भवं स्वशाखाध्यायिना वा वेदपारायणं निष्पादयेत् । रोगनिवृत्तिरूपदृष्टप्रयोजनस्यैवमपि निष्पत्तेः । वेदपारायणविधिः परिभाषायामभिहितः । यावत्पारायणसमाप्तिस्तावत् प्रतिदिनं पूर्वोक्तरीत्या वरुणं रोगप्रतिमाञ्च पूजयेत् । समाप्ते च पारायणे तां रोगप्रतिमां ब्राह्मणाय दद्यात् । तत्रायं प्रयोगः । अमुकगोत्रायामुकशर्मणेऽमुकरोगशान्त्यर्थममुकप्रतिकृतिं तुभ्यमहं संप्रददे न ममेत्युच्चार्याहं निष्पापः स्यामिति ब्रुवन् प्रतिगृहीत्रे रोगप्रतिमां दद्यादिति । ततो यादसामधिप इत्यमुं श्लोकमुच्चार्य वरुणप्रतिमां तस्मा अन्यस्मै-वा विप्राय दद्यादिति । निष्कस्वरूपं परिमाणप्रकरणेऽभ्यधायि । यजेत् पुरुषसूक्तेनेति । पुरुषसूक्तेन पूजाप्रकारः परिभाषायां पुरुषसूक्तविधानेन निरूपितः । वेदपारायणविधिः परिभाषायामेव । मूत्रकृच्छ्रप्रतिमालक्षणन्त्वेतत्प्रकरणान्तेऽभिधास्यते । अथ प्रकारान्तरेण मूत्रकृच्छ्रहरं शातातप्रप्रोक्ते-

पशुयोनौ च गमना न्मूत्रकृच्छ्रः प्रजायते ।
तिलपात्रत्रयं चैव स दद्यादात्मशुद्धये ॥

तत्रैकं तिलपात्रदानप्रकारमाह विष्णुः-

ताम्रपात्रे तिलान् कृत्वा पलषोडशकल्पिते ।
सहिरण्यं स्वशक्त्या वा विप्राय प्रतिपादयेत् ॥
नाशयेत्त्रिविधं पापं वाङ्मनःकायसम्भवम् ।

प्रकारान्तरं तु कूर्मपुराणे-

तिलपूर्णं ताम्रपात्रं सहिरण्यं द्विजायते ।
प्रातर्दत्वा[1] तु विधिव दुःस्वप्नं प्रणिहन्ति सः ॥

तिलपात्रं त्रिधा प्रोक्तं कनिष्ठोत्तममध्यमम् ।
ताम्रपात्रं दशपलं जघन्यं परिकीर्तितम् ॥
द्विगुणं मध्यमं प्रोक्तं त्रिगुणश्चोत्तमं स्मृतम् ।
स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे क्षिपेत् ॥

---

१ द्यात्तु

त्रिगुणं चोत्तमे तद्वत् सुवर्णं परिकीर्तितम् ।
सुवर्णं दक्षिणां दद्यात् सर्वपापक्षयो भवेत् ॥

पलसुवर्णयोः स्वरूपं परिमाणप्रकरणे निरूपितम् । इति प्रकारान्तरेण मूत्रकृच्छ्रहरम् । अथ मूत्रकृच्छ्र हरान्तरं कर्मविपाकसमुच्चये—

मत्सरी गुरुणा यश्च विधवामभिगच्छति ।
स भवेन्मूत्रकृच्छ्री तु गुरुतल्पार्द्ध माचरेत् ॥

गुरुतल्पार्द्धं गुरुतल्पगप्रायश्चित्तस्यार्धं षाड्वार्षिकं प्रायश्चित्त माचरेत् इत्यर्थः । इति मूत्रकृच्छ्रहरान्तरम् । अथ मूत्रकृच्छ्रहरतिलपद्म दानम्। तत्र निदानं वायुपुराणे—

"सुरापो मूत्रकृच्छ्रीस्या" दिति। अत्र निष्कृतिमाह बौधायनः—

सौवर्णं कारयेत्पद्मं पलेनार्द्धपलेन वा ।
यथास्वशक्ति मतिमान् दृढमष्टदलं शुभम् ॥
वित्तशाठ्यं न कुर्वीत भवेन्निष्फलमन्यथा ।
तिलद्रोणाऽढके वापि ताम्रपात्रं जलान्वितम् ॥

निदधीतेति शेषः। द्रोणपरिमिते चाढकपरिमिते वा तिलराशौ जलपूर्णं ताम्रपात्रं निदधीतेत्यर्थः। पलद्रोणयोः परिमाणलक्षणं परिमाणप्रकरणे द्रष्टव्यम् ।

पात्रमध्ये तु तत्पद्मं निदध्यात् कुङ्कुमान्वितम् ।
ब्राह्मणं श्रुतसम्पन्नं दरिद्रं चाग्निहोत्रिणम् ॥
आहूय गन्धमाल्याद्यैर्विधिना चातिभक्तितः ।

अर्चयेदिति शेषः। एवं ब्राह्मणं समभ्यर्च्य तेन च भास्करं पद्ममध्ये पूजयित्वाऽग्नौ हुत्वा च तत्पद्मं ब्राह्मणाय वक्ष्यमाणप्रकारेण दद्यात् । तथा च बौधायनप्रोक्त एव तिलपद्मदानान्तरे—

आज्येन च तिलैर्होमः कार्यश्चाष्टोत्तरं शतम् ।
पद्मे चावाहयेद्देवं भास्करं ग्रहनायकम् ॥
" एह्येहि भगवन्देव पद्मेऽस्मिन् सन्निधिं कुरु ।
त्रयीतनो द्वादशात्मन् सहस्रैर्हेतिभिर्वृतः " ॥

इत्यावाहनमन्त्रः ।

आवाह्य तस्मिन् देवेशं पूजयेद्रक्तचन्दनैः ।
पुष्पैश्च रक्तैरपरैः कुङ्कुमागरुचन्दनैः ॥
नैवेद्यं पायसं दद्यादलाभे क्षीरमेव च। इति ।

आज्यहोमस्तिलहोमश्च व्याहृतिभिः कार्यः । एवं सम्पूज्य किं कुर्यादित्यत आह–

ततःस्वर्णमयं पद्मं दद्यान्मन्त्रेण संयुतम् ।

दानमन्त्रमाह–

खगः पूषा पतङ्गोसौ द्वादशात्मा त्रयीतनुः ।
पद्मेनानेन दत्तेन प्रीतस्तरणिरस्तु मे' ॥
कृतेनानेन मनुजो मूत्रकृच्छ्रात् प्रमुच्यते ।
मूत्रकृच्छ्रातुरस्तस्मादेतत् कुर्यात् प्रयत्नतः ॥

एतच्च पद्मदानमादित्यवासरे कार्यम् । "पद्मदानप्रयोग आदित्येऽहनि कारये" दिति बौधायनस्मरणात् । इति मूत्रकृच्छ्रहरपद्मदानम् । अथाश्मरीहरं शातातपप्रोक्ते–

मातुः सपत्नीगमने जायते चाश्मरीगदः ।
स तु पापविशुध्यर्थं प्रायश्चित्तं समाचरेत् ॥

प्रायश्चित्तमत्र त्रैमासिकम् ।

दद्याद्विप्राय विदुषे मधुधेनुं यथोदिताम् ।
तिलद्रोणशतं चैव हिरण्येन समन्वितम् ॥

मधुधेनुविधानं क्षयरोगहरे प्रदर्शितम् । द्रोणस्वरूपं तु परिमाणप्रकरणे द्रष्टव्यम् । इत्यश्मरीहरम् । अथ बहुमूत्रत्वहरं शातातपप्रोक्ते–

दुग्धचोरस्तु पुरुषो जायते बहुमूत्रवान् ।
स दद्याद्दुग्धधेनुं च ब्राह्मणाय यथाविधि ॥

दुग्धधेनुविधिरपि क्षयरोगहरे गुडधेनुप्रस्तावे द्रष्टव्यः । इति बहुमूत्रत्वहरम् । अथ प्रकारान्तरेण बहुमूत्रत्वहरं कर्मविपाकसमुच्चये–

सोदर्यागामिनो रोगो जायते बहुमूत्रता ।
पराकद्वितयं कुर्याच्चत्वारिंशद्विप्रभोजनम् ॥

आ ते सूक्तेन जुहुयादष्टोत्तरसहस्रकम् ।
सर्पिषा चरुणा तेन जपस्तावान् [1]द्विजेन तु ॥
सहस्रनाम्नां सूक्तस्य पुरुषस्य स्वशक्तितः ।
गायत्र्याश्च जपः कार्यस्तत्पापस्यापनुत्तये ॥

पराकलक्षणं कृच्छ्रप्रकरणे द्रष्टव्यम् । आते पित र्मरुतामित्येतत्सूक्तमाग्नेसूक्तम् । एतस्यार्षादि ऋग्विधानोक्तासाध्यसर्वरोगहरे निरूपितम् । रोगस्याल्पत्वे प्रत्यृचं होमः आधिक्ये सकलसूक्तावृत्या होमः । पक्षद्वयेपि चरुणा पृथक् सर्पिषा पृथक् । जपस्तावानित्यष्टोत्तर सहस्रमेव । तेन आते पितरित्यनेन सूक्तेन । सहस्रनाम्नां पुरुषसूक्तस्य गायत्र्याश्च जपः शक्तितो भवति अष्टोत्तरसहस्रादधिकं न्यूनं चेत्यर्थः । एतेषामृष्यादि परिभाषायामुदीरितम् । इति प्रकारान्तरेण बहुमूत्रत्वहरम् । अथ मूत्रकृच्छ्रप्रतिमादानम् । तल्लक्षणं कर्मविपाकसारे–

मूत्रकृच्छ्रामयः खण्डकर्तरीवज्रधृक् खरः ।

कर्तरणं कर्तरः छेदनं खण्डशः करणम् । अनेन छेदनसाधनविशेषो लक्ष्यते । तदस्यास्तीति खण्डकर्तरी । खर इति । क्रूर इत्यर्थः । पूजादीतिकर्तव्यताविशेषस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपितः । इति मूत्रकृच्छ्रप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे ।
मान्धातृनाम्नो मदनात्मजस्य ॥
सत्कर्मरत्नप्रकरेण तुङ्ग ।
स्त्रिंशस्तरङ्गोयमगादगाधः ॥

इति श्री विश्वेश्वर विरचिते मदनमहार्णवे त्रिंशस्तरङ्गः ।

[1] द्वितेन तु ।

# एकत्रिंशस्तरङ्गः

अथ प्रमेहहराणि कर्मविपाकसमुच्चये—

चाण्डालीगमनात्सर्वः प्रमेहव्याधिमान् भवेत्।
क्षुतिपपासातुरश्चैव जायते तस्य निष्कृतिः ॥
चान्द्रायणत्रयं कुर्या द्यवमध्यास्त थापरम्।

अपरं विपीलिकामध्यचान्द्रायणत्रयं चरेदित्यर्थः।

इदमाप इति द्वाभ्यामुदुत्तममथैकया ॥
जुहुयात्सर्पिषा चैतान् जपेन्मन्त्रान् समाहितः।

इदमापः प्रवहत इति द्वयोर्मेधातिथि ऋषिः। आपो देवता। अन्तेऽर्द्धे चाग्निर्देवता। अनुष्टुप् छन्दः। विहितार्थे विनियोगः। इदमापः प्रवहत यत् किं च दुरितं मयि। यद् वाहमभिदुद्रोह यद् वा शेप उतानृतम्। आपो अद्यान्वचारिषं रसेन समगस्महि। पयस्वानग्न आ गहि तं मा सं सृज वर्चसा। ऋग्द्वयं मिलित्वा एको मन्त्रः। (ऋ. मं. १ सू. २३, मं. २२, २३) उदुत्तम इत्यस्याः शुनःशेप ऋषिः। असावेव देवरात इत्यभिधीयते। वरुणो देवता। त्रिष्टुप् छन्दः। विहितार्थे विनियोगः। उदुत्तमं वरुण पाशमस्म दवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवा नागसो अदितये स्याम। (ऋ. मं. १, सू. २४, मं. १५) जपहोमयोः सङ्ख्या व्याध्यनुसारेणाष्टोत्तरसहस्राद्ययुतान्ता कल्प्या। इति सर्वप्रमेहहरम्।

अथ वातप्रमेहहरं कर्मविपाकसङ्ग्रहे

पर्वव्यवायी मनुजः कन्यागामी तथैव च।
वातप्रमेहयुक्तः स्यात् कुर्याचान्द्रायणत्रयम् ॥

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणे द्रष्टव्यम्। इति वातप्रमेहहरम्।

अथ शूलप्रमेहहरं। कर्मविपाकसंग्रहे—

तिर्यग्गामी स शूलेन प्रमेहेण युतो भवेत्।
कुर्यात् सान्तपनादीनि प्रायश्चित्तं यथाविधि ॥

सान्तपनयतिसान्तपनमहासान्तपनानीत्यर्थः। एतल्लक्षणानि च कृच्छ्रप्रकरणे दर्शितानि। इति शूलप्रमेहहरम्

अथ मधुप्रमेहहराणि कर्मविपाकसमुच्चये—

मधुमेही मातृगामी सततं जायते नरः ।
पितृभार्याभिगामी च जलमेही, नराधमः ॥
यो गच्छेद्भगिनीं नित्यमिक्षुमेहीति निश्चयः ।

पितृभार्या सपत्नी जनन्याः । सततं मधुमेही नित्यमिक्षुमेही-त्यन्वयः । एतेन रोगाधिक्यं सूच्यते ।

प्रायश्चित्तं क्रमादत्र षड्वर्षाण्यथ पञ्च च ।
त्र्यब्दमित्याचरेत्सम्यक्ततो रोगाद्विमुच्यते ॥

षडब्दं पंचाब्दं त्र्यब्दं च, क्रमात् प्रायश्चित्तं भवतीत्यर्थः। सर्वत्र सौरमन्त्रेण जपहोमौ च कर्तव्यौ । सङ्ख्या चाष्टोत्तरसहस्रम् । सौरमन्त्राश्च बहव उद्यन्नद्येत्यादयः परिभाषायां तत्र तत्र दर्शिताः । इति मधुप्रमेहादिहराणि । अथ प्रमेहघ्नं सुवर्णधेनुदानम् । वायुपुराणे

ब्राह्मणस्वर्णहारी च प्रमेही जायते नरः ।

वृद्धगौतमः

धेनुं स्वर्णमयीं कुर्यात् पूर्वेण विधिना ततः ।

पूर्वेण विधिना। पलेन तदर्द्धार्द्धेन वा पुन रित्यनेन विधिना धेनुं कुर्यादित्यर्थः। घृतास्यत्वादिकर्तव्यताकलापस्तु क्षयरोगप्रकरणे गुड-धेनुदानप्रसङ्गे निदर्शितः ।

स्वर्णशृङ्गीं च रत्नाढ्यां तथा रौप्यखुरामपि ।
तथा तत्तर्णकं कुर्यादष्टभागेन पूर्ववत् ॥
ब्राह्मणं श्रुतसम्पन्नं वैष्णवं च कुटुम्बिनम् ।
आचारवन्तं धर्मिष्ठं द्विजशुश्रूवणोद्यतम् ॥
गृहमाहूय विधिवत् पूजयेद्भूषणादिभिः ।
यथाविभवतो भक्त्या होमं पूर्ववदेव हि ॥

पूर्ववत् स्वगृह्योक्तविधिनाऽग्निप्रतिष्ठापनादि कृत्वेत्यर्थः ।

मन्त्रैस्तु वैष्णवैः सम्यक् पलाशसमिधः स्मृताः ।

होमसङ्ख्या चाष्टोत्तरशतम् । वैष्णवमन्त्रास्तद्विष्णोरित्याद्याः । तत्र तद्विष्णोरिति कूश्माण्डहोमप्रकरणे दर्शितः । अन्येपि स्वस्वशा-

खोक्तविष्णुप्रकाशका ग्राह्याः। तथा नारायणाष्टाक्षरमन्त्र आन्त्र वृद्धिहरनारायणमूर्तिदाने, गोपालमन्त्रस्तु नक्तान्ध्यहरगोपालदाने प्रदर्शितः। होमान्ते च किं कुर्यादित्यत आह–

होमान्ते तां प्रदद्याच्च मन्त्रेणानेन मेहवान्।

मन्त्रमाह–

'चक्रं सुदर्शनं यस्य राजतेऽब्जे तथैव हि।

प्रमेहं हरतु क्षिप्रं विष्णुर्गरुडवाहनः' ॥

अब्जे शङ्खपद्मे। शङ्खचक्रगदापद्मधारीत्यर्थः।

दानं प्रमेहरोगघ्न मेतत्कार्यं मनीषिभिः।

कृतेनानेन शाम्यन्ति प्रमेहा दारुणा अपि ॥

इति प्रमेहघ्नसुवर्णधेनुदानम्। अथ प्रकारान्तरेण प्रमेहहरम्। शातातपप्रोक्ते–

तपस्विनीप्रसङ्गेन प्रमेहो जायते गदः।

मासं रुद्रजपः कार्यो दद्याद्भक्त्या च काञ्चनम् ॥

तपस्विनीप्रसङ्गस्तपस्विनी गमनम्। रुद्रलक्षणं परिभाषायां रुद्रविधाने प्रदर्शितम्। काञ्चनं सुवर्णं यथाशक्ति दद्यात्। इति प्रकारान्तरेण प्रमेहहरम्। अथप्र मेहप्रतिरूपकदानम्। तल्लक्षणं च कर्मविपाकसारे–

" प्रमेहः पाणिमुद्यम्य दक्षिणं पाणिभीषणः।

पापः पार्श्वेक्षणं कुर्वन् पादघातं च गर्जति " ॥

पूजादीतिकर्तव्यताकलापस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपितः। इति प्रमेहहरप्रतिरूपकदानम्।

महार्णवाख्ये महति प्रबन्धे।

मान्धातृनाम्नो मदनात्मजस्य ॥

सत्कर्मरत्नौघनिधानमेक।

स्त्रिंशस्तरङ्गोय मगादगाधः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे एकत्रिंशस्तरङ्गः।

# द्वात्रिंशस्तरङ्गः

अथ लिङ्गहानिवृषणव्याधिहराणि । तत्र लिङ्गहानिहरं शातातपप्रोक्ते–

मातृगामी भवेद्यस्तु तस्य लिङ्गं विनश्यति ।
चण्डालीगमने चैव हीनकुष्ठः प्रजायते ॥
तस्य प्रतिक्रियां कर्तुं कुम्भमुत्तरतो न्यसेत् ।

उत्तरतः शुद्धलिप्तप्रदेश उत्तरविभाग उदकाभिपूरितं कलशं स्थापयेदित्यर्थः । अथ मृत्तिकापल्लवादीनि नवग्रहयज्ञप्रकरणे कलशस्थापनप्रस्तावोक्तानि स्थापयेत् ।

कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यादिभूषितम् ।
तस्योपरि न्यसेत् कांस्यपात्रे देवं धनेश्वरम् ॥
सुवर्णनिष्कषङ्केन निर्मितं नरवाहनम् ।
यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम् ॥

निष्कस्वरूपं परिमाणप्रकरणे बोद्धव्यम् । धनदं नरवाहनं वरदाभयकरं च कुर्यात् । यजेत्पूजयेत् । पूजाप्रकारश्च परिभाषायां पुरुषसूक्तविधाने निरूपितः ।

अथर्ववेदविधिवदथर्वणं समापयेत् ।

अथर्ववेदपारायणं कुर्यादित्यर्थः । अथ च यावद्भिर्दिनैर्वेदपारायणसमाप्तिर्भवति तावत्सु दिनेषु कुबेरपूजा यक्ष्मराजप्रतिमापूजा च कार्या । पारायणविधिस्तु परिभाषायां पुरुषसूक्तविधाने निरूपितः । अथर्ववेदविदोऽभावे बह्वृचेन वा यथालाभोपपन्नशाखाध्यायिना वा वेदपारायणं कारयेत् । अस्य कर्मणो रोगनिवृत्तिरूपदृष्टार्थोपयोगाद्वेदान्तरपारायणेनापि इष्टार्थसिद्धेः । अथर्ववेदपारायणकथनं तु यक्षरक्षः पिशाचादीनां तद्वेदप्रियत्वात् । धनदस्य यक्षराजत्वं प्रसिद्धमेव । कुबेरं प्रतिदिनमावेदपारायणसमाप्ति पूजयेदित्युक्तम् । तद्वदेव रोगप्रतिमामपि पूजयेदित्याह–

सुवर्णपुत्रिकां कृत्वा निष्कविंशति सङ्ख्यया ।
दद्याद्विप्राय सम्पूज्य 'निष्पापः स्या' मिति ब्रुवन् ॥

इयं च प्रतिमा रोगप्रतिमा । अस्य लक्षणमेतत्प्रकरणान्ते व्युत्पादयिष्यते । अत्र च 'लिङ्गहानिप्रतिमाधिदेवतायै नम' इत्यनेन मन्त्रेणै तां प्रतिमां पूजयेत् । एवं प्रतिदिनं सम्पूज्य वेदपारायणस्यान्ते अनेन प्रतिमादानेनाहं निष्पापः स्या मिति ब्रुवन्निमां प्रतिमां विप्राय दद्यात् । यथाशक्ति दक्षिणां च । धनदप्रतिमादानमन्त्रमाह–

"निधीनामधिपो देवः शङ्करस्य प्रियः सखा ।
सौम्याधि दिक्पतिः श्रीमान्मम पापं व्यपोहतु" ॥
इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि ।
दद्यादेवं लिङ्गनाशी हीनकुष्ठी च शुध्यति ॥

प्रयोगप्रकारो मूत्रकृच्छ्रप्रकरणादावुपवर्णितः । इति लिङ्गहानिहरम् । अथ षण्ढत्वहरम् । शातातपप्रोक्ते–

दुष्टवादी च षण्ढः स्यात् स च दद्याद्द्विजातये ।
रूप्यं पलत्रयं दुग्धघटत्रयसमन्वितम् ॥

पलस्वरूपं परिमाणप्रकरणे निरूपितम् । रजतदान मन्त्रस्तु प्रायश्चित्तोपक्रमपद्धतावुदीरितः । इति षण्ढत्वहरम् । अथ वृषणव्याधिहरं कर्मविपाकसङ्ग्रहे–

नृपो भृत्यादिहस्तादी नपराधं विनैव यः ।
छेदयेत्तस्य मुष्कस्तु भवेद्दग्ध इवाग्निना ॥
+शिलापृष्ठ सदृक्षश्च सव्रण+ श्चापिजायते ।
रुधिरं प्रस्रवेत्पश्चा त्तस्येयं निष्कृतिः परा ।
शतरुद्रं जपेत्सम्यगष्टोत्तरसहस्रकम् ॥
यति चान्द्रायणं चैव कुर्याद्दद्याच्च गां ततः ।

विष्णुरपि–

जायते वृषणे यस्य व्याधिः परमदारुणः ।
जपित्वा शतसाहस्रं मुच्यते रुद्रसंहिताम् ॥

---

+ शिलापट्टसमानश्च सव्रणं+ इति पाठान्तरम् ॥

रुद्रसंहिता रुद्राध्यायः । अष्टोत्तरसहस्रशतसाहस्रयोस्तु व्याधितरतमभावापेक्षया विकल्पः । अष्टोत्तरसहस्रं शतसहस्रमित्यनेन च महारुद्राऽतिरुद्रजपो लक्ष्यते । महारुद्रातिरुद्रयोर्लक्षणं रुद्रविधाने दर्शितम् । यानि चान्यप्रकरणोक्तानि कर्माणि तानि सर्वाण्यपि वृषणव्याधिहराणि विज्ञेयानि । यतिचान्द्रायणस्वरूपं कृच्छ्रप्रकरणे द्रष्टव्यम् । गोदानमन्त्रस्तु प्रायश्चित्तोक्तपमपद्धतावुक्तः । इति वृषणव्याधिहरम्

अथ लिङ्गहानिप्रतिमादानम् । तल्लक्षणं चानुक्तेषु तु रोगेष्वित्यादिना शूलप्रकरणहरोक्तमेवात्राप्यनुसन्धेयम् ।

पूजादिविधानं त्वातङ्को देवता तत्रेत्यादिना परिभाषायां रोगप्रतिमादानविधावुक्तम् । इति वृषणव्याधिप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णे
द्वात्रिंश एष प्रथितस्तरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे द्वात्रिंशस्तरङ्गः ।

# त्रयस्त्रिंशस्तरङ्गः

अथ गुदरोगहराणि शातातपप्रोक्ते

> सुरालये जले वापि सकृद्विष्ठां करोति यः ।
> गुदरोगो भवेत्तस्य पापरूपः सुदारुणः ॥
> मासं सुरार्चनेनैव गोदानाद्द्विजयेन वा ।
> प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुजः ॥

यद्यपि सुरार्चनमिति सामान्येनाभिहितं तथापि सूर्यप्राधान्येन रुद्राविष्णू पूज्यौ । 'आरोग्यं भास्करादिच्छे' दिति श्रुतेः । पूजा च स्वशक्त्याद्यनुसारेण गन्धपुष्पवस्त्रालङ्कारादिभिः । सुरार्चनगोदान-प्राजापत्याचरणेषु क्रमोपि पाठक्रम एव । तद्बाधकप्रमाणाभावात् । प्राजापत्यस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि गोदानमन्त्रस्तु कृच्छ्रोप-क्रमपद्धतौ । इति गुदरोगहरम् ।

अथ प्रस्रवद्गुदरोगहरं कर्मविपाकसङ्ग्रहे–

> विण्मूत्रोत्सर्जनं कृत्वा योऽकृत्वा शौचकर्म च ।
> भुङ्क्ते जन्मान्तरे मर्त्यो भवेत्स प्रस्रवद्गुदः ॥
> भवेच्च दारुणा पीडा तत्र कृच्छ्रातिकृच्छ्रकौ ।
> चान्द्रायणं च कर्तव्यं तथा क्षीरं च सर्पिषा ॥
> अक्षीभ्यामिति सूक्तेन सहस्रं जुहुयाच्छुचिः ।
> उद्यन्नद्यतृचं, चैव जपेत्पूर्वोक्तसङ्ख्यया ॥

कृच्छ्रादिलक्षणानि कृच्छ्रप्रकरणे निरूपितानि । सर्पिषा सहितं क्षीरं हविः । आज्यमिश्रितं दुग्धं जुहुयादित्यर्थः । अक्षिभ्यामिति सूक्तं परिभाषायां रोगप्रतिमादानविधावुदीरितम् । तथोद्यन्नृचोपि । होमस्तु प्रत्यृचम् । इति प्रस्रवद्गुदरोगहरम् । अथार्शोरोगहरं कर्म-विपाकसमुच्चये–

> दत्वाथ वेतनं यो वाप्यादायापि च वेतनम् ।
> अध्यापयेच्च जुहुयाज्जपेद्वाऽर्शोयुतो भवेत् ॥
> तन्निवृत्तौ तु कुर्वीत कृच्छ्रं चैवातिकृच्छ्रकम् ।
> चान्द्रायणं चैव तथा जपेत्सूक्तं च पौरुषम् ॥

उद्यन्नद्यतृचं विष्णुहृदयं च जपेत् सदा
तामग्निवर्णामिति च जपेत्सूक्तं समाहितः ॥
स हिरण्यं घृतं दद्या च्छ्रोत्रियाय कुटुम्बिने ।

दत्त्वाऽध्येनमित्यादि। भृतकाध्यायी भृतकाध्यापकश्चेत्यर्थः। यश्च शास्त्र विहितर्त्विक् दक्षिणादिव्यतिरेकेण स्वपरिकल्पितभृतिंगृहीत्वा परार्थं कुरुते चेत् सोऽप्यर्शोरोगयुतो भवेदित्यर्थः। कृच्छ्रादिस्वरूपाणि कृच्छ्रप्रकरणे परिभाषायां बोद्धव्यानि। पौरुषं सूक्तं पुरुषसूक्तम्। अस्य चार्षादि परिभाषायां पुरुषसूक्तविधाने गणहोमप्रकरणे दर्शितम्। उद्यन्नद्यतृचस्य तु तत्रैव रोगप्रतिमादानविधौ। विष्णुहृदयस्तोत्रमपि परिभाषायामेव। तामग्निवर्णा मित्यस्य त्वार्षादिः स्त्रीस्तनस्फोटहरे निरूपितम्। पुरुषसूक्तादीनां सर्वेषां जपे संख्या व्याधितरतमभावेनाष्टोत्तरसहस्रादिका तथा शक्त्याद्यपेक्षया शतादिका कल्पनीया। सहिरण्यं घृतंदद्यादिति। आज्ये हिरण्यं निक्षिप्याज्यावेक्षणं कृत्वा दद्यादित्यर्थः। आज्यावेक्षणमंत्रस्तु कटिशूलहरे प्रदर्शितः। तथा श्रोत्रियाय कुटुंबिने एकवर्षपर्याप्तं धनं दद्यात्। अनेनैवाभिप्रायेण ब्रह्मगीतासुवचनं समाम्नातम्। 'श्रोत्रियार्थी स्नानेय विशेषतः। असाध्यव्याधिनाग्रस्तो धनं दद्याद्विशांतये' इति। कृच्छ्रादी न्येतानि व्याधिशक्त्याद्यनुसारेण समस्तानि व्यस्तानि वा यथाबलं योज्यानि। इत्यर्शोरोगहरम्। अथार्शोरोगग्रस्तसुवर्णधेनुदानम्। तत्र निदानं पाद्मे "अर्शोवान् गोवधान्मर्त्य" इति। अत्र प्रतीकारमाह बौधायनः

सौवर्णीं गां प्रकुर्वीत पलेनार्द्धेन वा पुनः ।
वित्तशाठ्यं न कुर्वीत चतुर्थांशेन तर्णकम् ॥

पललक्षणं परिमाणप्रकरणेऽभिहितम्। तर्णको वत्सः।

रत्नशृङ्गी रूप्यखुरी नानावस्त्रैरलङ्कृतां ।
ग्रहाणामुपरि स्थाप्य नवधान्यानि विन्यसेत् ॥
होमस्तु पूर्ववत्कार्यो गोविन्दप्रीतये तथा ।

ग्रहणामुपरीति। नवग्रहस्थापनाप्रदेशादुपरीत्यर्थः। एतेन नवग्रहयज्ञोपि कर्तव्य इत्युक्तं भवति। स च परिभाषायां विशेषतो

निरूपितः। सुवर्णधेनोः पुरतो नवधान्यानि नवसंख्याकानि व्रीहिय-वादीनि सति संभवे नूतनान्येव विन्यसेत्। होमस्तु पूर्ववदिति। ग्रहयज्ञोक्तप्रकारेण ग्रहहोमः कर्तव्य इत्यर्थः। गोविन्दप्रीतय इति। सुवर्णगवां दानस्य गोविन्दप्रीत्यर्थत्वात्तदुद्देशेनापि होमस्य कर्तव्यतां दर्शयति। अस्मिन् होमे मन्त्रान् द्रव्याणि च दर्शयति

इदं विष्णुः प्रतद्विष्णु र्विष्णोर्नुक मिति क्रमात्।
समिदाज्यचरुं हुत्वा पूर्णाहुत्यन्त एव हि ॥

इदं विष्णुरित्यस्य ऋष्यादि नवग्रहप्रकरणे दर्शितम्। प्रत द्विष्णुर्विष्णोर्नुक मित्यनयोस्तु नक्तान्ध्यहरगोपालदाने। इदं विष्णु-रित्यादयोमन्त्राः समिदादि होमेषु क्रमेण भवन्ति। होमे त्वन्य एव क्रमः। समिद्धोमानन्तरं चरुहोम इति। होमसङ्ख्या तु व्याधितार-तम्येणाष्टोत्तरशतादिका कल्प्या। पूर्णाहुत्यन्त इति। पूर्णाहुत्यन्तहोमे कर्मणि निवृत्त इत्यर्थः। ततः किंकुर्यादित्यतआह–

प्रयतस्तु ततो रोगी ब्राह्मणं वेदपारगम्।
श्रुतवृत्तोपसंपन्नं कुलीनं धर्मवादिनम् ॥
वृद्धं ज्ञानोपसम्पन्न मनुद्वेगकरं नृणाम्।
भक्त्या स्वयं समानीय पूजयेत् प्रीतिपूर्वकम् ॥
अङ्गुलीयकवस्त्राद्यै रुपानत्छत्रकैरपि।
मन्त्रेणानेन तस्मै तां दद्याद्रोगी यतात्मवान् ॥
गोविन्दं मनसा ध्यायन् गवां मध्ये स्थितं शुभम्।

मंत्रेणानेन। 'गोविन्द गोपीजनवल्लभे'ति वक्ष्यमाणेन। अधुना गोविन्दध्यानश्लोकमाह–

बर्हापीडकसंयुक्तवेणुवादनतत्परम्।
गोपीजनैः परिवृतं वनपुष्पावतंसकम् ॥

दानमंत्रमाह–

गोविन्द गोपीजनवल्लभेश
कंसासुरघ्न त्रिदशेशवन्द्य।
गोदानतृप्तः कुरु मे दयालो
अर्शोविनाशं क्षपितारिवर्ग ॥

दानेनानेन नियतमर्शसो जायते क्षयः ।

तस्मात् कुर्यात् प्रयत्नेन क्षयार्थी ह्येतदर्शसः ॥

इत्यर्शोघ्नसुवर्णधेनुदानम् । अथ गुदरोगप्रतिमादानमर्शोरोग प्रतिमादानं च । तत्र गुदरोगप्रतिमालक्षणन्त्वनुक्तेष्वित्युपक्रम्य शूलरोगप्रकरणोक्तं विज्ञेयम् । अर्शोरोगप्रतिमालक्षणं तु कर्मविपाकसारे—

"अर्शोरोगः कृशो वक्रः खड्गचर्मभृदूर्ध्वदृक्" ।

उभयत्र पूजादीतिकर्तव्यता विशेषस्तु परिभाषायां रोगप्रकरणे आतङ्को देवता तत्रेत्यादिना रोगप्रतिमादानविधावुदीरितः । इति गुदरोगप्रतिमादानमर्शोरोगप्रतिमादानं च ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णे
ख्यात स्त्रयस्त्रिंशतयातरङ्गः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे त्रयस्त्रिंशस्तरङ्गः

## चतुस्त्रिंशस्तरङ्गः

अथातिसाररोगहराणि कर्मविपाकसमुच्चये–

स्मार्ताग्निं शमयेद्यस्तु सोतिसारयुतो भवेत् ।
अग्निरस्मीत्यृचं जप्त्वा दशांशं जुहुयात्तिलान् ॥
सर्पिषा चाप्लुतं दद्याद्धिरण्यं ब्राह्मणाय वै ।

स्मार्ताग्निः औपासिताग्निः । अत एवाग्न्युत्सादनप्रायश्चित्तं त्रैमासिकं कर्तव्यम् । अग्निरस्मीतीयमृग्वातरोगहरे प्रदर्शिता । जपो व्याधितरतमभावेन प्रतिदिनं यावद्रोगशान्तिरष्टोत्तरं शतं सहस्रं वा कार्यः । अथवाऽयुतमयुतद्वयादिकं वा सङ्कल्प्य परिपूर्तिः कर्तव्या । दशांशहोमेप्येवमेव । यद्यपि प्रायशस्तिलहोमेऽन्यत्र व्याहृतयो मन्त्रा दृष्टास्तथाप्यनुष्ठितमन्त्रैणैव होमस्यान्याय्यत्वात् अग्निरस्मीत्येष एव होमेऽत्र होममन्त्रः । हिरण्यं च शक्त्यनुसारेण दद्यात् । इत्यतिसारहरम् । अथातिसाररोगहरं वह्निमूर्तिदानम् । तन्निदानं पाद्मे 'अतीसारी स भवति य स्त्रेताग्नि विनाशकः' इति । अत्र प्रतीकारो बौधायनीये–

सुवर्णेनाथ ताम्रेण कुर्यात् प्रतिकृतिं बुधः ।
वह्नेः शक्त्यनुसारेण पलेनार्द्धेन वा पुनः ॥

वह्निमूर्तिलक्षणं तु चिन्तामण्यादिषु दर्शितम् ।

तथा ज्वालाकुलां रक्तचन्दनेन विलेपिताम् ।
रक्तवस्त्रेण संवीतां मेषस्योपरि संस्थिताम् ॥
रक्तमाल्यैः सुसंछन्नां मुक्तादामपरिष्कृताम् ।
कनकाचलवर्णां तां द्वादशार्कनिभां शुभाम् ॥
ब्रह्मचर्यान्विते विप्रे कनिष्ठे वाऽग्निहोत्रिणि ।
अङ्गुलीयकवस्त्राद्यै र्भूषितां तां निवेदयेत् ॥
मन्त्रेणानेन विधिवदग्निप्रीत्यर्थमादृतः ।

विप्रे कनिष्ठे वाग्निहोत्रिणीति । अकनिष्ठ इति पदविभागः । अकनिष्ठे ज्येष्ठे । स्वाचारोपेत उत्तम इति यावत् । कनिष्ठ इति

पदविभागे कनिष्ठेऽन्नुडे। तरुण इति यावत्। एवं विधे विप्रे तां प्रतिमां निवेदयेत्। विशिष्टाय विप्राय दद्यादित्यर्थः। दानमन्त्रमाह–

'त्रेतारूपोऽग्निरीड्यस्त्वमन्तश्चरसि वै नृणाम्।
त्वं वेत्थ प्राकृतनं पापमतीसारं विनाशय' ॥
एवं कृत्वा नरः सम्यगतीसारं व्यपोहति।
नीरुजस्तु सुखी नित्यं दीर्घमायुश्च विन्दति ॥

इत्यतीसारहरवह्निमूर्तिदानम्। अथ शातातपप्रोक्तातीसारहरं–

स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश।
दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान् ॥

शर्कराधेनुविधिश्च राजयक्ष्महरे दर्शितः। इति शातातपप्रोक्तातीसारहरम्। अथ रक्तातीसारहरं शातातपप्रोक्ते–

दावाग्निदायकश्चैव रक्तातीसारवान् भवेत्।
तेनोदपानं कर्तव्यं रोपणीयस्तथा वटः ॥

उदपानमिति। उदकं पीयतेऽस्मिन्नित्युदपानं कूपो वा निपानं वा प्रपा वा। इति रक्तातीसारहरम्।

अथ ग्रहणीरोगहरं कर्मविपाकसङ्ग्रहे–

अनन्यगतिकां भार्यामदुष्टां कारणं विना।
परित्यजति यः सोऽथ ग्रहणीरोगवान् भवेत् ॥
शिवसङ्कल्पसूक्तस्य जपः स्यात्तत्र शान्तये।
अष्टोत्तरं सहस्रं हि हिरण्यं च तथा मधु ॥
दद्याद्वित्तानुसारेण सौरमन्त्रजपस्तथा।

शिवसङ्कल्पसूक्तस्य चार्षादि रुद्रविधानेऽङ्गन्यासप्रस्तावे दर्शितम्। अष्टोत्तरसहस्रमित्युपलक्षणम्। व्याधितरतमभावेन सहस्रादप्यधिकं द्विगुणत्रिगुणादिकं कल्प्यम्। सौरमंत्र उद्यन्नद्यतृचः। अस्यत्वार्षादि परिभाषायां रोगप्रतिमादानविधावुदीरितम्। अत्रापि जपसङ्ख्या पूर्ववदेव। न केवलं शिवसङ्कल्पादिजप एव अपि तु धेनुमपि दद्यादित्याह–

धेनुं सलक्षणां दद्याद्वत्साभरणसंयुताम् ।
पयस्विनीं गुणोपेतां ब्राह्मणाय कुटुम्बिने ॥

वत्साभरणसंयुतां वत्सेनाभरणेन च संयुक्ताम् । इति ग्रहणीरोगहरम् । अथ ग्रहणीहरधेनुदानम् । तत्र पद्मपुराणे " ग्रहणीवानपत्यहे" ति निदानमभिहितम् । अत्र गौतमो निष्कृतिमाह–

धेनुं पयस्विनीं दद्यात् घण्टाभरणभूषिताम् ।
हेमशृङ्गीं रौप्यखुरां वासोभिर्वेष्टितां नरः ॥
नवधान्यैः समायुक्तामेकैकं द्रोणपञ्चकम् ।

नवधान्यानि व्रीहियवादीनि देशकालोचितानि । धान्यपरिमाणं दर्शितमेकैकमित्यादिना ।

सहिरण्यन्तु तान्दद्या द्ब्राह्मणाय कुटुम्बिने ।
अलोलुपाय शान्ताय धर्मज्ञाय विशेषतः ॥
होमश्च पूर्ववत्कुर्यात्समिदाज्यचरूत्कटम् ।

सहिरण्यमिति क्रियाविशेषणम् । दक्षिणार्थं यथाशक्ति सुवर्णं दद्यादित्यर्थः । पूर्ववदिति । रूप्यवृषदानवदित्युक्तं हेमाद्रौ । अत्रायमभिप्रायः । तत्र यथा स्वगृह्योक्तविधिनाऽग्निस्थापनं समिद्धोमानन्तरं चरुहोम एवमत्रापि सर्वं कार्यमिति । यद्यपि तत्र होममन्त्रा रौद्रास्तथाप्यत्र वैष्णवाः स्वस्वशाखोक्ता द्रष्टव्याः । तत्रेदं विष्णुरिति मन्त्रः कूष्माण्डहोमप्रकरणे दर्शितः । प्रतद्विष्णुर्विष्णोर्नुकमिति द्वौ मन्त्रौ नक्तान्ध्यहरगोपालदाने दर्शितौ । एते त्रयो मन्त्राः समिच्चर्वाज्यहोमेषु क्रमेण ग्राह्याः । अत्र वैष्णवमन्त्रग्रहणेऽयं हेतुः । देवकीपुत्रेत्यादिना दानमन्त्रेण विष्णोर्देवतात्वप्रतीतिः । तथाऽऽचार्येण मन्त्रे वर्णिका देवता भवतीत्युक्तम् ।

" तद्धितेन चतुर्थ्या च मन्त्रवर्णेन चेष्यते ।
देवतासङ्गतिस्तत्र दुर्बलं तु परं परमिति " ॥

होमसङ्ख्या तु प्रत्येकमष्टोत्तरशतादिका शक्त्याद्यनुसारेण कल्प्या ।

तस्मै हुतवते दद्यात् पूजितायाङ्गुलीयकैः ।
गां कृष्णां विष्णुरूपाय मन्त्रेणानेन रोगवान् ॥

मन्त्रमाह—

" देवकीपुत्र चाणूरकंसारिष्टविनाशन ।
नाशय ग्रहणीं कृष्ण गोपीजनमनोभव " ॥

कृतेनानेन दानेन ग्रहणी शान्तिमृच्छति ।
तस्मादेतत्तु कर्तव्यं ग्रहणीरोगिणा सदा ॥

इति ग्रहणीहरधेनुदानम् । अथातीसाररोगप्रतिमादानं ग्रहणीरोगप्रतिमादानञ्च । तत्रातीसारप्रतिमालक्षणमनुक्तेषु तु रोगेष्वित्युपक्रम्य शूलरोगहरप्रकरणोक्तं द्रष्टव्यम् । उभयत्रेतिकर्तव्यताकलापस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपितः । इत्यतीसाररोगप्रतिमादानं ग्रहणीरोगप्रतिमादानं च ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेण पूर्णे
ख्यातश्चतुस्त्रिंशतयास्तरङ्गः ॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे चतुस्त्रिंशस्तरङ्गः

# पञ्चत्रिंशस्तरङ्गः

अथ पादरोगहराणि। तत्र खञ्जत्वहरं स्तब्धपादत्वहरं च। शातातपः

हरिणे निहते खञ्जः सृगाले स्तब्धपादकः।
अश्वस्तेन प्रदातव्यः सौवर्णो निष्कसम्मितः।

निष्कलक्षणं परिमाणप्रकरणे द्रष्टव्यम्। निष्कपरिमितेन सुवर्णेनाश्वं कारयित्वाऽश्विनमन्त्रेणाश्वं पूजयित्वा श्रोत्रियाय दद्यादित्यर्थः। अश्विनोरश्वाधिदेवतात्वादाश्विन एव मन्त्रो ग्राह्यः। अश्विना यज्वरीरिष इत्यस्य तृचस्य मधुच्छन्दा ऋषिः। अश्विनौ देवता। गायत्री छन्दः। विहितार्थे विनियोगः।

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती।
पुरुभुजा चनस्यतम्।
अश्विना पुरुदंससा नरा शवीरया धिया।
धिष्ण्या वनतं गिरः।
दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः।
आ यातं रुद्रवर्तनी। ( ऋ. मं. १, सू. ३ ).

उपलक्षकमेतत्। अश्विनीप्रकाशका: स्वस्वशाखोक्ता मन्त्रा ग्राह्याः। अश्वदानमन्त्रस्तु नवग्रहयज्ञप्रकरणे दर्शितः। इति खञ्जत्वहरं स्तब्धपादत्वहरं च। अथ वक्रपादत्वहरं शातातपप्रोक्ते—

जायते वक्रपादस्तु निहते शुनि मानवः।
निष्कत्रयमितं दद्यात् स सौवर्णं विशुद्धये॥

स सुवर्णं विशुद्धय इत्यपि पाठः। अस्मिन् पाठे सुवर्णनिष्कत्रयस्यैव दानम्। निष्कलक्षणन्तु परिमाणप्रकरणेऽभ्यधायि। प्रथमपाठे तु सौवर्णमिति तद्धितश्रवणात् निष्कत्रयपरिमितसुवर्णनिर्मितश्वानं देवशून्या सरमायाः प्रकाशकैर्मन्त्रैः सम्पूज्य ब्राह्मणाय दद्यात्। इन्द्रस्य दूतीरिति सरमाप्रकाशकस्य मन्त्रस्य कश्यपो भूतांश ऋषिः। सरमा देवता त्रिष्टुप् छन्दः। सरमापूजायां विनियोगः।

इन्द्रस्य दूतीरिषिता चरामि मह इच्छन्ती पणयो निधीन् वः।
अतिष्कदो भियसा तन्न आवत् तथा रसाया अतरं पयांसि।
( ऋ. मं. १०, सू. १०८, मं. २ )

अन्येपि स्वस्वशाखोक्ताः तत्तद्देवताप्रकाशका मन्त्रा ग्राह्याः। इति वक्रपादत्वहरम्। अथाधिकाङ्गत्वहरं शातातपप्रोक्ते-

अजाभिघातने चैव अधिकाङ्गः प्रजायते ।
अजा तेन प्रदातव्या विचित्रवसनान्विता ॥

अजायाः प्राजापत्यत्वात् प्रजापतिलिङ्गकेन मन्त्रेण सम्पूज्य प्रजापत्युद्देशेन तामजां यथाशक्ति दक्षिणान्वितां ब्राह्मणाय दद्यात्। प्रजापते न त्व इत्यादयः प्रजापतिलिङ्गकाः मन्त्राः नवग्रहयज्ञ-प्रकरणे प्रदर्शिताः। अजादानमन्त्रोऽपि तत्रैव प्रकाशितः। इत्यधिकाङ्गत्वहरम्। अथ पादरोगहरं शातातपप्रोक्ते-

" मार्गहा पादरोगी स्यात् दश्वदानं समाचरेत् "।

अत्रापि खञ्जत्वहरोक्तप्रकारेणाश्विनोः पूजां कृत्वाऽश्वं ब्राह्मणाय दद्यात्। अयं तु विशेषः। तत्र सौवर्णाश्वेऽश्विनोः पूजा अत्र तु अक्षतपुंजादिष्वश्विनावावाह्य पूजयेदिति। इति पादरोगहरम्। अथ वल्मीकरोगहरम्। ब्रह्मगीतासु-

पतितेन तु सम्पर्के वल्मीकव्याधिमान् भवेत् ।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति ॥
सहिरण्यं घृतं दद्यात्तत्पापस्य विशुद्धये ।

यावकव्रतस्वरूपं कृच्छ्रप्रकरणे निरूपितम्। घृतदानमन्त्रस्तु प्रायश्चित्तोपक्रमपद्धतौ दर्शितः। विशेषान्तर माह-

" जायते यदि तत्रापि कृमिर्ब्रह्मविदां वर ।
प्रतिरूपं प्रदद्याद्वै रोगशान्त्यर्थमात्मनः " ॥

आत्मनो रोगशान्त्यर्थं व्याधिप्रतिरूपं प्रतिमां दद्या दित्यर्थः। प्रतिमालक्षणं तु प्रकरणान्तेऽभिधास्यते। इति वल्मीकरोगहरम्॥ अथ प्रकारान्तरेण श्लीपदरोगहरं कर्मविपाकसङ्ग्रहे-

" स्वगोत्रस्याभिगमनात् श्लीपदी जायते नरः ।
योन्यामसृक् प्रस्रवति तत्र चान्द्रायणं चरेत् ॥
मासं पयोव्रतं चैव तस्माद्रोगाद्विमुच्यते " ।

स्वगोत्रस्येत्यत्र लिङ्गमविवक्षितम्। योनिशब्देन च मैथुनसाधन-मिन्द्रियं लक्ष्यते। अतः स्त्रीपुंसयोरुभयोरपि रोगिणोरेतत्कर्म रोग-हरं भवति। चान्द्रायणपयो व्रतयोर्लक्षणं कृच्छ्रप्रकरणेऽभ्यधायि। इति श्लीपदरोगहरम्। अथ श्लीपदरोगप्रतिमादानम्। तल्लक्षणं च कर्म-विपाकसङ्ग्रहे—

"श्लीपदस्त्रिपदः कुण्ठः पतन् क्षुरधनुर्द्धर" इति।

इतिकर्तव्यताविशेषस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवतेत्यादिना निरूपितः। इति श्लीपदरोगप्रतिमादानम्। अथ पादरोगप्रतिमादानम्। एतल्लक्षणन्त्वनुक्तेषु तु रोगेष्वित्यादिना शूलरोगहरप्रकरणोक्तमत्रापि द्रष्टव्यम्। पूजादीतिकर्तव्यता तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपिता। इति पादरोगहरप्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे<br>
मान्धातृनाम्नो मदनात्मजस्य।<br>
सत्कर्मरत्नोपचितोत्र पञ्च<br>
त्रिंशस्तरङ्गोयमगादगाधः॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे पञ्चत्रिंशस्तरङ्गः

# षट्त्रिंशस्तरङ्गः

अथ त्वग्दोषहराणि कर्मविपाकसमुच्चये—

> [illegible] गुरून् प्रति ।
> परुषं भाषतेऽत्यर्थं स त्वग्दोषयुतो भवेत् ॥
> चान्द्रायणत्रयं कुर्यात्प्रदद्यादौषधानि च ।
> वैद्यकोक्तानि विप्राय शक्त्या ब्राह्मणभोजनम् ॥

वैद्यशास्त्रोक्तानि औषधानि चक्रमर्दकादीनि । चान्द्रायणस्वरूपं कृच्छ्रप्रकरणे निरूपितम् । इति त्वग्दोषहरम् । अथ दुश्चर्महरं कर्मविपाकसङ्ग्रहे—

> गुरुतल्पगदोषाच्च गवि मैथुनदोषतः ।
> दुश्चर्मा स्यादसौ कुर्या द्गुरुतल्पातिदेशतः ॥
> प्रायश्चित्तं यथाप्राप्तं ततो दोषात् प्रमुच्यते ।

गुरुतल्पातिदेशतः प्राप्तं प्रायश्चित्तं कुर्यादित्यन्वयः । षड्वार्षिकं कुर्यादित्यर्थः । व्याधिगुरुत्वे सम्पूर्णं द्वादशवार्षिकं कर्तव्यम् । कार्यस्य व्याधेर्गुरुत्वेन कारणस्य पापस्याभ्यासादिना गुरुत्वावगतेः। प्रायश्चित्तोपक्रमप्रकारस्तु प्रायश्चित्तोपक्रमपद्धतौ निरूपितः । इति दुश्चर्मत्वहरम् । अथ पामाहरं कर्मविपाकसङ्ग्रहे—

> अनुलुम्पति योऽन्येषां विषयान् पूर्वजन्मनि ।
> सोऽन्यजन्मनि पामावान् भवेत्स्रवति शोणितम् ॥
> सपूयं तन्निवृत्त्यर्थमुपवासत्रयं भवेत् ।
> भोजयेच्च द्विजान् दान्तान् पञ्चाशत्सङ्ख्यया‌ऽन्वितान् ॥

अत्रापि व्याधिगुरुलघुभावेन न्यूनाधिकभावः परिकल्पनीयः । अनुलुम्पनं विनाशनमपहारो वा। विषयाः स्रक्चन्दनानुलेपनादयः । इति पामारोगहरम् । अथ दद्रुरोगहरं उमामहेश्वरदानम् । तत्र बौधायनः—

> ब्राह्मणानथ यो हिंस्याद्दद्रुरोगी भवेन्नरः ।
> तस्योपशमनं वक्ष्ये सुवर्णेन तु कारयेत् ।

हिंस्यादापीडयेदित्यर्थः। सुवर्णः षोडशमाषात्मकः। माषप्रमाणं च परिमाणप्रकरणेऽभ्यधायि।

सुवर्णार्द्धेन वा कुर्यात् पादेनाप्य थवा पुनः।
उमामहेश्वरं रूपं वृषभाधिष्ठितं परम्॥
चतुर्भुजन्तु द्विभुजामुमां कुर्याद्विचक्षणः।
एकवक्त्रो भवेत्तत्र त्रिनेत्रश्च महाभुजः॥
अक्षमालां त्रिशूलं च तस्य दक्षिणहस्तयोः।
देवीपृष्ठगतस्त्वेको वरदश्चापरः करः॥
वामोत्सङ्गे गता देवी शिवपृष्ठैकपाणिका।
वृषभो रूप्यतः कार्यो घण्टयाऽलङ्कृतो भवेत्॥

रूप्यतः रूप्येण। स्वशक्त्या वित्तशाठ्यं तु कुर्वतो निष्फलं भवेत्।

तस्मिन्नारोप्य देवेशमुमया सहितं प्रभुम्।
वस्त्रैर्माल्यैस्तथा गन्धै मूलमन्त्रेण पूजयेत्॥

मूलमन्त्रः शैवपञ्चाक्षरः। स च शूलरोगहरे त्रिशूलदाने दर्शितः। होमे रुद्रगायत्री। 'मन्त्रश्च रुद्रगायत्र्या सर्वत्रेति विनिश्चितः'। इति अग्रे वक्ष्यमाणत्वात्। सर्वत्रेति सर्वशब्दस्य पूजाव्यतिरिक्तो होमो विषयः। अथवा मूलमन्त्रो रुद्रगायत्री। अतः सर्वत्र पूजादावपि विकल्पेनाङ्गभावं भजते। यतो होमे विकल्पेन मन्त्रा विधास्यंते। पूजानन्तरकर्तव्यमाह—

ततो ब्राह्मणमाहूय दरिद्रं धर्मकोविदम्।
श्रुतवृत्तोपसम्पन्नं शान्तं चैवात्मवेदिनम्॥
वस्त्राङ्गुलीयकैस्तस्य पूजां भक्त्या प्रकल्पयेत्।
होमं च कारये त्तेन समिदाज्यतिलैरपि॥
मन्त्रश्च रुद्रगायत्री सर्वत्रेति विनिश्चयः।

रुद्रगायत्री लिङ्गपुराणेऽभिहिता।

"सर्वेश्वराय विद्महे शूलहस्ताय
धीमहि। तन्नोरुद्रः प्रचोदयात्"।

अस्याः श्रीवेदव्यास ऋषिः। श्रीरुद्रो देवता। गायत्री छन्दः। विहितार्थे विनियोगः। एवं रुद्रगायत्री पूजायां होमे च सर्वत्रापि विनियोज्या। समिदाज्यतिलहोमेषु क्रमेण मन्त्रान्तरा अपि विकल्पेन विनियुक्ताः–

यद्वा त्र्यम्बकेनैव समिद्धोमं जुहुयात्सुधीः।
कद्रुद्राय मन्त्रेण जुहुयादाज्यमाहृतः॥
तिलांश्च मूलमन्त्रेण त्वेवं मन्त्रक्रमो भवेत्।

होमसङ्ख्या प्रत्येकमष्टोत्तरशतम्। त्र्यम्बकमन्त्रस्यार्षादिपुष्णज्वरे दर्शितम्। कद्रुद्रायेत्यस्याः कण्व ऋषिः। रुद्रो देवता। गायत्री छन्दः। आज्यहोमे विनियोगः।

“कद्रुद्राय प्रचेतसे मीढुष्टमाय
तव्यसे। वोचेम, शन्तमं, हृदे”॥ (ऋ.मं. १, सू. ४३, मं. १)

मूलमन्त्रः पञ्चाक्षरो वा रुद्रगायत्री। होमानन्तरकर्तव्यतामाह–

तथा ब्रह्मोद्वासनान्ते मिथुनं ब्राह्मणाय तु।
वृषभोपरि विन्यस्तं भक्त्या तु विनिवेदयेत्॥
मन्त्रेणानेन विधिवद्दद्रुरोगी जितात्मवान्।

ब्रह्मोद्वासनं नाम स्वगृह्योक्तप्रकारेण ब्रह्मण ऋत्विजो विसर्जनम्। मिथुनमुमामहेश्वरात्मकम्। दानमन्त्रमाह–

‘कैलासवासी भगवानुमया सहितः परः।
त्रिनेत्रश्च हरो दद्रुरोगमाशु व्यपोहतु’॥
ततश्च ब्राह्मणान् सम्यक् प्रणिपत्य क्षमापयेत्।
ब्राह्मणान् भोजयेच्चापि स्वयं भुञ्जीत वाग्यतः॥
एवं दत्वा महादानं दद्रुरोगात् प्रमुच्यते।

इति दद्रुरोगहरमुमामहेश्वरदानम्। अथ लूतकित्वहरं शातातपः–

गोत्रहा लूतकी चैव प्राजापत्यशतं चरेत्।
व्रतान्ते मेदिनीं दद्याच्छृणुयाच्चैव भारतम्॥

भूमेरभावे मेदिनीप्रतिनिधित्वेन गां पयस्विनीमलङ्कृतां दद्यात्। गोदानमन्त्रस्तु नवग्रहयज्ञप्रकरणे दर्शितः। प्राजापत्यलक्षणं कृच्छ्र-प्रकरणेऽभिहितम्। भारतश्रवणप्रकारस्तु महाभारत एव प्रदर्शितः।

अतः परं प्रवक्ष्यामि यानि देयानि भारत।
याच्यमानेतु विप्रेभ्यो राजन् पर्वणि पर्वणि॥

स्वस्ति वाच्य विधानादौ ततः कार्यं प्रवर्त्तते।
समाप्ते पर्वणि ततः स्वशक्त्या तर्पयेत् द्विजान्॥

आदौ तु वाचकं पूज्य रसगन्धसमन्वितम्।
विधिवद्भोजयेद्राजन् मधुपायसमुत्तमम्॥

ततो मूलफलप्रायं पायसं मधुसर्पिषा।
आस्तीके भोजयेत्प्राज्ञं दद्याच्चैव गुडोदनम्॥

स्वस्ति वाच्येत्यादि। विधिर्विधानं पुराणपाठः। तस्यादौ स्वस्ति वाच्य स्वगृह्योक्तप्रकारेण स्वस्तिवाचनं विधाय। ततः कार्यं प्रवर्त्तते। पुस्तकपूजानन्तरं भारतपाठरूपं कार्यं प्रवर्त्तते। यत् पर्वणोऽशस्य यत्खण्डस्यवा श्रोतुमिच्छा तत्पाठयेदित्यर्थः। ततः कार्यं प्रवर्तत इत्यनेनैव कार्यान्तरमपि सूच्यते। स्वस्तिवाचनं विधाय ततस्तदनन्तरं कार्यं कृत्यं स्रक्चन्दनवस्त्रताम्बूलालङ्कारादिभिर्वरणरूपं कार्यं प्रवर्त्तते। ततः पुराणपाठ इति। एत च सर्वपुराणसाधारणम्। तथा समाप्तौ ब्राह्मणभोजनं स्वशक्त्या। पुराणपाठकपूजा च सर्वपुराण-साधारणम्। आदौ तु वाचकं संपूज्येति। समाप्त्यनन्तरमादौ प्रथमतः वाचकं पाठमात्रप्रवक्तारं संपूज्य। पश्चात्तदर्थव्याख्यातारं पूजयित्वा तत इतरान् द्विजान् तर्पयेत्। उक्तप्रकारेण पूजयेत्भोजये-च्चेत्यर्थः। आस्तीक इति। पूर्वोक्तमधुपायसाद्यास्तीके दद्यादित्यन्वयः। आस्तीक इत्यत्रैकवचनमविवक्षितम्। प्राज्ञं विद्वांसम्। अत्राप्ये-कवचनमविवक्षितम्। एवमादिपर्वण्यभिधाय सभापर्वादिषु क्रमेणाह—

अथ धूपैश्च दीपैश्च मोदकैश्च समन्वितम्।
सभापर्वणि राजेन्द्र हविष्यं भोजयेत् द्विजान्॥

हविष्यं व्रीहिगोधूममुद्गदुग्धपायसादि ।

आरण्यके मूलफलै स्तर्पयेच्च द्विजोत्तमान् ।
आरण्यपर्व चासाद्य जलकुम्भान् प्रदापयेत् ॥
तर्पणानि च मुख्यानि धान्यमूलफलानि च ।

तर्पणानि सक्तुचूर्णानि द्राक्षाखर्जूरादीनि ।

सर्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ।
विराटपर्वणि तथा वासांसि विविधानि च ॥

तथेत्यनेन ब्राह्मणभोजनमनुकृष्यते ।

उद्योगं भरतश्रेष्ठ सर्वकामसमन्वितम् ।
भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान् ॥
भीष्मपर्वणि राजेन्द्र दद्याद्दानमनुत्तमम् ।

अनुत्तमं दानं गोदानादि ।

ततः पर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
द्रोणपर्वणि विप्रेभ्यो भोजनं परमार्चितम् ॥
शराश्च देया राजेन्द्र चापान्यसिवरास्तथा ।
कर्णपर्वण्यपि तथा भोजनं सर्वकामिकम् ॥
विप्रेभ्यः संस्कृतं सम्यक् दद्यात्संयतमानसः ।
शल्यपर्वणि राजेन्द्र मोदकैः सगुडोदनैः ॥
सधूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् ।
गदापर्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् ॥
सौप्तिके च समावृत्ते सदन्नैर्भोजयेत् द्विजान् ।
स्त्रीपर्वणि तथा रत्नै स्तर्पयेद्विधिवत् द्विजान् ॥
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
शान्तिपर्वण्यपि तथा भोजनं सर्वकामिकम् ॥
तथाग्र्यमणिवासांसि हविष्यं भोजयेत् द्विजान् ।

अग्र्यमणिवासांसि दद्यादित्यर्थः ।

मौसले सार्वगुणिकं गन्धमाल्यानुलेपनम् ।
हरिवंशे तथा पार्थ पायसं चरुभोजनम् ॥
पारणे पारणे राजन्यथावत् भरतर्षभ ।

पारणे पारण इति । इतरसर्वपारणे पारणे पाठे पाठे यथावत् पूर्वोक्तप्रकारेण ब्राह्मणभोजनादिभिर्यथाशक्ति भोजयेदित्यर्थः ।

समाप्य सर्वं प्रयतः संहितां शास्त्रकोविदः ।
शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृतम् ॥
शुक्लाम्बरधरस्तत्र शुचि भूत्वा स्वलङ्कृतः ।
अर्चयेत्तु यथान्याय्यं गन्धमाल्यैः पृथक् पृथक् ॥
संहितापुस्तकं तत्र प्रयतः सुसमाहितः ।
भक्ष्यैर्भोज्यैश्च पूपैश्च कौतुकैर्विविधैः शुभैः ॥
हिरण्यं च सुरौप्यं च दक्षिणां तत्र दापयेत् ।

पूपैः अपूपैः । कौतुकै र्गीतनृत्यादिभिः । सुवर्णं षोडशमाषात्मकम् । एतच्च पुराणश्रावयितुर्दक्षिणा । तथा स्वशक्त्यनुसारेण हिरण्यं तस्मा अन्येभ्यश्च दक्षिणां दद्यात् ।

देवताः कीर्तयेत्सर्वा नरनारायणौ तथा ।
ततो गन्धैश्च माल्यैश्च स्वलङ्कृत्य द्विजोत्तमान् ॥
तर्पयेद्विविधैः कामै र्धान्यै रत्नाधिकैस्तथा ।
भुक्तवत्सु च विप्रेषु यथावत् संप्रवाचयेत् ॥
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलङ्कृतम् ।
ब्राह्मणेषु प्रसन्नेषु प्रसन्नास्तस्य देवताः ॥
वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा ।
ततो विवरणं कार्यं संहितानां च भारत[1] ॥

भुक्तवत्सु च विप्रेष्वित्यारभ्य विवरणं कार्यं संहितानां भरतर्षभ इत्यनेन पुराणोपक्रमप्रकारोऽभिहितः । इतरपुस्तकपूजाद्युपक्रमोपसंहारयो र्यथोचित्तं योजनं कार्यम् ।

इतिहासमिमं श्रुत्वा यथावदनुपूर्वशः ।
संयतात्मा शुचिर्भूत्वा पारं गत्वा तु भारते ॥
तेषां श्राद्धानि देयानि श्रुत्वा श्रुत्वा तु भारतम् ।

श्रद्धया दीयत इति श्राद्धानि । तानि च पर्वोपक्रमोपसंहारयोर्यथोचितं समाप्तौ च पूर्वं दर्शितानि ।

१ नरर्षभ

ब्राह्मणेभ्यो यथाशक्ति दद्याच्च भरतर्षभ ।
महादानानि देयानि रत्नानि विविधानि च ॥
गावः कांस्योपदोहाश्च सवत्साः सुमनोहराः ।
सर्वकामगुणोपेतानि धान्यानि विविधानि च ॥
भूषणानि विविधानि भूमिं वासांसि काञ्चनम् ।
वाहनानि च देयानि हृष्टा मत्ताश्च वारणाः ॥
शयनं शिबिका श्चैव स्यन्दनाश्च स्वलङ्कृताः ।
यद्यद्गृहे वरं किञ्चित् किञ्चिदस्ति महद्वसु ॥
तत्तद्देयं द्विजातिभ्य आत्मा दासाश्च सूनवः ।
श्रद्धया परया दद्यात् क्रमशः पाठपारगः ॥

आत्मा दासाश्च सूनव इति । एतच्च कैमुत्तिकन्यायेनेतरवस्तूनां कुटुम्बाविरोधेन देयत्वप्रतिपादनार्थम् । न त्वात्मसून्वो देयत्वप्रतिपादनाय । अथवाऽऽत्मा अन्तःकरणं तस्य दानमवंचनम् । दासाश्चसूनवः पुत्रसमा दासा इत्यर्थः ।

भक्तितः सन्मना भूत्वा सुश्रुतश्च विमत्सरः ।
एवं करोति यो विद्वान् दानं पर्वप्रतिष्ठितम् ॥
सर्वयज्ञफलं प्राप्य स देवैः सह मोदते ।
यश्चानेन प्रकारेण भारतं श्रावयेन्नरः ॥
तथा दानस्य माहात्म्याल्लोकानुद्धरते ह्यसौ ॥

लोकान् स्वर्गादिलोकानुद्धरत आत्मसात्करोतीत्यर्थः। इति महा भारतहरिवंशेतरपुराणानां च श्रवणविधिः। इति लूतिकत्वहरम् । अथ बर्बराङ्गत्वहरं शातातपः

लोहहारी च पुरुषो जायते बर्बराङ्गकः ।
लोहं पलशतं दद्यादुपोष्य स तु वासरम् ॥

पलस्वरूपं परिमाणप्रकरणेऽभ्यधायि । लोहदानमन्त्रस्तु नवग्रहयज्ञप्रकरणे दर्शितः। इति बर्बराङ्गत्वहरम् । अथ कृष्णरूक्षाङ्गत्वहरं शातातपः–

कारूणां च वधे कृष्णो रूक्षाङ्गश्च प्रजायते ।
तेन तत्पापशुध्यर्थं दद्याद्वै वृषभं सितम् ॥

कारवः शिल्पिनः। वृषदानमन्त्रस्तु नवग्रहयज्ञप्रकरणे दर्शितः। इति कृष्णरूक्षाङ्गत्वहरम्। अथ कण्डूतिरोगहरम्।

तैलचौर्येण भवति नरः कण्डूयनः सदा।
उपोष्य सोपि विप्राय द्द्यात्तैलघटद्वयम्॥

इति कण्डूतिरोगहरम्। अथ शीर्णाङ्गत्वहरं शातातपः—

वस्त्रहारी च शीर्णाङ्गः प्रदद्याच्च सुशोभनम्।
हेम निष्कत्रयमितं वस्त्रयुग्मं द्विजातये॥

हेमनिष्कत्रयं च वस्त्रयुग्मं च दद्यादित्यर्थः। निष्कस्वरूपं परिमाणप्रकरणे प्रदर्शितम्। वस्त्रयुग्मं पीतवर्णम्। दानमन्त्रे तादृशलिङ्गदर्शनात्। हिरण्यदानमन्त्रो नवग्रहयज्ञप्रकरणे वर्णितः। वस्त्रदानमन्त्रमाह—

पीतवस्त्रयुगं यस्मा द्वासुदेवस्य वल्लभम्।
प्रदानात्तस्य मे विष्णो अतः शान्तिं प्रयच्छमे॥

सह समभिव्याहारात् सुवर्णमपि वासुदेवप्रीत्यर्थमेव दद्यात्। इति शीर्णाङ्गत्वहरम्। अथ दद्रुरोगमण्डलहरम्। शातातपः—

स्वाम्यंगनाभिगमनाज्जायते दद्रुमण्डलम्।
कृत्वा लोहमयीं धेनुं पलषष्टिप्रमाणतः॥
कार्पासभारसंयुक्तां सप्तधान्यसमन्विताम्।
दद्याद्विप्राय विदुषे 'पापं मे क्षीयता' मिति॥

पलस्वरूपं भारस्वरूपं च परिमाणप्रकरणे निरूपितम्। अत्र यद्यपि सामान्यतः पापं मे क्षीयता मित्युक्तं तथापि दद्रुमंडलनिदानभूतं यत्पापं तत्कार्यभूतो रोगो वा क्षीयतामित्युच्चार्य कार्पासादिसमन्वितां लोहमयीं धेनुं दद्यात्। इति दद्रुमण्डलहरम्। अथ गजचर्मत्वहरं शातातपः—

विश्वस्तभार्यागमने गजचर्म प्रजायते।
तत्पापस्य विनाशाय प्रायश्चित्तं विधीयते॥

विश्वस्तभार्यागमने गुरुतल्पप्रायश्चित्तातिदेशात् षड्वार्षिकं प्रायश्चित्तं कर्तव्यम्। प्रायश्चित्तशब्देन निष्कृतिरभिधीयते। सा च कृच्छ्रादिरूपा दानरूपा च। तदुभयमपि प्रायश्चित्तशब्देनोपात्तम्।

तत्र वयआदिगुरुलघुभावेन द्वयोः समुच्चयो विकल्पश्चावगन्तव्यः। प्राजापत्यादिस्वरूपं कृच्छ्रप्रकरणे निरूपितम्। प्रायश्चित्तोपक्रम-प्रकारस्तु प्रायश्चित्तोपक्रमपद्धतौ दर्शितः। एवं प्राजापत्यादिरूपां निष्कृतिं तात्पर्येणाऽभिधायेऽतरां विविच्य दर्शयति-

> कृत्वा रूपमयीं धेनुं [illegible] ।
> [illegible]संयुक्तां छत्रोपानहसंयुताम् ॥
> दद्याद्विप्राय विधिवदिमं मन्त्रमुदीरयेत् ।

सर्वोपस्करसंयुक्तामिति। सुवर्णशृङ्गादय उपस्कराः। ते च ग्रहणीहरधेनुदाने प्रदर्शिताः। तथान्ये चोपस्कराः क्षयरोगहर-प्रकरणे गुडधेन्वादिविधिषु दर्शिताः। यद्यप्युपस्करेषु रूप्यखुराणामपि परिगणनं तथापि धेनो रजतमयीत्वात्तदवयवानां खुराणामपि रजतमयत्वसिद्धौ न पृथग्रूप्यखुरापेक्षेति उपस्कररूपखुरालोपः। दानमन्त्रमाह-

> सुरभी वैष्णवीमाता नित्यं विष्णुपदान्विता ।
> गोदानं तु मया दत्तं मम पापं व्यपोहतु ॥

इति गजचर्मत्वहरम्। अथ बभ्रुमण्डलत्वहरं शातातपः-

> नकुलस्यापि हनने जायते बभ्रुमण्डलम् ।
> निष्कद्वयमितं दद्यान्नकुलं स विशुध्यति ॥

निष्कलक्षणं परिमाणप्रकरणेऽभ्यधायि। शक्त्यनुसारेण सुवर्ण-राजतौ निष्कौ भवतः। विशेषानुपादानात्। इति बभ्रुमण्डलहरम्। अथ कृष्णमण्डलत्वहरं शातातपः-

> मयूरे घातिते चैव जायते कृष्णमण्डलः ।
> निष्कत्रयमितो देय स्तेन स्वर्णमयः शिखी ॥

निष्कप्रमाणं परिमाणप्रकरणे निरूपितम्। इति कृष्णमण्डलत्व-हरम्। अथ श्वेतमण्डलहरम्। शातातपप्रोक्ते-

> हंसघाती भवेद्यस्तु तस्य स्याच्छ्वेतमण्डलम् ।
> रौप्यं पलत्रयमितं हंसं दद्याद्विशुद्धये ॥

पललक्षणं परिमाणप्रकरणे वर्णितम् । इति श्वेतमण्डलत्वहरम् । अथ विसर्पहरम् । कर्मविपाकसमुच्चये–

अमेध्यस्य प्रदाता तु विसर्पव्याधिमान् भवेत् ।
मासं पयोव्रतं कुर्याद्दद्यादन्ते पयस्विनीम् ॥

गोदानमन्त्रस्तु नवग्रहयज्ञप्रकरणेऽभिहितः । पयोव्रतरूपं कृच्छ्र-प्रकरणे दर्शितम् । इति विसर्पहरम् । अथ विसर्पहरं नागदानम् । बौधायनः–

सर्पांस्तु यः खादयति स विसर्पी भवेन्नरः ।
दानेनोपशमः कार्यो होमेन च विशेषतः ॥

वक्ष्यमाणेन नागदानेन होमेन चेत्यर्थः ।

पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
कुर्यान्नागं च सौवर्णं फणपञ्चकसंयुतम् ॥
माणिक्यानि च देयानि प्रत्येकं फणपञ्चके ।
रत्नं पुच्छे तथा देयं वज्रं लोचनयोस्तथा ॥
एवं कृत्वा शुभं नागं कुङ्कुमेनानुलेपयेत् ।
रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रोपरि न्यसेत् ॥
पात्रस्य च परीमाणं पलनामष्टकं विदुः ।
उपचारैः षोडशभिरर्चयेन्नागमुत्तमम् ॥

पललक्षणं परिमाणप्रकरणे निरूपितम् । अर्चयेत् । वक्ष्यमाण-होममंत्रेष्वन्यतमो ग्राह्यः ।

आचार्यः सर्वशास्त्रज्ञो धर्मशास्त्रविशारदः ।
होमं चापि प्रकुर्वीत समिदाज्यतिलैः शुभैः ॥
नमोस्तु सर्पेभ्य इति त्रिभिर्मन्त्रैर्यथाक्रमम् ।
अष्टोत्तरसहस्रं वा त्वष्टोत्तरशतं तु वा ॥
अष्टाविंशतिरेवाथ परिमाणं पृथक् भवेत् ।

प्रत्येकमष्टोत्तरसहस्रादि भवेदित्यर्थः । नमोस्तु सर्पेभ्य इत्यासां तिसृणां अग्नि ऋषिः । सर्पो देवता । अनुष्टुप् छन्दः । क्रमेण समिदाज्यतिलहोमे विनियोगः ।

नमो अस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः १ येऽद रोचने दिवो ये वा सूर्यस्य रश्मिषु। येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः २ या इषवो यातुधानानां ये वा वनस्पतीननु। ये वा वटेषु शेरते तेभ्यः सर्पेभ्यो नमः ३ (ऋ. खिल)

एभिर्मन्त्रैः समिदाज्यहोमो भवति। तत्राप्याज्यहोमेऽयमपरो विशेषः। हुत्वा हुत्वा स्रुवावशिष्टानाज्याविन्दून् पात्रान्तरे स्थापयेत्। ते च बिन्दवः सम्पाता इत्युच्यन्ते। तेन च सम्पाताज्येनाचार्यो रोगिणोऽङ्गान्यभ्यंज्यादिति। तदेतदाह–

> हुत्वा चाहुतिसम्पातैः पात्रे चैकीकृतं स्वयम्।
> आचार्योऽङ्गानि चाभ्यंज्याद्रोगिणं तु विसर्पिणम्॥

अत्र कुशादिभिः सम्मार्जयेदित्यध्याहारः। सम्मार्जने मन्त्रमाह- 'अग्निस्तु सर्पराज्ञीभिर्भूमिर्भूम्नादिभिः क्रमादिति। भूमि भूम्नादिभिः क्रमादिति। भूमि भूम्नेतीमामृचमारभ्य क्रमात्तिसृभि ऋग्भिरित्यर्थः। यथासौ रोगी स्वस्थो नीरोगो भवतीति संक्षेपेण कथनम्। एतदेव विविच्य कथयति 'गात्राण्यप्यपरोगत' इति। गात्राण्यङ्गानि यथा रोगतो रोगादपगतानि भवन्ति तथा मार्जयेदित्यर्थः। सर्वानवयवानपि यथायोग्यं सम्मार्जयेदिति तात्पर्यम्। भूमिर्भूम्नामित्यासां तिसृणां सर्पराज्ञी ऋषिः। अग्निर्देवता। द्वितीयतृतीययोरात्मा सूर्यो वाऽग्निर्वा देवता। सर्वत्र लिङ्गोक्ता देवता। आद्यानुष्टुप् इतरे गायत्र्यौ। सम्मार्जने विनियोगः।

> भूमिर्भूम्ना द्यौ र्वरिणान्तरिक्षं माहित्वा।
> उपस्थे ते देव्यादिते अग्निमन्नाद मन्नाद्या याऽऽदधे॥

आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरं च प्रयन्त्सुवः। त्रिंशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये। प्रत्यस्य वहद्युभिः। (तै. सं. १५-३)

सम्मार्जनानन्तरकर्तव्यमाह–

> गुग्गुलुं च सुगन्धश्च पूतिदारु च निक्षिपेत्।
> प्रकल्प्य कलशं कुर्यादभिषेकं जलैः शुभैः॥

नमोस्तु सर्पेभ्य इति सार्द्धं तल्लिङ्गकैरपि ।
हिरण्यवर्णा शुचयः पवमानानुवाकतः ॥
आपोहिष्ठामय इति शन्नो वातमुदीरयेत् ।

गुग्गुलुंचे त्यादि । गुग्गुलुः प्रसिद्धः । सुगन्धः कर्पूरादिः । पूतिदारु देवदारुसर्जरसवृक्षौ । अतस्तच्छकलान्यत्र गृह्यन्ते । एतान्यभिषेककलशे विन्यसेत् । प्रकल्प्य निक्षिप्य च तं कलशमभिषेकोपयुक्तैस्तीर्थादिभिर्जलैः परिपूर्णं कुर्यात् । नागपूजाप्रदेशात् पश्चिमभागे कलशं संस्थाप्य तीर्थोदकेन पूरयित्वा गुग्गुल्वादींस्तत्र निक्षिप्य नागस्वर्णप्रतिमां पूजयित्वा पूर्वस्थापिते कलशे नवग्रहयज्ञोक्तप्रकारेण वरुणमावाह्य सम्पूज्य नमोस्तु सर्पेभ्य इत्यादि मन्त्रैस्तदुदकमष्टाविंशत्याद्यावृत्याऽभिमन्त्र्य पूर्वोक्तप्रकारेण होमं विधाय सम्पातै रोगिणोऽङ्गानि सम्मृज्य पश्चादभिषेकं कुर्यादिति क्रमः । तत्राभिषेकमन्त्रानाह–नमोस्तु सर्पेभ्य इत्यादिनाऽऽपोहिष्ठा मय इत्यन्तेन । अत्राभिषिञ्चेदित्यध्याहारः । तल्लिङ्गकै रभिषेकप्रकाशकैः हिरण्यवर्णा इत्यादिभिः । सार्द्धं नमोस्तु सर्पेभ्य इति तृचेनाभिषिंचेदित्यर्थः । अयं च तृचः सांप्रतमत्रैव प्रदर्शितः । हिरण्यवर्ण इत्यापोहिष्ठामय इति चर्चौ परिभाषायां रोगप्रतिमादानविधावुपवर्णितौ । पवमानानुवाकस्तु गणहोमप्रकरणे दर्शितः । शन्नो वातमुदीति । एतेन स्वस्वशाखोक्तः शान्तिपाठ उपलक्ष्यते । शन्नो वातः पवतामित्यादि तैत्तिरीयशान्तिस्तथाऽश्वलायनघोषशान्तिः परिभाषायां दर्शिता । अयं च शान्तिपाठोभिषेकानन्तरं कार्यः । ततः किं कुर्यादित्यत आह ।

उत्सादिताङ्गं रुचिरं लिम्पेदगरुचन्दनैः ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
स्वयं समर्चयेन्नागं गन्धपुष्पाक्षतादिभिः ।
सर्पदैवतमन्त्रेण आचार्योपि समर्चयेत् ॥
अनन्तं सर्पराजन्तमाचार्याय निवेदयेत् ।

उत्सादिताङ्गइत्यादि । उत्सादिताङ्गः प्रोञ्छिताङ्गः । वस्त्रेणापाकृतशरीरसलिल इत्यर्थः । तं रुचिरं यथा भवति तथाऽगरुणा श्रीचन्दनादिभिश्च लिम्पयेत् । स्वयमिति । रोगी । एतच्च समर्चनं दानकालेपि

पूर्वकृतपूजातोन्यदेव। सर्वदैवत्यो मन्त्रोऽत्रैव होमप्रसङ्गेन दर्शितः।
अधुना नागदानमन्त्रमाह–

'यो धत्ते पृथिवीं कृत्स्नां सशैलवनकाननाम्।
क्षीराब्धौ यश्च शय्या च वासुदेवस्य शार्ङ्गिणः॥
स्वीयदानेन नागोसौ तुष्टो व्याधिमपोहतु।
वैसर्पिकविकारं वा ग्रन्थिजनकं तथा॥
रक्तदोषोद्भवं वापि मातृतः पितृतो थवा।
अङ्गप्रत्यङ्गसम्भूतं विकारं मे व्यपोहतु॥' इति
एवं दत्वा तु तन्नागमाचार्याय सदक्षिणम्।
भूमौ प्रणम्य शिरसा शनैः शतपदं व्रजेत्॥

आचार्यमनुव्रजेदित्यर्थः। आचार्य इत्युपलक्षणम्। प्रतिगृहीत्रनुव्रजनं कुर्यादिति यावत्।

आचार्येण ह्यनुज्ञातो गृहं सम्प्रविशेत्सुधीः।
ब्राह्मणान् भोजयित्वा तु स्वयं भुञ्जीत बन्धुभिः॥

इति विसर्पहरनागदानम्। अथ दुर्गन्धाङ्गत्वहरम्। शातातपः–

सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते।
लक्षमेकं तु पद्मानां जुहुयाज्जातवेदसे॥

सौगन्धिकं कल्हारं सुगन्धिद्रव्यं च। जातवेदस इत्यनेन जातवेदसे सुनवाम सोमं इत्यृच उपादानम्। अतो होममन्त्र इयमेवर्क्। अस्या ऋष्यादि शीतज्वरहर उक्तम्। इति दुर्गन्धाङ्गत्वहरम्।
अथ बस्तगन्धत्वहरम्। शातातपः–

मधुचौरस्तु पुरुषो जायते बस्तगन्धवान्।
स दत्वा मधुधेनुं च उपोष्याथ द्विजातये॥

मधुधेनुविधानं तु क्षयरोगहरप्रकरणे गुडधेनुविधाने दर्शितम्। च शब्दात् प्रायश्चित्तं समुच्चीयते। तच्च व्याध्यनुसारेण चान्द्रायणादि कल्प्यम्। चान्द्रायणादि स्वरूपं कृच्छ्रप्रकरणेऽभिहितम्। इति बस्तगन्धत्वहरम्। अथ त्वग्दोषरोगप्रतिमादानम्। एतल्लक्षणं चानुक्तेषु तु रोगेष्वित्यादिना शूलरोगप्रकरणाभिहितमेवात्रापि विज्ञेयम्।

इतिकर्तव्यताकलापस्तु परिभाषायां रोगप्रतिमादानविधावातङ्को देवता तत्रेत्यादिना निरूपितः। इतित्वग्दोषहरं प्रतिमादानम्।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य।
अगादगाधो रुचिरः समाप्तिं
ख्यात(स्तु) षट्त्रिंशतया तरङ्गः॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे षट्त्रिंशस्तरङ्गः।

# सप्तत्रिंशस्तरङ्गः

अथ कुष्ठरोगहराणि शातातपप्रोक्ते–

> ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते ।
> प्रायश्चित्तं प्रकुर्वीत तत्पातकविशुद्धये ॥

प्रायश्चित्तं षड्वार्षिकं कुर्वीत । पापस्योपभोगेन क्षीणत्वात् । प्रायश्चित्तोपक्रमप्रकारस्तु प्रायश्चित्ते दक्षप्रभृतिभिरीरितः । एवं कृतप्रायश्चित्तस्य तदनन्तरकर्तव्यतामाह–

> चत्वारः कलशाः कार्याः पञ्चपल्लवसंयुताः ।
> पञ्चरत्नसमायुक्ताः सितवस्त्रेण वेष्टिताः ॥
> अश्वस्थानादिमृद्युक्तास्तीर्थोदकसुपूरिताः ।
> कषायपञ्चकोपेता नानाविधफलान्विताः ॥
> सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं ततः ।

पञ्च पल्लवा आम्राश्वत्थवटप्लक्षोदुम्बराणाम् । मृदश्च गजाश्वरथ्यावल्मीकनदीसङ्गमह्रदगोकुलेभ्यो ग्राह्याः । कषाया अप्याम्राश्वत्थादीनां त्वचः । प्रतिदिशं पूर्वादिदिक्षु । एवं चतुरः कलशान् स्थापयित्वा तन्मध्ये परं कलशं स्थाप्य तस्योपरि अष्टदलं रौप्यं पद्मं निधाय तत्र वासुदेवं स्थापयेदित्याह–

> रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् ।
> तस्योपरि न्यसेद्देवं पुण्डरीकं चतुर्भुजम् ॥
> पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्मितम् ।
> यजेत्पुरुषसूक्तेन त्रिकालं प्रतिवासरम् ॥
> यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि ।
> पूर्वादिकुम्भेषु तथा ब्राह्मणान् ब्रह्मचारिणः ॥
> पारयेयुः स्वकान् वेदानृग्वेदप्रभृतीन् शनैः ।
> दशांशेन ततो होमो ग्रहशान्तिपुरस्सरम् ॥
> तत्र कुण्डं विधातव्यो घृताक्तैश्च तिलैर्यवैः ।
> द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः ॥
> भद्रासने यजमानस्याभिषेकं समाचरेत् ।

पलार्द्धप्रमाणेनेति । पललक्षणं परिमाणप्रकरणे निरूपितम् । पलेन पलार्द्धेन वा पलचतुर्थांशेन वेत्यर्थः । यजेत् पुरुषसूक्तेनेति । यजेत् पूजयेत् । पूजाप्रकारश्च परिभाषायां पुरुषसूक्तविधाने दर्शितः । द्वादशदिनसाध्यमेतत्कर्म । तत्र प्रतिदिनं प्रातर्मध्यन्दिने सायंकालेप्याचार्येण पूजितं देवं यजमानो गन्धपुष्पादिभिः पूजयेत् । तथा पूर्वस्थापितेषु चतुर्षु पूर्वादिकुम्भेषु ऋग्वेदादीन् पारयेयुः । ऋग्वेदादिवेदचतुष्टयपारायणं कारयेदित्यर्थः । पूर्वकुम्भे ऋग्वेदं दक्षिणकुम्भे यजुर्वेदं पश्चिमकुम्भे साम[1] वेदमाथर्वाङ्गिरसमुत्तरकुम्भे पाठयेत् । वेदचतुष्टयविदामभावे यथासंभवशाखाध्यायिभिः चतुर्भिर्ब्राह्मणैश्चत्वारि वेदपारायणानि कारयेत् । दृष्टार्थत्वादस्य कर्मणः । रोगनिवृत्तिश्च दृष्टं प्रधानप्रयोजनम् । अवान्तरप्रयोजनं च दुरितपूर्वनिवृत्तिः । सा च वेदपारायणचतुष्टयसाध्या । वेदानामपि चातुर्विध्यं स्वतः सिद्ध मृग्वेदादिपारायणकथनम् । पारायणप्रकारस्तु परिभाषायां निरूपितः । यद्यपि सामसु पठ्यमानेषु वेदान्तराणामनध्यायो वेदान्तरेषु साम्नां । तथापि वेदचतुष्टयपारायणविधिबलादेकत्र कुम्भस्थापनविधानाच्च यावता परस्परसञ्चारोऽधिकरणाहृतिश्च न भवेत्तावति भूभागे कलशचतुष्टयं स्थापयित्वा मध्ये वासुदेवाधिष्ठानकलशं स्थापयेत् । दशांशेन होम इति । यस्मिन् यावान् वेदपाठो जायते तावन्तं ग्रन्थसङ्ख्यया गणयित्वा तद्दशांशहोमो व्याहृतिभिः कार्यः । अत्रादिमं परिगणनादिप्रकार माह । मन्त्रब्राह्मणे मिलित्वा यस्मिन् वेदे यावन्तो ग्रन्थास्तावन्तं द्वादशधा विभज्य प्रतिदिनमेकैकांशसङ्ख्यया व्याहृतिहोमः कार्य इति । होमद्रव्यं च घृताक्तास्तिलाः यवा वा । एषु दिनेषु प्रथम दिन एव । ग्रहयज्ञोक्तप्रकारेणेत्यादि । ग्रहान् प्रतिदिनं गन्धपुष्पादिभिः समर्चयेत् । कर्मान्ते दक्षिणादीन् दद्यात् । ग्रहपूजाप्रकारश्च परिभाषायां दर्शितः । द्विजपुङ्गव इति । द्विजपुङ्गव आचार्यः । भद्रासन इति । भद्रासनस्वरूपं विनायकशान्तौ दर्शितम् । अभिषेकं समाचरेदिति । एवंविधभद्रासनोपविष्टस्य रोगिणोऽभिषेकमाचार्य इतर ब्राह्मण सहितो

1. अथर्वाङ्गिरसे उत्तरकुम्भे सामवेदं ।

वैदिकैर्मन्त्रैः स्नानं कुर्यात्। अभिषेकसमये च वासुदेवाधिष्ठान-कलशोदकं नवग्रहयज्ञकलशोदकं वेदपारायणोदकं चैकस्मिन् पात्रे निधाय विनायकशान्तौ नवग्रहयज्ञे चोक्तप्रकारेण यजमानमभि-षिञ्चेयुः। ततः किं कुर्यादित्यत आह–

ततो दद्याद्यथाशक्ति गोभूहेमतिलादिकम्।
ब्राह्मणेभ्यस्तथा देवमाचार्याय निवेदयेत् ॥

देवं पूर्वोक्तस्वर्णमयवासुदेवस्य प्रतिमाम्। एतत्प्रतिमादानमन्त्र-माह–

"आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः।
प्रीताः सर्वे व्यपोहन्तु मम पापं सुदारुणम् ॥
इत्युदीर्य मुहुर्भक्त्या तमाचार्यं क्षमापयेत्।
एवं विधानैर्विहितैः श्वेतकुष्ठी विशुध्यते" ॥

इति शातातपप्रोक्तं कुष्ठीपाण्डुहरम्। अथ प्रकारान्तरेण कुष्ठहरं शातातपप्रोक्तं–

कुष्ठी गोवधकारी स्यात्तत्रकान्ते च निष्कृतिः।
स्थापयेत् घटमेकं तु पूर्वोक्तद्रव्यसंयुतम् ॥

समनन्तरप्रोक्तपाण्डुकुष्ठहरे यानि पञ्चपल्लवादीनि द्रव्याण्यभि-हितानि तैर्युक्तमेकं कलशं स्थापयेदित्यर्थः। तत्र कलशालङ्कारादौ विशेषमाह–

रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरावृतम्।
रत्नगर्भं तु तं कृत्वा स्थापयेद्दक्षिणां दिशम् ॥

कुण्डस्य दक्षिणदिग्भाग इत्यर्थः।

ताम्रपात्रं न्यसेत्तत्र तिलपूर्णं सुपूजितम्।

तत्रेति कलशे।

तस्योपरि न्यसेद्देवं हेमनिष्कमितं यमम्।
यजेत्पुरुषसूक्तेन पापं मे शाम्यतामिति ॥

निष्कस्वरूपं परिमाणप्रकरणे ज्ञेयमादि। यममूर्तिस्तु दक्षिणहस्ते दण्डधारिणी वामहस्तेनाभयदा महिषारूढा च भवति। पुरुष-सूक्तेन यजेत् पूजयेत्। पूजाप्रकारस्तु परिभाषायां सूक्तविधाने

निरूपितः। पापं मे शाम्यतामिति। पापं शरीरे वर्तमानं रोगमयं तन्निदानभूतं दुरितं च शाम्यतामिति सङ्कल्प्येत्यर्थः।

सामपारायणं कुर्यात् कलशे तत्र कामतः।
दशांशं सर्पिषा हुत्वा पावमान्याभिषेचने ॥
विहिते धर्मराजं तमाचार्याय निवेदयेत्।

साम वादयेत्। सामवेदविदोऽभावे बह्वृचं वा यथालाभोपपन्नं शाखाध्यायिनं वा। आवेदपारायणसमाप्ति च प्रतिदिनं यमं पूर्वोक्तप्रकारेण पूजयेत्। होममन्त्रा व्याहृतयः। दशांशज्ञानप्रकारश्च पाण्डुकुष्ठरोगहरोक्तरीत्या विज्ञेयः। पावमान्येति। पवमानः सुवर्जनः स्वादिष्ठयेत्याद्या स्वस्वशाखोक्तपावमान्यो ग्राह्याः। पवमानः सुवर्जन इत्यनुवाको गणहोमप्रकरणे दर्शितः। स्वादिष्ठयेति सूक्तं पाण्डुरोगहरपृथ्वीदाने दर्शितम्। दानमन्त्रमाह–

'यमो महिषमारूढो दण्डपाणिर्भयावहः।
दक्षिणाशापतिर्देवो मम पापं व्यपोहतु' ॥
इत्याचार्यं विसृज्यैनं मासं गोभक्तिमाचरेत्।
ब्रह्मगोवधयोरेषा स्यादन्या नास्ति निष्कृतिः ॥

ब्रह्मवधस्य समनन्तरपूर्वोक्तकर्म गोवधस्यैतदिति विभागः। इति प्रकारान्तरेण श्वेतकुष्ठहरम्। अथापरं कुष्ठहरं शिवगाथायाम्।

यो नरो हन्ति वै जन्तून् कुष्ठरोगी भवेत्तु सः।
सान्तपनं प्रकुर्वीत भगवानाह शङ्करः ॥

सान्तपनलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि। क्षुद्रजन्तोस्तु हनन इदं प्रायश्चित्तम्। तत्रापि व्याधेरल्पत्वे। एनसि लघुनि लघूनि गुरुणि गुरूणीति गौतमवचनात्। इत्यपरं कुष्ठहरम्। अथ कुष्ठरोगहरवृषभदानं वायुपुराणे 'कुष्ठी स्तेयी नरो भवे'दित्युपक्रम्याभिहितम्।

अथ कुष्ठहरं वक्ष्ये वृषदानमनुत्तमम्।
यः कुर्यात् कुष्ठरोगार्तः शरीरं सुखकारकम् ॥
पलैस्त्रिभिस्तु कुर्वीत द्वाभ्यामेकेन वा पुनः।
राजतं वृषभं शुभ्रं हेमशृङ्गखुरं तथा ॥

महेश्वरेणोमया च कुर्वीत तमधिष्ठितम् ।

वृषभस्य परिमाणप्रकरणेऽभ्यधायि। महेश्वरस्योमायाश्च प्रतिमे द्वे सुवर्णस्य पलैस्त्रिभिर्द्वाभ्यामेकेन वा कारयेदित्याह–

यथाविभवमानेन वित्तशाठ्यं न कारयेत् ।

अत्र वृषभदानस्य प्राधान्यादुमामहेश्वरप्रतिमे विहितपलत्रितयादिपरिमाणादपि न्यूनपरिमाणेन सुवर्णेन कृतेऽपि दोषाय नेत्येतत्सूचयति। वित्तशाठ्यमित्यनेन वृषभप्रतिमा तूक्तपरिमाणेनैव कार्या प्रधानत्वात् ।

पलाष्टकं कांस्यपात्रे स्थापयेत्तं विचक्षणः ।
श्वेतपुष्पैरक्षताद्यैः श्वेतवस्त्रैरलङ्कृतम् ॥

एवं विधं तं वृषभं कांस्यपात्रे विक्षिपेदित्यर्थः ।

ब्राह्मणं विद्यया युक्तं स्वाचारं विजितेन्द्रियम् ।
सर्वशास्त्रप्रवक्तारं प्रतिग्रहपराङ्मुखम् ॥
दान्तं कुलीनं धर्मज्ञमनुद्वेगकरं नृणाम् ।
क्रोधलोभविहीनं च सर्वशास्त्रार्थकोविदम् ॥
गृहमाहूय भक्त्या तं यथाविधि समर्चयेत् ।
केयूरमुकुटैर्वस्त्रैर्माल्यैश्चैवाङ्गुलीयकैः ॥
होमं च पूर्ववत्कुर्यान्मन्त्रैर्माहेश्वरैस्तथा ।

पूर्ववदिति। स्वगृह्योक्तप्रकारेणाग्निं प्रतिष्ठाप्य समिच्चर्वाज्यातिलहोमानष्टोत्तरसहस्रसङ्ख्यया कुर्यादित्यर्थः। माहेश्वरमन्त्रा रुद्रप्रकाशकास्ते च स्वस्वशाखोक्ता ग्राह्याः। तत्र त्र्यम्बकमितिमन्त्रो दर्शित उष्णज्वरहरे। कद्रुद्रायेति दद्रुहरे महेश्वरप्रदाने। अत्रैव रुद्रगायत्र्यपि। शूलरोगहरत्रिशूलदाने शैवपञ्चाक्षरो दर्शितः। पूर्वोक्तगुणविशिष्टेन ब्राह्मणेन तं वृषभं वक्ष्यमाणदानमन्त्रस्थिता 'ष्टमूर्तेरधिष्ठान' मित्यनेन श्लोकेन पूजयित्वा तथा तत्रस्थितेनैव 'सर्वकर्मविपाकोत्थ' मित्यनेन श्लोकेनोमामहेश्वरपूजां कारयित्वा ततो होमं निवर्तयित्वाऽथ विशिष्टं वृषभं ब्राह्मणाय दद्यात्। दान प्रकारमाह–

उदङ्मुखोपविष्टाय महादेवस्य सन्निधौ ।
प्राङ्मुखो व्याधिमान्दद्यान्मन्त्रेणानेन धर्मतः ॥

दानमन्त्रमाह–

अष्टमूर्तेरधिष्ठान कृपया वृषभ ध्वज ।
श्वेतमौदुम्बरं सर्वमथवा श्वित्रमेव च ॥
त्वग्दोषजनितं यच्च मण्डलान्यथवा हर ।
सर्वकर्मविपाकोत्थं पार्वतीनाथ सर्वग ॥
कुष्ठहा भव सर्वेश रक्ष मां पार्वतीपते ।

वृषभध्वजेति । ध्वजेति सुबुध्यन्तं भिन्नपदम् । अष्टमूर्तेर्ध्वजेति वृषभविशेषणम् । इति कुष्ठहरवृषभदानम् ।

अथ हीनकुष्ठरं शातातपः—

मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति ।
चण्डालीगमने चैव हीनकुष्ठः प्रजायते ॥

अत्र च प्रतिक्रिया लिङ्गहानिहरे प्रसङ्गात् पूर्वदर्शितेति नात्र लिखिता। इति हीनकुष्ठहरम्। अथ रक्तकुष्ठहरं शातातपप्रोक्ते–

दीक्षितस्त्रीप्रसङ्गेन जायते रक्तकुष्ठवान् ।
तत्पातकविशुध्यर्थं प्राजापत्यचतुष्टयम् ॥

कुर्वीतेति शेषः। एतच्च प्रायश्चित्तं रोगस्याल्पत्वे। लघुप्रायश्चित्तत्वात्। रोगाधिक्ये तु त्रैमासिकमुपपातकप्रायश्चित्तं द्वैगुण्येन कार्यम्। प्राजापत्यलक्षणं कृच्छ्रप्रकरणे निरूपितम्। इति रक्तकुष्ठहरम्। अथ रक्तकुष्ठहरं पीतकुष्ठहरं च शातातपप्रोक्ते—

स्वसुतागमने चैव रक्तकुष्ठः प्रजायते ।
भगिनीगमने चैव पीतकुष्ठः प्रजायते ॥
तस्य प्रतिक्रियां कर्तुं पूर्वतः कलशं न्यसेत् ।

पूर्वतः पूर्वदिग्भागे होमस्थानापेक्षयेत्यर्थः। कलशे च पाण्डुकुष्ठहराण्युक्तानि पञ्चपल्लवादीनि स्थापयेत्। यस्मिंश्च दिवसे यावद्वक्ष्यमाणवेदपारायणं जायते तद्दशांशहोमो व्याहृतिभिः कार्यः।

होमद्रव्यं घृताक्तास्तिला यवा घृतमेव वा। अग्निस्थापनं च स्वगृह्योक्तमार्गेण। दशांशहोमे दशमांशपरिकल्पनाप्रकारस्तु पाण्डुरोगहरेऽभिहितः। पूर्वतः कलशमित्युक्तंअधुना तत्कलशालङ्करणप्रकारमाह—

पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम्।

रक्तकुष्ठे तु रक्तवस्त्रादिभूषितं कलशं स्थापयेत्। पीतकुष्ठे पीतवस्त्रादिभिर्भूषितमिति भेदः।

तस्मिन् कलशे वक्ष्यमाणगुणोपेतमिन्द्रं स्थापयेदित्याह—

तस्योपरिन्यसेद्देवं होमपात्रे सुरेश्वरम्॥
सुवर्णनिष्कषट्केन निर्मितं वज्रधारिणम्।
यजेत्पुरुषसूक्तेन वासवं विश्वरूपिणम्॥
सर्वौषधियुते कुम्भे ऋग्वेदं तु समापयेत्।

वज्रधारिणमित्यादि। इन्द्रमूर्तिस्तु वज्राभयकरा वज्रध्वजा ऐरावणसमारूढा च भवेत्। यजेत्पुरुषसूक्तेनेति। यजेत् पूजयेत्। पूजाविधानं तु परिभाषायां पुरुषसूक्तविधानेऽभिहितम्। ऋग्वेदं समापयेदिति। ऋग्वेदपारायणं कुर्यादित्यर्थः। ऋग्वेदविदभावे यथा सम्भवशाखाध्यायिना वेदपारायणं कारयेत्। यावद्वेदसमाप्तिं च प्रतिदिनमिन्द्रं तत्प्रकाशकैर्वैदिकैः स्वशाखोक्तैः पूजयेत्। इन्द्रप्रकाशकमन्त्रस्तु नवग्रहयज्ञप्रकरणे दर्शितः। तथा वक्ष्यमाणरोगप्रतिमापि प्रतिदिवसं पूजनीया। रोगप्रतिमालक्षणं चात्रैव प्रकरणान्ते व्युत्पादयिष्यते। अत्र प्रयोगक्रमस्तु मूत्रकृच्छ्रहरवरुणमूर्तिदानप्रोक्तो विज्ञेयः। कलशस्थापनादिविशेषोऽत्रैव दर्शितः। 'रक्तकुष्ठाधिदेवतायै नमः, पीतकुष्ठाधिदेवतायै नम' इति च रोगप्रतिमापूजायां मन्त्रावूह्यौ। अधुना तामेव रोगप्रतिमामाह—

सुवर्णपुत्रिकां कृत्वा सुवर्णदशकेन तु।
दद्याद्विप्राय सम्पूज्य 'निष्पापः स्या'मिति ब्रुवन्॥

एकः सुवर्णशब्दो द्रव्यवाची। अपरः परिमाणवाची। सुवर्णलक्षणं तथा पूर्वोक्तनिष्कलक्षणं च परिमाणप्रकरण उपवर्णितम्। निष्पापः

स्यामिति । अनेन रोगप्रतिमादानेन निष्पापः स्यामिति ब्रुवन् रोगप्रतिमां दद्यादित्यर्थः । साम्प्रतमिन्द्रप्रतिमादानमन्त्रमाह—

'देवानामधिपो देवो वज्री स्वर्गनिकेतनः ।
शतमन्युः सहस्राक्षो मम पापं व्यपोहतु' ॥
इमं मन्त्रं समुच्चार्य आचार्याय यथाविधि ।
दद्यादेवं सहस्राक्षं स्वपापस्योपशान्तये ॥

इति रक्तकुष्ठहरं पीतकुष्ठहरं च । अथ गुल्मकुष्ठहरं कृष्णकुष्ठहरं च । शातातपः—

भ्रातृजायाभिगमने गुल्मकुष्ठं प्रजायते ।
स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते ॥

स्ववधूः स्वपुत्रभार्या ।

तेन कार्यं विशुध्यर्थं प्रागुक्तस्यार्द्धमेव च ।
दशांशहोमः सर्वत्र घृताक्तैः क्रियते तिलैः ॥

प्रागुक्तस्यार्द्धमिति । प्राक् षड्वार्षिकं प्रस्तुतं तदर्द्धं त्रैवार्षिकम् । प्रायश्चित्तोपक्रमप्रकारस्तु प्रायश्चित्तोपक्रमपद्धतौ परिभाषायां निरूपितः । प्रागुक्तस्यार्द्धमित्यस्यान्या व्याख्या । समनन्तरकुष्ठहरोक्तस्यार्द्धम् । तद्यथा । कलशस्थापनप्रकारः पूर्वोक्त एव । सुवर्णनिष्कत्रयेणेन्द्रप्रतिमा सुवर्णपञ्चकेन रोगप्रतिमा । ऋग्वेदे तदभावे वेदान्तरे वा संहितामात्रस्यैव पारायणमिति पूर्वोक्तार्द्धकल्पना । पूजाप्रकारस्तु तद्वदेव । इति गुल्मकुष्ठहरं कृष्णकुष्ठहरं च । अथ कटिकुष्ठहरम् । शातातपः—

पितृव्यपत्नीगमनात् कटिकुष्ठं प्रजायते ।
निष्कृतिस्तेन कर्तव्या कन्यादानेन यत्नतः ॥
उत रोगानुसारेण त्रिवर्षादि समाचरेत् ।

कन्यादानासम्भवेऽन्यं धनादिना प्रलोभ्य तस्मात् कन्यादानफलं ग्राह्यम् । कन्यादानजनितसुकृतापनोद्यत्वादस्य दुष्कर्मणः । उतेति पक्षान्तरे । तच्च त्रैवार्षिकादिप्रायश्चित्ताचरणम् । प्रायश्चित्तोपक्रम-

प्रकारस्तु परिभाषायां प्रायश्चित्तोपक्रमप्रकरणे दर्शितः। इति कटि-कुष्ठहरम्। अथ नेत्रकुष्ठहरम्। शातातपः—

मातुलान्यास्तु गमनात् दृष्टिकुष्ठं प्रजायते।
कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत्॥
यदगम्यासु संबद्धं प्रायश्चित्तमुदीरितम्।
तदेव मुनिभिः प्रोक्तं नियुतं तत्कुलास्वपि॥

पूर्वोक्तत्रैवार्षिकं प्रायश्चित्तं समाचरेदित्यर्थः। कृष्णाजिनदानं तु विष्णुस्मृतौ "अथ वैशाख्यां पौर्णमास्यां कृष्णमृगाजिनं सखुरं सशृङ्गं सुवर्णशृङ्गं रौप्यखुरं मुक्तालाङ्गूलभूषितं कृत्वाऽविके वस्त्रे प्रसारिते प्रसारयेत्। ततस्तिलैः प्रच्छादयेत्। सुवर्णनाभं कुर्यात्। अहतेन वासोयुगेन प्रच्छादयेत्। सर्वरत्नगन्धैश्चालंकुर्यात्। चतसृषु दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिसर्पिःपूर्णानि दद्यादाहिताग्नये ब्राह्मणायालङ्कृताय वासोयुगेन प्रसादयेत्" इति। अस्यायमर्थः। वैशाख्यां पौर्णमास्यामिति। एतच्च कालान्तराणा-मप्युपलक्षणार्थम्।

ते च काला मात्स्ये प्रदर्शिताः।

वैशाखी पौर्णमासी च ग्रहणं शशिसूर्ययोः।
पौर्णमासी तथा माघी आषाढी कार्तिकी तथा॥
उत्तरायणे द्वादश्यान्तु तस्यां दत्तं महाफलम्। इति।

व्याधिनिमित्तः कालः शातातपवचने प्राक् दर्शितः। कृष्णमृगा-जिनं सखुरं सशृङ्गं सौवर्णशृङ्गं रौप्यखुरं मुक्तालाङ्गूलभूषितं कृत्वाऽविके वस्त्रे प्रसारिते प्रसारयेदिति। गोमयलिप्ते शुचौ देश आविकं वस्त्रं कम्बलमास्तीर्य तत्र स्वभावसिद्धखुरशृङ्गसहितं पुनश्च रौप्यखुर हेमशृङ्गरजतदंतालंकृतं मौक्तिकखचितपुच्छयुतं विद्रुमालङ्कृत-पुच्छोपेतं वा नेत्रयो मौक्तिकशोभितं कृष्णमृगचर्म प्रसारयेत्। कम्बले कृष्णाजिनमास्तीर्य तस्य खुरादिषु रौप्यखुरादीनि स्थापये-दित्यर्थः। तथा च मत्स्यपुराणे—

गोमयेनोपलिप्ते तु शुचौ देशे नराधिप ।
आदावेव समास्तीर्य शोभनं वस्त्रमाविकम् ॥
ततः सशृङ्गं सखुरमास्तरेत् कृष्णमार्गणम् ।

कृष्णमार्गणं कृष्णमृगसम्बन्धि चर्मेत्यर्थः ।

कर्तव्यं रुक्मशृङ्गं तद्रौप्यदन्तं तथैव च ॥
लाङ्गूले विद्रुमं चैव नेत्रयोर्मौक्तिकं तथा । इति ।

ततस्तैलः प्रच्छादयेत् । सुवर्णेनालङ्कुर्यात् । अहतेन वासोयुगेन प्रच्छादयेत् । सर्वगन्धैश्चालङ्कुर्यात् । चतसृषु दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिसर्पिःपूर्णानि दद्यादिति । तिलैः प्रच्छादयेद जिनं । तिलै रात्मसमं राशिमजिने कुर्यादित्यर्थः । तत्र राशौ सुवर्णं षोडशमाषात्मकं वा सुवर्णं हेम वा शक्त्यनुसारेण नाभि-स्थाने मध्ये निक्षिपेत् । एतदेव सुवर्णनाभत्वम् । अहतं वासो नूतनम् । अत्र वस्त्रद्वयमुपात्तम् । अन्यत्रैकमेवाभिहितम् । अतो वस्त्रविषये विकल्पः । कृष्णाजिनस्य चतसृषु दिक्षु क्षीरादिपरिपूरि-तानि तैजसानि पात्राणि सौवर्णराजतादीनि पात्राणि शक्त्यनु-सारेण निदधीत । तैजसपात्रेषु सर्वथा अशक्तिश्चेत् मृण्मयानि वा क्षीरादिपरिपूरितानि स्युः । सति सम्भवे तैजसानां मृण्मयानां च समुच्चयः । अन्यथा शक्त्यपेक्षो विकल्पः । एतदभिप्रायेणैव मत्स्य-पुराणे–

तिलैरात्मसमं कृत्वा वाससाऽऽच्छादये द्बुधः ।
सुवर्णनाभं तत्कुर्यादलंकुर्याद्विशेषतः ॥
रत्नैर्गन्धैर्यथाशक्ति तस्य दिक्षु च विन्यसेत् ।
धातुपात्राणि चत्वारि दिक्षु दद्याद्यथाक्रमम् ॥
मृण्मयेषु च पात्रेषु पूर्वादिक्क्रमणेन तु ।
घृतं क्षीरं दधि क्षौद्रमेवं कुर्याद्विचक्षणः" ॥

इति विष्णुवचनादिष्टाहिताग्नये कृष्णाजिनं दद्यादित्यस्ति । अत आहिताग्नेर्मुख्यं सम्प्रदानं । तदभावेऽन्योप्यनुत्सन्नाग्निर्ग्राह्यः । अत्र-दाने फलश्रुतिर्विष्णुस्मृतावेवोक्ता । अत्र गाथा भवंति–

यस्तु कृष्णाजिनं दद्यात्सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥
कृष्णाजिने तिलान् क्षिप्त्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्रेभ्यः सर्वं तरति दुष्कृतम् ॥

इति कृष्णाजिनदानविधिः। इति नेत्रकुष्ठहरम्। अथ श्वेतोष्ठहरं शातातपः–

ताम्बूलहरणाच्चैव श्वेतोष्ठः सम्प्रजायते ।
दक्षिणासहितं दद्यात् स वैदूर्यमणिद्वयम् ॥

इति श्वेतोष्ठत्वहरम् । अथ चित्रकुष्ठहरं शातातपप्रोक्ते–

रूप्यहृन्नरकस्यान्ते जायते चित्रकुष्ठवान् ।
प्राजापत्यत्रयं कृत्वा देयं रूप्यपलत्रयम् ॥

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि । पललक्षणं तु परिमाणप्रकरणेऽभिहितम् । इति चित्रकुष्ठहरम् । अथोदुम्बरकुष्ठहरं शातातपः–

औदुम्बरी ताम्रचौरो नरकान्ते प्रजायते ।
प्राजापत्यशतं कृत्वा ताम्रं पलशतं दिशेत् ॥

प्राजापत्यपलयोर्लक्षणं कृच्छ्रप्रकरणे परिमाणप्रकरणे चाभिहितम् इत्यौदुम्बरकुष्ठहरम् । अथ कुष्ठरोगप्रतिमादानम् । तल्लक्षणं कर्मविपाकसारे–

कुष्ठः कुंचितसर्वाङ्गः शूलयज्ञोपवीतधृक् ।
भावन् प्राणहरः क्रुद्धः त्रिनेत्रः किङ्किणीयुतः ॥

पूजाविधानं त्वातङ्को देवता तत्रेत्यादिना परिभाषायां रोगप्रतिमादानविधावुक्तम् । इति कुष्ठरोगप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेऽत्र सप्त
त्रिंशस्तरङ्गोयमगादगाधः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे सप्तत्रिंशस्तरङ्गः ।

यस्तु कृष्णाजिनं दद्यात्सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥
कृष्णाजिने तिलान् क्षिप्त्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्रेभ्यः सर्वं तरति दुष्कृतम् ॥

इति कृष्णाजिनदानविधिः। इति नेत्रकुष्ठहरम्। अथ श्वेतोष्ठहरं शातातपः–

ताम्बूलहरणाच्चैव श्वेतोष्ठः सम्प्रजायते ।
दक्षिणासहितं दद्यात् स वैडूर्यमणिद्वयम् ॥

इति श्वेतोष्ठत्वहरम् । अथ चित्रकुष्ठहरं शातातपप्रोक्ते–

रूप्यहृन्नरकस्यान्ते जायते चित्रकुष्ठवान् ।
प्राजापत्यत्रयं कृत्वा देयं रूप्यपलत्रयम् ॥

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि । पललक्षणं तु परिमाण-प्रकरणेऽभिहितम् । इति चित्रकुष्ठहरम्। अथोदुम्बरकुष्ठहरं शातातपः–

औदुम्बरी ताम्रचौरो नरकान्ते प्रजायते ।
प्राजापत्यशतं कृत्वा ताम्रं पलशतं दिशेत् ॥

प्राजापत्यपलयोर्लक्षणं कृच्छ्रप्रकरणे परिमाणप्रकरणे चाभिहितम् इत्यौदुम्बरकुष्ठहरम् । अथ कुष्ठरोगप्रतिमादानम् । तल्लक्षणं कर्म-विपाकसारे–

कुष्ठः कुंचितसर्वाङ्गः शूलयज्ञोपवीतधृक् ।
धावन् प्राणहरः क्रुद्धः त्रिनेत्रः किङ्किणीयुतः ॥

पूजाविधानं त्वातङ्को देवता तत्रेत्यादिना परिभाषायां रोगप्रति-मादानविधावुक्तम् । इति कुष्टरोगप्रतिमादानम् ।

महार्णवाख्ये महति प्रबन्धे
मान्धातृनाम्नो मदनात्मजस्य ।
सत्कर्मरत्नप्रकरेऽत्र सप्त
त्रिंशस्तरङ्गोयमगादगाधः ॥

इति श्रीविश्वेश्वरविरचिते मदनमहार्णवे सप्तत्रिंशस्तरङ्गः ।

# अष्टत्रिंशस्तरङ्गः

अथापुष्पवतीत्वहराणि । तत्र पितामहः

क्षुत्पिपासातुरं नारी भर्तारमवमन्य या ।
मिष्टान्नं स्वयमश्नाति न सा पुष्पवती भवेत् ॥
मिथुनानि च पञ्चाशद्भोजयेत्तन्निवृत्तये ।
दद्यात् सौभाग्यवस्तूनि तेभ्यः शक्त्यनुसारतः ॥
इक्षवस्तवराजश्च हरिद्रा चैव धान्यकम् ।
विकारवच्च गोक्षीरं कुसुम्भं कुङ्कुमं तथा ॥
लवणं चाष्टमं चैतत् सौभाग्याष्टकमुच्यते ।

तवराजः सौभाग्यकं सुवर्णद्रावकद्रव्यमुच्यते । कर्पूरो वा शर्करा वा । विकारवच्च गोक्षीरमिति । क्षीरनिर्मिता मक्षादयो विकाराः । दध्यादयो वा । तद्युक्तमित्यर्थः । इक्षवस्तवराजश्च निष्पावा चैव धान्यकमित्यपि पाठः । निष्पावा धान्यविशेषः । 'इक्षवस्तवराजश्च जीरकं चैव धान्यकमित्यपि पठ्यते । अत्र च प्रतिबन्धाधिक्ये शक्त्यनुसारेणोक्तकर्मण आवृत्ति द्रष्टव्या । इत्यपुष्पवतीत्वहरम् । अथ वन्ध्यात्वहरसुवर्णधेनुदानम् । तथाच

विप्ररत्नापहारी च अनपत्यः प्रजायते ।
तेन कार्यं विशुध्यर्थं महारुद्रजपादिकम् ॥
मृतवत्सोदितः सर्वो विधिरत्र विधीयते ।
दशांशहोमः कर्तव्यः पालाशेन यथाविधि ॥
महानद्याः समायोगे आचार्यः शास्त्रयुक्तितः
स्नापयेदेकवस्त्रेण दम्पती मन्त्रपूर्वकम् ॥
रत्नानि तत्र देयानि फलानि च विशेषतः ।

इत्यनपत्यताहरविधिः । तथा वन्ध्यात्वे वायुपुराणे गौतमः-

चतुर्विधा च या वन्ध्या भवेद्वत्सवियोजनात् ।

अथवात्रविकल्पः 'अश्वापत्यवियोजनात्' ।

वक्ष्ये तस्याः प्रतीकारं तत्स्वरूपं निबोध मे ।
हिरण्येन यथाशक्ति सवत्सां कारयेत् दृढाम् ॥
धेनुं पलेन वत्सं च पादेन गुरुरब्रवीत् ।

हिरण्येन यथाशक्त्येति । पलेन तदर्धेन तदर्द्धार्द्धेन वा पुनरिति परिमाणोक्तावपि शक्त्यनुसारेण कुर्यादित्यर्थः । पलस्वरूपं परिमाणप्रकरणे निरूपितम् ।

धेनुं रूप्यखुरां रत्नं पुच्छे तस्या नियोजयेत् ।
घण्टां गले निबध्नीयात् सवत्सां प्राङ्मुखः शुचिः ॥
चन्दनागरुकर्पूरगन्धमाल्यैः सुशोभनैः ।
उपचारैः षोडशभिर्निवेद्यं पायसं भवेत् ॥
मोदकं च तथाऽपूपं गुडं लवणमेव च ।
जीरकं च सुविस्तीर्णे शूर्पे वेणुमये दृढे ॥
धेनुरेवं प्रदातव्या ब्राह्मणस्त्रीषु चैव हि ।
षडष्ट दश वा दद्यात्तदनन्तरमेव च ॥

उपचारैः षोडशभिरित्यादि । पूजयेदिति शेषः । मोदकादिभिः परिपूरितमेकं शूर्पं धेनोः पुरस्तात् स्थापयित्वोक्तद्रव्यपरिपूरितानि शूर्पाणि षडष्ट दश वा सभर्तृकाभ्यो ब्राह्मणीभ्यो दद्यादित्यर्थः ।

ब्राह्मणं सर्वशास्त्रार्थकुशलं धर्मवेदिनम् ।
विद्याविनयसम्पन्नं शान्तं चैव यतेन्द्रियम् ॥
अलोलुपं सर्वजनप्रियं कल्मषवर्जितम् ।
आहूय भक्त्या सम्पूज्य वस्त्राद्यैर्गन्धपुष्पकैः ॥
तेनैव कारयेत् पूजामादृतो धेनुवत्सयोः ।
होमं च कारयेत्तत्र समिदाज्यचरूत्कटम् ॥

पूजायां होमे च मन्त्रमाह—

सोमो धेनुमिति मन्त्रं समुच्चार्य ततः पुनः ।

अस्या गौतम ऋषिः धेनुर्देवता । त्रिष्टुप् छन्दः । विहितार्थे विनियोगः । सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं

दद्गाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ ( ऋ. मं. १, सू. ९१, मं. २० ) सोमे विनियुक्ताया अप्यस्या संयोगपृथक्त्वन्यायेनात्र धेनुरेव देवता। होममुत्कटं कारयेदित्यभिधानात् समिदादिभिः प्रत्येकमष्टोत्तरसहस्रं कुर्यात्। धेनुदानप्रकारमाह–

प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः ।
मन्त्रेणानेन विधिवत् पुच्छे हस्तं निधाय च ।

दानमन्त्रमाह सार्द्धश्लोकद्वयेन–

'धेनुर्याङ्गिरसां सत्रे प्रविष्टा सुरभेश्च या ।
दुहिता या तथा भानो रग्नेश्च वरुणस्य च ॥
याश्च गावः प्रवर्तन्ते वनेषूपवनेषु च ।
प्रीणन्तु ता मम सदा पुत्रपौत्रप्रदाः सुखम् ॥
प्रयच्छन्तु दिवारात्रमविच्छेदन्तु सन्ततेः' ।
एवं दत्वा तु तद्दानं प्रणिपत्य विसर्जयेत् ॥
[1]'वन्ध्यात्वं काकवन्ध्यात्वं कन्याप्रसव एव च ।
तथैव मृतवत्सा च दोषं मम? चतुर्विधम् ॥

इति वन्ध्यात्वहरसुवर्णधेनुदानम्[2] ।

अथ गर्भस्रावहर यज्ञोपवीतदानम् । अत्र निदानं वृद्धगौतमः–

स्रवद्गर्भा भवेत्सा तु बालकं हन्ति या विषैः ।

वायुपुराणे–

यज्ञोपवीतं कुर्वीत काञ्चनं तु स्वशक्तितः ।
अत्यन्तवर्णयुक्तं च राजतं चोत्तरीयकम् ॥

अत्यन्तवर्णयुक्तं काञ्चनमित्यन्वयः। उत्कृष्टमित्यर्थः। तेन काञ्चनेन वक्ष्यमाणपलादिमितेन स्वशक्तितो यज्ञोपवीतं कुर्वीत कारयेदित्यर्थः। तथा समीचीनं राजतमुत्तरीयं च। उभयत्र द्रव्यप्रमाणमाह–

पलार्द्धेन तदर्द्धेन तदर्द्धेनापि वा पुनः ।
ग्रन्थिप्रदेशे देयं तु मौक्तिकं वज्रमेव तु ॥

---

१ 'वध्यात्व' मित्यारभ्य 'चतुर्विध मित्यन्तमन्यत्र न दृश्यते ।
२ एतदनन्तरं 'अत्रच कर्मणि स्त्रीपुंसयोर्मिलितयोः प्रत्येकं वा यथानिमित्तमधिकारः' इति ख, ग, पुस्तकयोर्दृश्यते

पललक्षणं वक्ष्यमाणद्रोणलक्षणं च परिमाणप्रकरणेऽभ्यधायि। यज्ञोपवीतस्य ग्रन्थिस्थाने मौक्तिकं उत्तरीयस्य तु वज्रमिति विवेकः।

प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ।
द्रोणप्रमाणं तस्मिंस्तु निक्षिपेद्दधि मध्यतः ॥
आज्यस्योपरि संस्थाप्यमुपवीतं सुपूजितम् ।
गन्धपुष्पाक्षतैर्धूपैर्दीपैर्नैवेद्यैरपि भक्तितः ॥

पञ्चगव्यक्षालने गायत्र्या मन्त्रत्वेनोपादानादेव शिष्टपूजायामपि स एव मन्त्रः। एवं प्रक्षालितमुपवीतमुत्तरीयं च ताम्रभाजने निक्षिपेत्। कथमित्यत आह- द्रोणप्रमाणमित्यादि। अयमर्थः। द्रोण प्रमाणं दधि तस्मिन् ताम्रभाजने मध्यतः मध्ये निक्षिपेत्। दध्न उपर्याज्यम्। तत्प्रमाणं यथालाभोपपन्नप्रमाणं वा स्थापयेत्। श्रुत द्रोणप्रमाणपरित्यागे कारणाभावात् तत्प्रमाणत्वमाज्यस्य। आज्यस्यो-परि संस्थाप्यमुपवीतमित्यत्र वाज्यसंबन्धित्वेन परिमाण श्रवणात् द्रोणपरिमिताज्याऽसंभवे यथालाभोपपन्नप्रमाणमाज्यमिति व्यवस्था।

तत्रचाज्य उपवीतमुत्तरीयं च निक्षिपेत्। तदुपवीतं सुपूजितं कुर्यात्। युक्तं चतत्। उपवीतस्य गर्भस्थानीयत्वात्। दध्यादेश्च जराय्वादिस्थानत्वाच्च। उपवीतं सुपूजितमित्यत्रोपवीतशब्दः सह चरितमुत्तरीयमपि लक्षयतीति तत्सहचरितमेवोत्तरीयसहित मुपवीतं निक्षिप्य पूजयेदिति। पूजानन्तरं कर्तव्यमाह–

ततो ब्राह्मणमाहूय होमं तत्र च कारयेत् ।
तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम् ॥

होममन्त्राः व्याहृतयो गायत्री वा । व्याहृतीनामृष्यादि नवग्रहयज्ञप्रकरणे ग्रहाद्यावाहनप्रस्तावे दर्शितम् । गायत्र्यास्तु कूष्माण्डहोमप्रकरणे ।

तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु ।
मन्त्रेणानेन विधिवत् प्राङ्मुखायोपवीतकम् ।

मन्त्रमाह–

उपवीतं परमिदं ब्रह्मणा निर्मितं पुरा ।
भवनौकाऽस्य दानेन गर्भं सन्धारये ह्यहम् ॥

अत्र द्वितीयार्द्धस्यायमर्थः। भवनौका संसारे द्विजकर्मनिष्पाद् कत्वेन यतस्तारायितुमुपवीतं अतो नौरिव नौका। अथवा भव उत्पत्तिः। अपत्योत्पत्तिविरहितानामपत्योत्पत्तिदायकत्वेन पुंनामादिनरकोत्तार-कत्वान्नौरिव नौका। शिष्टं स्पष्टम्।

धनान्यपि ब्राह्मणेभ्यस्तस्मिन् काले प्रदापयेत्।
अनुव्रज्य तथाऽऽचार्यं प्रणिपत्य क्षमापयेत्॥
गर्भस्रावकराद्दोषादेवं कृत्वा विमुच्यते।

अस्मिन् कर्मणि स्त्रियामधिकारः। इति गर्भस्रावहरयज्ञोपवीत-दानम्। अथ प्रस्रवद्योनिशोणितहरम्। तत्र कर्मविपाकसङ्ग्रहे—

मासोपवासिनी नारी रेतः प्रास्रावयेद्यदि।
यतिसम्पर्कदोषेण जायते सान्यजन्मनि॥
स्रवद्रक्ता सदा योनौ तन्निष्कृतिरिहोच्यते।
मासोपवासं कुर्वीत तथा मासं पयोव्रतम्

मासोपासविधानं पयोव्रतस्वरूपं च कृच्छ्रप्रकरणे निरूपितम्। इति स्रवद्योनिशोणितहरम्। अथ स्त्रीस्तन्याक्षरणहरं कर्मविपाक-समुच्चये—

क्षीरं मुष्णाति या नारी पूर्वजन्मनि सुव्रता।
जन्मान्तरे तु तस्या वै क्षीरं न क्षरतः स्तनौ॥
क्षीरान्नं भोजयेद्विप्रान् साज्यं समधुमण्डकम्।

क्षीरान्नमध्वाज्यसहितान्मण्डकांश्च विप्रेभ्यो दद्यात्। विप्रानिति बहुवचनात् त्रयोऽवश्यं भोजनीयाः। तदुपरि शक्त्यनुसारेण।

अनुलिम्पेच्च तेनैव तूच्छिष्टान्नेन भक्तितः।
विप्रपादोदकैश्चापि क्षालयेत् कुचमण्डलम्॥
सुरामांसक्षौद्रघृताऽपूपान्नैर्गन्धपुष्पकैः।
भूतेभ्यश्च बलिं दद्यात् भूतान्यत्र च संशृणु॥
मधुश्च नवनीतश्च पिण्डसालोऽव्यचित्तकः।
भूतभव्यः सशक्तिश्च भूतानां पञ्चकं त्विदम्॥

[illegible] मध्वादीनां पञ्चानां विशेषणम् । अत्र सुरादीनि बलिद्रव्याण्यभिहितानि । तेषु ब्राह्मणादिभिरनिषिद्धान्येव ग्राह्याणि । इति [illegible] ।

महार्णवाख्ये महति प्रबन्धे

मान्धातृनाम्नो मदनात्मजस्य ।

[illegible] पूर्णोऽ

ष्टत्रिंशस्तरङ्गोय[illegible] ।

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे अष्टत्रिंशस्तरङ्गः

# एकोनचत्वारिंशस्तरङ्गः

अथ प्रकीर्णकप्रकरणमारभ्यते। तत्र रक्तार्बुदहरम्। उमामहेश्वर-संवादे-

विधवागमनेनापि नित्यं नारद वै यतिः।
रक्तार्बुदी भवेत् कुर्यात् प्रायश्चित्तं प्रशान्तये॥
कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथापि च।
एवमेवापि विधवा प्रकुर्याद्रोगशान्तये॥

कृच्छ्रादीनि व्याधिगुरुलघुभावेन समस्तानि वा द्विगुणानि वा योज्यानि। एतल्लक्षणानि च कृच्छ्रप्रकरणे दर्शितानि। इति रक्तार्बुदहरम्। अथ प्रकारान्तरेण रक्तार्बुदहरम्। शातातपः-

रक्तार्बुदी वैश्यहन्ता जायते धर्ममाचरेत्।

तमेव धर्ममाह-

प्राजापत्यानि चत्वारि सप्तधान्यानि चोत्सृजेत्।

ब्राह्मणेभ्य इति शेषः। सप्तधान्यानि व्रीहियवादीनि यथालाभोपपन्नानि। प्राजापत्यस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि। इति प्रकारान्तरेण रक्तार्बुदहरम्। अथ प्रदररोगहरम्। कर्मविपाकसङ्ग्रहे-

मात्रा वा गुरुणा वापि यो नरः शास्त्रनिर्णये।
स्पर्द्धतेऽसौ प्रजायेते प्रदरव्याधिमान् नरः॥
चान्द्रायणं प्रकुर्वीत कृच्छ्रं चैवातिकृच्छ्रकम्।
तद्विष्णोरिति जपे द्युतत्रयसङ्ख्यया॥
सर्पिर्मधुसमायुक्तमण्डकान्नेन भोजयेत्।
विप्रान् तत्पादसलिलान्मार्जयेत् प्रदरं तथा॥

मात्रा चेत्यादि। मात्रा गुरुणा पित्रा तथाऽऽचार्यादिभिश्च यो नरः शास्त्रनिर्णये शास्त्रविचारविषये स्पर्द्धते कुतर्केण तदुक्तमन्यथानयन् विवदते स एवंव्याधियुक्तो भवतीत्यर्थः। चान्द्रायणादीनां स्वरूपाणि कृच्छ्रप्रकरणे निरूपितानि। तद्विष्णोरित्यत्र ऋग्द्वयं

मन्त्रः। अयं च मन्त्रः कर्णशूलहरे प्रदर्शितः। विप्रांस्त्रिचतुरादीन् स्वशक्त्यनुसारेण भोजयेदित्यर्थः। इति प्रदररोगहरम्। अथासृग्दरहर-धेनुदानम्। एतन्निदानं पद्मपुराणे–

असृग्दरी स भवति यस्तु हिंस्याद्वृथा पशून्।

वृद्धबौधायनस्तु–

असृग्दरी दारयति यो वृक्षाननिविस्तृनान्

अत्र निष्कृतिमाह गौतमः–

धेनुं पयस्विनीं दान्तां लोहितां हेमशृङ्गिकाम्।
तथा रूप्यखुरां रक्तवस्त्रेण समलङ्कृताम्॥
ब्राह्मणायाग्निवर्णाय दद्यात् सत्कृत्य मानवः।

अग्निवर्णाय कपिलवर्णाय। तदभाव आरक्तवर्णाय।

पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः।
सुवर्णेन युतां शुभ्रां यथास्वविभवेन तु॥
द्विजोत्तमाय श्रेष्ठाय सर्वशास्त्रार्थवेदिने।
धेनुं तामतिसंहृष्टो मन्त्रेणानेन भक्तितः॥

दद्यादिति पूर्वेणान्वयः। पलस्वरूपं परिमाणप्रकरणेऽभ्यधायि। गोदानमन्त्रमाह–

गावो मे वाग्रतः सन्तु गावो मे सन्तु पृष्ठतः।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्॥
देवानां त्वं च सुरभिः क्षपयासृग्दरं मम।
विनाशयति गोदानमपि दीर्घमसृग्दरम्।
तेनेदं यत्नतः कुर्यादसृग्दरगदार्दितः॥

इत्यसृग्दरहरधेनुदानम्। अथाकस्मिककार्श्यहररुद्रमूर्तिदानम्। वायुपुराणे–

अन्नचोरी भवेद्यस्तु सोऽकस्माज्जायते कृशः।
वक्ष्ये तस्य प्रतीकारं दानहोमाभिषेचनैः॥
पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः।
सुवर्णेन प्रतिकृतिं कुर्याद्रुद्रस्य भक्तितः॥

पलस्वरूपं परिमाणप्रकरणे निरूपितम्।

मन्त्रः । अयं च मन्त्रः कर्णशूलहरे प्रदर्शितः । विप्रांस्त्रिचतुरादीन् स्वशक्त्यनुसारेण भोजयेदित्यर्थः। इति प्रदररोगहरम्। अथासृग्दरहर-धेनुदानम्। एतन्निदानं पद्मपुराणे–

असृग्दरी स भवति यस्तु हिंस्याद्वृथा पशून् ।

वृद्धबौधायनस्तु–

असृग्दरी दारयति यो वृक्षानातिविस्तृतान्

अत्र निष्कृतिमाह गौतमः–

धेनुं पयस्विनीं दान्तां लोहितां हेमशृङ्गिकाम् ।
तथा रूप्यखुरां रक्तवस्त्रेण समलङ्कृताम् ॥
ब्राह्मणायाग्निवर्णाय दद्यात् सत्कृत्य मानवः ।

अग्निवर्णाय कपिलवर्णाय । तदभाव आरक्तवर्णाय ।

पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
सुवर्णेन युतां शुभ्रां यथास्वविभवेन तु ॥
द्विजोत्तमाय श्रेष्ठाय सर्वशास्त्रार्थवेदिने ।
धेनुं तामतिसंहृष्टो मन्त्रेणानेन भक्तितः ॥

दद्यादिति पूर्वेणान्वयः। पलस्वरूपं परिमाणप्रकरणेऽभ्यधायि । गोदानमन्त्रमाह–

गावो मे वाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥
देवानां त्वं च सुरभिः क्षपयासृग्दरं मम ।
विनाशयाति गोदानमपि दीर्घमसृग्दरम् ।
तेनेदं यत्नतः कुर्यादसृग्दरगदार्दितः ॥

इत्यसृग्दरहरधेनुदानम् । अथाकस्मिककार्श्यहररुद्रमूर्तिदानम् । वायुपुराणे–

अन्नचोरी भवेद्यस्तु सोऽकस्माज्जायते कृशः ।
वक्ष्ये तस्य प्रतीकारं दानहोमाभिषेचनैः ॥
पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
सुवर्णेन प्रतिकृतिं कुर्याद्रुद्रस्य भक्तितः ॥

पलस्वरूपं परिमाणप्रकरणे निरूपितम् ।

यथाविभवसारेण त्रिनेत्रं चतुराननम् ।
चतुर्बाहुं ध्यानपरमुपविष्टं सुखासने ॥
व्याघ्रचर्मपरीधानं नागयज्ञोपवीतिनम् ।

सौवर्णेन राजतेन वा नागयज्ञोपवीतिनं कुर्यादित्यर्थः ।

श्वेतवस्त्रेण संवेष्टय तण्डुलोपरि विन्यसेत् ।
तण्डुलानां परिमाणं द्रोणानां तु चतुष्टयम् ॥
यद्वा स्वविभवेनैव तत्र पूजां प्रकल्पयेत् ।
गन्धमाल्यैः सुरभिभिः श्वेतैर्नानाविधैरपि ॥
उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित् ।
मूलमन्त्रेण कार्यं च सर्वं रुद्रस्य चार्चनम् ॥

मूलमन्त्रः शैवपञ्चाक्षरो रुद्रगायत्री वा । आद्यः शूलरोगहरत्रिशूलदाने दर्शितः । द्वितीयस्तु दद्रुरोगहरोमामहेश्वरदाने ।

होमश्च तत्र कर्तव्यः स्थण्डिले सुपरिष्कृते ।
स्वगृह्योक्तविधानेन चाग्नेः संस्थापनं भवेत् ॥
समिदाज्यतिलैर्मन्त्रानिमांस्तत्र निशामय ।
त्र्यम्बकं कद्रुद्रायेति आतेपितरिति क्रमात् ॥
सङ्ख्या चाष्टोत्तरशतं प्रत्येकमिह दृश्यते ।
हुत्वा हुत्वा च सम्पातान् पात्रे कुर्याद्विधानतः ॥

त्र्यम्बकं यजामहे इत्यस्यार्षाद्युष्णज्वरहरेऽभिहितम् । कद्रुद्रायेत्यस्यास्तु दद्रुहरोमामहेश्वरदाने । आते पितरि मरुतामित्यस्या ऋग्विधानोक्तासाध्यसर्वरोगहरे । सम्पातानिति । आज्यहोमं कृत्वा प्रत्याहुति सम्पातान् स्रुवादिस्थितानाज्यबिन्दून् पृथक् पृथक् पात्रे कुर्यात् । एभिः सम्पातैराज्यबिन्दुभी रोगिणः शरीरं वक्ष्यमाणे समयेऽभ्यंञ्जयेत्—

अग्नेः पूर्वोत्तरे देशे स्थापयेत् कलशं दृढम् ।
वाससा वेष्टयित्वा च पञ्चपल्लवसंयुतम् ॥

पल्लवानि चाम्राश्वत्थवटप्लक्षोदुम्बराणाम् ।

अश्वस्थानात् गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।
प्रक्षेप्तव्या मृत्तिका च रोचना गुग्गुलस्तथा ॥

तेनाभिषेकं कुर्वीत होमान्तेऽभ्यज्य तं गुरुः ।
आपोहिष्ठादिभिस्तद्वत् हिरण्यादिभिरेव च ॥
पवमानानुवाकेन शन्नो वाकेन चैव हि ।

तेन कलशस्थोदकेनाभ्यज्य पूर्वोक्तैः सम्पातवाच्यैराहुतिबिन्दुभिः तं रोगिणं गुरुराचार्यः । आपो हिष्ठेत्यृचौ हिरण्यवर्णा इति ऋचश्च परिभाषायां रोगप्रतिमादानविधौ दर्शिताः । पवमानानुवाको गणहोमप्रकरणे । शन्नोवाकेनेति । अनेन च स्वस्वशाखोक्ता शान्तिरुपलक्ष्यते । तत्र शन्नो वातः पवता मिति तैत्तिरीयशान्तिस्तथा नो भद्राः क्रतव इत्याश्वलायनशान्तिश्च परिभाषायां दर्शिता । अभिषेकानन्तरकर्तव्यमाह-

ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
मूलमन्त्रेण च पुन स्तस्मै हुतवतेऽर्थिने ॥
दद्यात्तां देवदेवस्य प्रतिमां शङ्करस्य च ।
मन्त्रेणानेन विधिवत् प्राङ्मुखाय ह्युदङ्मुखः ॥

मूलमन्त्रेणेति । पूर्वोक्तपञ्चाक्षरेण रुद्रगायत्र्या वा । पूर्वमाचार्येण षोडशोपचारपूजितां रुद्रप्रतिमां पुनर्यजमानः सम्पूज्य हुतवते तस्मा आचार्यायाऽर्थिने दद्यात् । अर्थिन इति विशेषणसामर्थ्या द्दद्यादाचार्यो न प्रतिगृह्णीयात् तर्ह्यन्यस्मै श्रोत्रियाय कुटुम्बिने दद्यादिति गम्यते । श्लोकद्वयेन दानमन्त्रमाह-

देवदेव महेशान वृषभध्वज शङ्कर ।
अन्नचौर्येण यत्पापं कृतं जन्मान्तरे मया ॥
तेन तज्जनितं कार्श्यमसह्यं मम देहजम् ।
तव दानेन दत्तेन प्रीतो मां रक्ष पापिनम् ॥
एवं यो विधिनानेन शङ्करप्रतिमां नरः ।
ददाति विप्रवर्याय स कार्श्याद्विप्रमुच्यते ॥
पुण्याहवाचनं कृत्वा ब्राह्मणानपि भोजयेत् ।

इति कृशत्वहररुद्रमूर्तिदानम् । अथास्थिरोगहरम् । कर्मविपाकसमुच्चये-

न करोति महायज्ञानस्थिरोगी स जायते ।
कृच्छ्रं चान्द्रायणं कुर्याच्छक्त्या विप्रांश्च भोजयेत् ॥
ईप्सितान्नेन दद्याच्च हिरण्यं च स्वशक्तितः ।
वात आवात मन्त्रं हि जपेद्रोगाद्विमुच्यते ॥

महायज्ञान् पञ्चमहायज्ञान् । कृच्छ्रचान्द्रायणयोर्लक्षणं कृच्छ्रप्रकरणे वर्णितम् । अनयोराचरणानन्तरं विप्रांश्च शक्त्यनुसारेण भोजयेत् । येभ्यो निमन्त्रितेभ्यो विप्रेभ्यो यदन्नं रोचते तेन । तेभ्यश्च हिरण्यं दक्षिणां दद्यात् । वात आवातु भेषज मित्यमुं मन्त्रं कृच्छ्राद्याचरणदिनेषु प्रतिदिनमऽष्टोत्तरसहस्रं जपेत् । अयं च मन्त्रो वातरोगहरप्रायश्चित्ते दर्शितः । यदि कृच्छ्रादिकं प्रत्याम्नायभूतगवादिद्वारा निष्पादयति तदा कृच्छ्रचान्द्रायणयोर्दिनानि परिगण्यतावन्ति सहस्राणि जपेत् । इत्यस्थिरोगहरम् । अथ मेदोवृद्धिहरम् । शातातपः-

दधिचौरस्तु पुरुषो युक्तो भवति मेदसा ।
दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये ॥

दधिधेनुविधानन्तु शातातपप्रोक्तराजयक्ष्महरेऽभ्यधायि । इति मेदोवृद्धिहरम् । अथ मृतभार्यत्वदुष्कर्महरं कर्मविपाकसङ्ग्रहे-

ज्येष्ठभ्रातर्यनूढे तु योऽनुजोऽद्वहति स्त्रियम् ।
स भवेन्मृतपत्नीक उष्णज्वरसमन्वितः ॥
प्राजापत्यत्रयं कुर्यादैन्दवत्रयमेव वा ।
तामग्निमितिचाज्येन चरुणाष्टोत्तरायुतम् ॥
जुहुयात् भोजयेद्विप्रानेवं पापात् प्रमुच्यते ।

प्राजापत्यत्रयमित्यादि । सकृन्मृतभार्यः प्राजापत्यत्रयं द्विश्चेत् चान्द्रायणत्रयं पुनः पुनश्चेत् प्राजापत्यत्रयं चान्द्रायणत्रयं च । अत एव वा शब्दोऽव्यवस्थितविकल्पार्थे । तामग्निवर्णामित्यस्य सूक्तस्यर्षिदेवतादि स्त्रीस्तनस्फोटहरेऽभिहितम् । अर्द्धं चरुणाऽर्द्धमाज्येन । प्रथमं चरोः पश्चादाज्यस्य । ततः पाठक्रमो न विवक्षितः । प्रत्यृचं च होमः । अग्निस्थापनं च गृह्योक्तप्रकारेण । इति मृतभार्यत्वदुष्कर्महरम् । अथ प्रकारान्तरेण मृतभार्यत्वदुरितहरं शातातपप्रोक्ते-

[1]पौत्रभार्याभिगामी च मृतभार्यः प्रजायते ।
तस्य पापविशुद्ध्यर्थं द्विजमेकं विवाहयेत् ॥

इति प्रकारान्तरेण मृतभार्यत्वदुरितहरम् ।

स्त्रीणान्तु विपरीतविधिः ।

भर्तारं वञ्चयित्वा तु मृतभर्ता प्रजायते ।
तस्या वैधव्यनाशाय प्राजापत्यत्रयं चरेत् ॥
ऐन्दवत्रयमेवाथ विप्रोद्वाहनपूर्वकम् ।
गोदानं च तं दद्याद्यथाशक्त्यभिशोभिताम् ॥
अस्य कर्मक्षयं कृत्वा न पुनर्जायते भुवि ।

इति मृतभर्तृप्रायश्चित्तं ।

अथ स्त्रीविरक्तिहरं कर्मविपाकसमुच्चये–

धर्मपत्न्यां सुव्रतायां मुखे मैथुनकारिणः ।
पत्न्यां विरक्तिर्भवति सुवर्णकलशेन सः ॥
उमामहेश्वरं देवं रुद्रैकादशिनीं जपन् ।
स्नापयेत् श्रद्धया युक्तो ह्यविच्छिन्नांबुधारया ॥
त्र्यम्बकेण च मन्त्रेण जुहुयाच्च जपेदपि ।

उमामहेश्वरमित्यादि। यदि क्वचन देवतायतन उमामहेश्वरप्रतिमा लभ्यते तर्हि तत्रैवाभिषेकः। अथ कथमपि न लभ्यते तदा स्वशक्त्या सुवर्णेनोमामहेश्वरप्रतिमां राजतवृषभारूढां कारयित्वा तत्रो मामहेश्वरावावाह्याभिषेकं कुर्यात्। रुद्रैका दशनीलक्षणं परिभाषायां रुद्रविधाने दर्शितम्। तथाभिषेकप्रकारोपि। अविच्छिन्नाम्बुधारये-त्यम्बुग्रहणं प्रदर्शनार्थं। रुद्रविधान अभिषेकविधौ क्षीरेक्षुरसादीनां प्रदर्शितत्वात्। होमे त्र्यम्बकमन्त्रः। स चोष्णज्वरे दर्शितः। अनेनैव जपः। जपहोमयोश्च सङ्ख्या अनुक्तत्वादष्टोत्तरायुतमष्टो-त्तरसहस्रं च। एवमभिषेकानन्तरं तां सुवर्णप्रतिमां कलशं च ब्राह्मणाय दद्यात्। इति स्त्रीविरक्तिहरम्। अथ मृतवत्सत्वहरं शातातपप्रोक्ते–

---

[1] मित्र इति ख, ग, पा ८

बालघाती च पुरुषो मृतवत्सः प्रजायते ।
ब्राह्मणोद्वाहनं चैव कर्तव्यं तेन शुध्यति ॥
[1]स्त्रीबालघातिनीनारी म्रियन्तेऽस्याः सुताः शुभाः ।
तत्पापस्य विशुध्यर्थं विप्रोद्वाहन पूर्वकम् ॥
दद्यात्स्वर्णमयीं नारीं पुत्रैर्युक्तां स्वशक्तितः ।

अन्यत्सर्वं पुंवत् ।

श्रवणं हरिवंशस्य कर्तव्यं च यथाविधि ॥
महारुद्रजपं चैव कारयेच्च यथाविधि ।
जुहुयात्तद्दशांशेन दूर्वामाज्यपरिप्लुताम् ॥
एकादश स्वर्णनिष्काः प्रदातव्याश्च दक्षिणा ।
एकादश पशूंश्चैव दद्याद्वित्तानुसारतः ॥
अन्येभ्योऽपि यथाशक्ति द्विजेभ्यो दक्षिणां दिशेत् ॥
स्नापयेद्दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः ।
आचार्याय प्रदेयानि वस्त्रालङ्करणानि च ॥

ब्राह्मणोद्वाहनं चैवेत्यादि । ब्राह्मणोद्वाहनं चैव कर्तव्यं तेन शुद्ध्यतीति ब्राह्मणोद्वाहनस्यैव पापविमुक्तिहेतुत्वाभिधानादेतत्स्वतन्त्रतया निष्कृतिः । तेन शुध्यतीत्येतत् काकाक्षिवदुभयत्र सम्बध्यते । अतः श्रवणं हरिवंशस्येत्युत्तरवाक्यस्यापि तेन शुध्यतीत्येवं विशेषः। तथा च हरिवंशस्य श्रवणं द्वितीया निष्कृतिः । हरिवंशश्रवणविधिस्तु त्वग्दोषहरप्रकरणे लूतकित्वहरे निरूपितः। विशेषप्रयोग क्रमस्त्वत्र निरूप्यते। तद्यथा। दम्पत्योरनुकूले शुभे दिने स्वस्तिवाचनं कृत्वा स्वशक्त्यनुसारेण विनायकशान्तिपूजां विधाय विभवानुसारेण पुत्रकामनया ' हरिवंशश्रवणं करिष्यावहे करिष्य ' इति वा सङ्कल्पयेत् । दम्पत्योः श्रवणकर्तृत्वे करिष्यावह इति प्रयोगोऽन्यतर कर्तृत्वे करिष्य इति । एवं सङ्कल्प्य श्रुताध्ययनसम्पन्नं ब्राह्मणं विभवानुसारेण वस्त्रमुद्रिकाकुण्डलताम्बूलादिभिस्सम्पूज्य तं श्रावणे वृणीत । ' एभिश्चन्दनताम्बूलादिभिर्हरिवंशश्रावणे त्वामहं वृण ' इति प्रयोगः । तत्र प्रतिदिनमसत्यात्यन्तिकप्रतिबन्धे स्नानालङ्कृतौ दम्पती तदेकाचित्ततया शृणुयाताम् । प्रतिदिनमाचार्यं पुस्तकं च

---

१ इतः आरभ्य ' स्वशक्तित ' इत्यन्तं अन्यत्र न दृश्यते ।

पूजयेत्। अन्ते च स्वलङ्कृतां गां पयस्विनीं सवत्सां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्यदोहनां सवस्त्रां स दक्षिणां च दद्यात्। गोदानमन्त्रश्चासृग्दरहरधेनुदाने प्रदर्शितः। विनायकशान्तिस्तु परिभाषायां दर्शिता।

प्रकृतमनुसरामः। ब्राह्मणोद्वाहनमेकं प्रायश्चित्तमपरं हरिवंशश्रवणम्। परिशेषान्महारुद्रजपोपि तृतीयं प्रायश्चित्तम्। अत एवा नवस्थिताश्चशब्दार्थाः। एतानि त्रीण्यपि शक्त्याद्यपेक्षया व्यस्तानि समस्तानि वा योज्यानि। महारुद्रजपलक्षणं दशांशहोमप्रकारो रुद्रानुवाकानामृच्यादि च सर्वं परिभाषायां रुद्रविधाने समुपवर्णितम्। निष्कलक्षणं परिमाणप्रकरणेऽभ्यधायि। एकादश पशूंश्चैवेति। पशुरत्र गौः रुद्राय गामिति श्रुतेः। वरुणदैवता मन्त्राः कस्यनूनं कतमस्यामृतानामित्यादयः। तथा स्वस्वशाखोक्ता वारुणमन्त्राः तथा पवमानः सुवर्जन इत्यादयश्चात्राभिषेके ग्राह्याः। पवमानः सुवर्जन इत्ययमनुवाको गणहोमप्रकरणे दर्शितः। कस्य नूनमित्यस्य पञ्चदशर्चस्य सूक्तस्याजीगर्तः शुनःशेप ऋषिः। असावेव वैश्वामित्रो देवरात इति चोच्यते। वरुणो देवता। आद्या कार्वी। द्वितीयाऽग्नेयी च तृतीयाद्यास्तिस्रस्सावित्र्यश्च। पञ्चमी भगदैवत्या च। त्रिष्टुप् छन्दः। तृतीयाद्यास्तिस्रो गायत्र्यः। विहितार्थे विनियोगः।

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम।
का नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च १
अग्ने वयं प्रथमस्यामृतानां मनामहे चारुदेवस्य नाम।
स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च २
अभि त्वा देव सवित रीशानं वार्याणाम्। सदावन् भागमीमहे ३
यश्चिद्धि त इत्था भगः शशमानः पुरा निदः। अद्वेषो हस्तयोर्दधे ४
भगभक्तस्य ते वय मुदशेम तवावसा। भूर्धानं राय आरभे ५
नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः।
नेमा आपो अनिमिषं चरन्ती र्न ये वातस्य प्रमिनन्त्यभ्वम् ६
अबुध्ने राजा वरुणो वनस्यो र्ध्वं स्तूपं ददते पूतदक्षः।
नीचीनाः स्थुरुपरि बुध्न एषा मस्मे अन्तर्निहिताः केतवः स्युः ७

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽक रुतापवक्ता हृदयाविधश्चित् ८
शतं ते राजन् भिषजः सहस्र मुर्वी गभीरा समतिष्टे अस्तु ।
बाधस्व दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ९
अमी यऋक्षा निहितास उच्चा नक्तं दहृश्रे कुह चिद् दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशचन्द्रमा नक्तमेति १०
तत् त्वा यामि ब्राह्मणा वन्दमानस् तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्यु रुशंस मान आयुः प्र मोषीः ११
तदिन्नक्तं तद् दिवा मह्यमाहुस् तदयं के तो हृद आ वि चष्टे ।
शुनः शेपो यमह्वद् गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु १२
शुनः शेपो ह्यह्वद् गृभीतस् त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद् विद्वाँ अदब्धो विमुमोक्तु पाशान् १३
अव ते हेळो वरुण नमोभि रव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि १४
उदुत्तमं वरुण पाशमस्म दवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवा नागसो अदितये स्याम १५

(ऋ. मं. १, सू. २४.)

इति कस्य नूनमिति सूक्तम् । इति मृतपुत्रत्वहरम् । अथानपत्यत्वहरं शातातपः-

> विप्रो रत्नापहारी यः सोऽनपत्यः प्रजायते ।
> तेन कार्यं विशुध्यर्थं महारुद्रजपादिकम् ॥

आदिशब्दः प्रतिलोमाभिप्रायेण हरिवंशश्रवणब्राह्मणोद्वाहने लक्षयति । ते च प्रागेव मृतपुत्रत्वहरे दर्शिते । अमुमेवाभिप्रायमाविष्करोति-

> मृतवत्सोदितः सर्वो विधिरत्र विधीयते ।
> दशांशहोमः कर्तव्यः पालाशेन यथाविधि ॥

दशांशहोमो महारुद्रजपो महारुद्रलक्षणं दशांशहोमस्तत्र मन्त्रविभागप्रकारश्चेत्येतत्सर्वं परिभाषायां रुद्रविधाने निरूपितम् ।

दशांशहोमे द्रव्यमाह पा[illegible]नेति । [illegible] । एक-
वचनं [illegible]येण । इत्यनपत्यत्वहरम् । अथ मृतपुत्रत्वविशिष्ट-
चर्मकीलत्वहरं कर्मविपाकसङ्ग्रहे–

अष्टकादिपितृश्राद्धहीनो निःशङ्कघातकः ।
प्राणिनां [illegible] गुरुद्वेषी तथापरः ॥
भक्षको [illegible] नरकान्तेऽन्यजन्मनि ।
मृतपुत्रश्चर्मकीलव्याधियुक्तो भवेन्नरः ॥
दुर्मनाश्चैव जायेत तस्येयं निष्कृतिः परा ।
कृच्छ्रचान्द्रायणे कुर्याद्धोमः कू[illegible] ॥
गणहोमं [illegible] भूमिदानं तथापरम् ।
कन्यादानं च पञ्चम्यां श्राद्धं कुर्वीत यत्नतः ।
सहस्रनामजापी च भवेदेवं विमुच्यते ॥

अष्टकादीत्यादि। अधिकारे सत्यष्टकादि पितृश्राद्धरहितः। प्राणिनां निःशङ्कघातकः इत्यन्वयः। एतान्यष्टकादिपितृश्राद्धराहित्यादीनि पञ्चापि पृथक् पृथक् निमित्तानि। कृच्छ्रचान्द्रायणयोर्लक्षणं कृच्छ्र-प्रकरणे निरूपितम्। कूष्माण्डहोमो गणहोमश्च परिभाषायां दर्शितः। पञ्चम्यां श्राद्धमित्यन्वयः। सहस्रनामजापीति ताच्छील्ये णिनिः। अतो यावद्व्याधिप्रमोकस्तावत्सहस्रनामस्तोत्रं जपेत्। अस्य चार्षादि परिभाषायामेवाभ्यधायि। कृच्छ्रादीन्येतानि व्याधिगुरु-लघुत्वापेक्षया शक्त्याद्यपेक्षया वा व्यस्तानि वा समस्तानि वा योज्यानि। इति मृतपुत्रत्वविशिष्टचर्मकीलत्वहरम्। अथ दन्ता पातनकत्वहरं शातातपप्रोक्ते–

दन्तापातनकायुक्तः शूद्रहन्ता भवेन्नरः ।

दन्तपातनमेव दन्तपातनकं तेनाऽयुक्तः। अथवा दन्तापातनकमिति रोगान्तरम्। दण्डापतनकमित्यपि पाठः। अत्र निष्कृतिमाह–

प्राजापत्यं चरेदेकं दद्याद्धेनुं सदक्षिणाम् ।

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणे निरूपितम्। धेनुदानमन्त्रस्तु नव-ग्रहयज्ञप्रकरणे दक्षिणादानप्रस्तावेऽभिहितः। इति दन्तापातनकत्व-हरम्। अथ सर्वाङ्गवेदनाहरं कर्मविपाकसमुच्चये–

श्रुतिस्मृतिनिषिद्धानि यानि दानानि सन्ति वै ।
अजाश्वमहिषादीनां तत्प्रतिग्रहकारणात् ॥
निषिद्धयोषिद्गमनात् द्विजाग्र्यस्य वधादपि ।
वेदस्य च परीक्षायां दस्युव्याघ्रादिभिर्हृतौ ॥
विषोद्बन्धनशस्त्रादिमरणात् गुर्वधः कृतेः ।
तडागादेश्च भङ्गाच्च बाह्यशास्त्रोपजीवनात् ॥
ब्राह्मणस्वापहरणात्सर्वाङ्गेषु प्रजायते ।
वेदना दारुणा तद्वत् ज्वरस्तदुपशान्तये ॥
कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथापरम् ।
गोभूहिरण्यवासांसि दद्यात्कुर्याज्जपं तथा ॥
तद्विष्णोरितिमन्त्रस्य ऋचस्यात्रायुतत्रयम् ।

कृच्छ्रातिकृच्छ्रचान्द्रायणानां स्वरूपं कृच्छ्रप्रकरणे निरूपितम् । गोदानादिदानमन्त्राः प्रायश्चित्तोपक्रमपद्धतौ निरूपिताः । तद्विष्णोरिति ऋचः कर्णशूलहरे ।

ब्रह्मपुराणे

पानीयं पायसं मुद्गाः शर्कराघृतसंयुताः ।
इदमावश्यकं देयं सर्वरोगोपशान्तये ॥

इति सर्वाङ्गवेदनाहरम् । अथाप्रतिष्ठितत्वहरं शातातपप्रोक्ते—

प्रतिमाया भङ्गकारी त्वप्रतिष्ठः प्रजायते ।
संवत्सरत्रयं सिञ्चेदश्वत्थं सोऽनुवासरम् ॥
उद्वाहयेत्तमश्वत्थं समं शम्या विधानतः ।

अश्वत्थश्चात्र सेकरोपित एव ग्राह्यः । यदि शमी स्वतः समीपस्था भवति तर्हि तया सह । अथ न लभ्यते तदा वृषोत्सर्ग इव वत्सां शमीशाखां तदभावे कुशस्तम्बं वा समानीय विधानतो विवाहः कार्यः । शिष्टाचारप्राप्तविधानं त्वेतत् । शुभे दिने चन्द्राद्यनुकूलेऽश्वत्थं शमीं च वस्त्रादिभिरलङ्कृत्य स्वगृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य व्याहृतिभिस्तिलानाज्यं च पृथक् पृथगष्टोत्तरशतं सहस्रं वा हुत्वा ब्राह्मणान् भोजयित्वा यथाशक्ति दक्षिणां दद्यादिति । एवमश्वत्थोद्वाहनं विधाय तत्र विनायकमश्वत्थमूले संस्थाप्य पूजयेदित्याह—

अत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् ।

अत्राश्वत्थमूले समीपे वा विनायकमूर्तिं दार्वादिभिर्निर्माय तस्य च यथाविधिप्रतिष्ठां विधाय तत्र विनायकं व्याहृतिभिः संस्थापयेत् । तत्रायं प्रयोगः । ' ओं भूर्भुवः स्वः विनायक इहागच्छेह तिष्ठे ' ति मन्त्रमुच्चार्यैः प्रतिमायामावाहयेदिति । ततश्च षोडशोपचारैः पूजां कुर्यात् । अत्र च विनायकप्रकाशका मन्त्रा ग्राह्याः । ते च मन्त्रा नवग्रहमखप्रकरणे विनायकशान्तौ च दर्शिताः । अग्नावपि तिलानाज्यं च जुहुयात् । व्याहृतिभिरश्वत्थविवाहो विनायकप्रतिष्ठा चेति द्वे कर्मणी । उभयोर्मिलितयोः प्रयोगक्रमः । शुभे दिनेऽश्वत्थसमीपे ब्राह्मणानुपवेश्य स्वगृह्योक्तप्रकारेण स्वस्तिवाचनं विधायाग्निं प्रतिष्ठाप्याश्वत्थं शमीं च पूर्वोक्तप्रकारेण ष्यलङ्कृत्य विनायकं पञ्चामृतैः स्नापयित्वा तस्यालये स्थाप्य पूर्वोक्तरीत्याऽवाह्य प्रतिष्ठाप्य पूजयित्वा ब्राह्मणान् भोजयित्वा दक्षिणां दद्यादिति । इत्यप्रतिष्ठितत्वहरम् । अथ पुण्डरीकत्वहरं शातातपप्रोक्ते—

कांस्यहारी च भवति पुण्डरीकसमन्वितः ।
कांस्यं शतपलं दद्यादुपोष्य दिवसं नरः ॥

पलपरिमाणं परिमाणप्रकरणे निरूपितम् । इति पुण्डरीकत्वरोगहरम् । अथ कुब्जत्वहरं । शातातपप्रोक्ते—

कुब्जो मूलकहा दद्यात्सप्तधान्यं सकाञ्चनम् ।

अत्र परिमाणविशेषानभिधानाच्च स्वपरिमाणं राशीकृतं ग्राह्यम् तच्च व्रीहियवादिकं ग्राह्यम् । सप्तधान्यमित्येकवद्भावात् समुदितमेव । काञ्चनं शक्त्यनुसारेण धान्यराशौ स्थापनीयम् । सकाञ्चनमित्युक्तत्वात् । दक्षिणा च पृथग्दातव्या । दानाङ्गत्वात्तस्याः । इति कुब्जत्वहरम् । अथ निकृष्टत्वहरं । शातातपप्रोक्ते—

अनिवेद्य सुरादिभ्यो भुञ्जानो जायतेऽधरः ।
स भोजयेत्सहस्रन्तु शतं वापि द्विजोत्तमान् ॥

सुरादिभ्यः हरिहरादिभ्यो वैश्वदेवकर्म देवताभ्यश्च । आदिशब्दादतिथिपुत्रादिभ्यश्च । अधरः निकृष्टो दरिद्र इति यावत् । शतसहस्र-

सङ्ख्याविकल्पः शक्त्याद्यनुसारेण । इति निकृष्टत्वहरम् । अथ सदादुःखहरं कर्मविपाकसङ्ग्रहे—

> सर्वदा दुःखचित्तः स्यात्परचित्तविनाशकः ।
> चान्द्रायणद्वयं कुर्यादुदु त्यं जातवेदसम् ॥
> एतत्सूक्तं जपन् नामत्रितयं च विमुच्यते ।

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणे निरूपितम् । उदु त्यं जातवेदस मित्यस्य त्रयोदशर्चस्य सूक्तस्य प्रस्कण्व ऋषिः । सूर्यो देवता । आद्या नव गायत्र्योऽन्याश्चतस्रोऽनुष्टुभः । जपे विनियोगः । एतत्सूक्तं पाठतः परिभाषायां महासौरवर्गेषु दर्शितम् । नामत्रयस्यादि वातरोगहरे द्रष्टव्यम् । अनयोश्च जपश्चान्द्रायणाचरणदिनेषु दिवा कर्माविरोधिनि काले कर्तव्यः । प्रत्याम्नायद्वारा चान्द्रायणकरणे प्रत्येकमयुतं जपेत् । इति सर्वदुःखहरम् । अथ सर्वकार्यासिद्धिहरं शातातपप्रोक्ते—

> सर्वकार्येष्वसिद्धार्थो गजघाती भवेन्नरः ।
> प्रासादं कारयेत्तत्र गणनाथस्य भक्तितः ॥
> अथवा गणनाथस्य मन्त्रं लक्षं जपेद्बुधः ।
> दशांशहोमः पुष्पैश्च गणशान्तिपुरस्सरम् ।

प्रासादो देवालयः । गणनाथस्य मन्त्रो गणानां त्वेत्यादिः । अस्य गृत्समद ऋषिः । गणपति र्देवता । गायत्री छन्दः । जपे विनियोगः ।

> गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
> ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥
> (तै. २, ३, १४)

आतून इन्द्र इति तु नवग्रहयज्ञप्रकरणे दर्शितः । गणपतिगायत्रीं वा जपेत् । इयन्तु विनायकशान्तौ दर्शिता । अथवा स्वस्वशाखा समाम्नाता विनायकप्रकाशका वा स्वोपदेशानुसारेण वक्रतुण्डगणपतिमन्त्रादयो वा ग्राह्याः । पुष्पाणि करवीरादीनि श्वेतानि रक्तानि वा । गणशान्तिः विनायकशान्तिः । इयं परिभाषायामुदीरिता । गणशान्तिः घोषशान्तिः । गण संघः शान्तिप्रतिपादक

मन्त्रसमुदाय इति यावत्। अनेन च स्वस्वशाखोक्ता शान्तिरुप लक्ष्यते। तत्र आनो भद्र इत्याश्वलायनशान्तिः शंनो वात इति च तैत्तिरीयशान्तिरपि परिभाषायां द्रष्टव्या। इति सर्वकार्यसिद्धिहरम्। अथ देशान्तरगतस्यातिक्लेशहरम्। कर्मविपाकसमुच्चये—

भयश्रीमत्क्लेशः कुटुम्बिनामातुरं स्वयम्।
शक्तः सन् सर्वदा नानुकम्पते बन्धवृत्तिकः॥
निषिद्धवृत्तिजीवी च जातो वै श्रीमतां कुले।
देशाद्देशान्तरं याति क्लेशयुक्तो भवेत्सदा॥
चान्द्रायणं प्रकुर्वीत तथा कृच्छ्रातिकृच्छ्रकम्।
जुहुयाच्चरुसर्पिर्भ्यां श्रीसूक्तान् प्रत्यृचं तथा॥
होमः प्रोक्तो व्याहृतिभिर्जपेत्सूक्तं च वारुणम्।
दद्याच्च दक्षिणां स्वर्णं तिलादीन्यपि निर्दिशेत्।

स्वयं शक्तः सन् न रक्षेदित्यन्वयः। चान्द्रायणस्य कृच्छ्रातिकृच्छ्रस्य च लक्षणं कृच्छ्रप्रकरणेऽभ्यधायि। चरुणा सर्पिषा च प्रत्येकमष्टोत्तरशतं सहस्रं वा श्रीसूक्तान्तर्गताभिः ऋग्भिः प्रत्यृचं जुहुयात्। तथा व्याहृतिभिरपि पूर्वोक्तसङ्ख्ययैव जुहुयात्। श्रीसूक्तस्यार्थादि नासिकाव्रणहरे दर्शितम्। व्याहृतीनान्तु कूष्माण्डहोमे नवग्रहयज्ञे च दर्शितम्। जपेत्सूक्तं च वारुणमिति। वरुणदैवत्यं सूक्तं वारुणम्। ततश्च स्वस्वशाखासमाम्नातेष्वन्यतमं ग्राह्यम्। तत्र कस्य नूनं कतमस्यामृतानामिति सूक्तं मृतपुत्रत्वहरे प्रदर्शितम्। तिलादीन्यपि निर्दिशेदिति। निर्दिशेत् दद्यात्। आदिशब्देन यज्ञार्हा व्रीह्यादयो गृह्यन्ते। तिलादीनि यथाशक्ति दद्यात्। इति देशान्तरगतस्यातिक्लेशहरम्। अथ दारिद्र्यहरधनदमूर्तिदानम्। वायुपुराणे—

दरिद्रो जायते मर्त्यो दानविघ्नं करोति यः।
ऐश्वर्यं जायते येन कर्मणा तच्छृणुष्व मे॥
पलेन वा तदर्द्धेन चतुर्थांशेन वा पुनः।
धनदस्य प्रतिकृतिं कुर्याद्धेममयीं शुभाम्॥

द्विभुजां वाहनोपेतां नयनानन्दकारिणीम् ।
शङ्खपद्मनिधिभ्यां च युक्तां तां पार्श्वयोर्द्वयोः ॥
श्वेतवस्त्रेण संवेष्ट्य तण्डुलोपरि विन्यसेत् ।
तण्डुलानां परीमाणं भवेत् द्रोणचतुष्टयम् ॥
तदर्द्धार्द्धं तदर्द्धं वा वित्तशाठ्यं न कारयेत् ।
श्वेतमाल्यैस्तथा गन्धैरनुलेप्य तु पूजयेत् ।
आग्नेय्यां दिशि होमं समिदाज्यतिलैर्भवेत् ।
मन्त्रो राजाधिराजायेत्येष योज्यः स्वलिङ्गकैः ॥
तिलहोमो व्याहृतिभिः कर्तव्यो धनकाङ्क्षिभिः ।

पलार्द्धेनेत्यादि। पलद्रोणयोः स्वरूपं परिभाषाप्रकरणे निरूपितम्। द्विभुजां वरदाभयकरां। वाहनोपेताम्। कुबेरस्य वाहनं मनुष्यः। नरवाहन इति प्रसिद्धेः। द्वयोः पार्श्वयोः शङ्खपद्मनिधिभ्यां युक्तामित्यन्वयः। शङ्खेन कमलेन चोद्भासितोत्तमाङ्गौ शङ्खपद्मनिधी भवतः। शङ्खनिधिमूर्तेर्मूर्ध्नि शङ्खचिह्नं पद्मनिधिमूर्तेर्मूर्ध्नि पद्मचिह्नमित्यर्थः। आग्नेय्यां दिशीति। धनदप्रतिकृतिपूजास्थानादाग्नेयदिग्विभागे। अनुक्तसङ्ख्याकत्वात् प्रत्येकं समिदाज्यतिलानष्टोत्तरशतं सहस्रं वा जुहुयात्। पूजायां च मन्त्रमाह–

मन्त्रो राजाधिराजायेति। स्वलिङ्गकैः कुबेरनामद्योतकैः पदैर्युक्त इत्यर्थः। मन्त्रश्चायं षडवसानः। अस्यारुणा ऋषयः। विश्वेदेवा वा ऋषयः। कुबेरो देवता। अतिशक्वरी यष्टिर्वा छन्दः।

राजाधिराजाय प्रसह्यसाहिने। नमो वयं
वैश्रवणाय कुर्महे। स मे कामान् कामका
माय मह्यम्। कामेश्वरो वैश्रवणो ददातु।
कुबेराय वैश्रवणाय। महाराजाय नमः।

(तै. आरण्यक. प्रपा. १, अनु. ३१,६)

एवं पूजादौ मन्त्रमभिधाय तिलहोमे विशेषमाह–तिलहोमो व्याहृतिभिरिति। व्याहृतीनामृष्यादि नवग्रहयज्ञकरणे देवतावाहनप्रस्तावे दर्शितम्। पूर्वोक्तं कर्म केन कारयेदित्याह–

आचार्य: [illegible] विनीत: सर्वसम्मत: ।
मह[illegible] धर्मज्ञ: सत्यवान् भवेत् ॥
[illegible] तेन [illegible]भक्तित: ।
[illegible] मन्त्रेण स च कामीश्वरो भवेत् ॥

[illegible] राजाधिराजायेत्यनेन । स च कमीऽश्वरो भवेत् स च [illegible] दाता कामी धनकामी ईश्वरो भवेत् । अस्मिन् [illegible] [illegible] भवेत् ।

[illegible] [illegible] कृतवते [illegible] प्रतिमां तु नाम् ।
मन्त्रेणानेन [illegible] ॥

दानमन्त्रमाह–

[illegible] देव कुबेर नरवाहन ।
पद्मशङ्खनिधीनां त्वं पतिः श्रीकण्ठवल्लभः ॥
अदानेन यथा प्राप्तं दारिद्र्यं [illegible] ।
तत्सर्वं तव दानेन पापमाशु विनाशय ॥
एवं कुबेरदानं यः करोति विधिपूर्वकम् ।
धनदेन समो [illegible] जायते ॥

[illegible]र्थ्यादो वायुर्वै क्षेपिष्ठा देवतेतिवत् क्षिप्रफलदायकं [illegible] । इति [illegible] । अथ प्रकारान्तरेणा-धनित्वादिहरं [illegible]–

ऋणं दत्त्वाऽधिकां वृद्धिं [illegible] यो भयम् ।
उत्पादयति चान्येषां पाषाणेन प्रहारदः ॥
तलप्रहारकृच्चैव [illegible] धनिनां कुले ।
धनेन रहितः प्रायो देशान्तरगतो भवेत् ॥
महाक्लेशी च हृद्रोगी उदावर्ती भवेन्नरः ।

अतिवृद्धिग्रहणं नाम शास्त्रनिषिद्धवृद्धिग्रहणम् । भयमुत्पादय-तीति । [illegible] भयोत्पादनम् । तथा पाषाणप्रहारादि । तलप्रहारो मुष्टिप्रहारश्च पेठादानं वा । उदावर्तीति । ऊर्ध्वमावर्तत इत्युदावर्ती । [illegible]र्थः । अत्र प्रायश्चित्तमाह–

कृच्छ्रः कृच्छ्रातिकृच्छ्रश्च चान्द्रायणमथापरम् ।
कुर्यादाज्यचरुभ्यां च होमो व्याहृतिभिस्तथा ॥
यत्किञ्चेदमिदं सूक्तमयुतं वारुणं जपेत् ।

प्राजापत्यकृच्छ्रस्य कृच्छ्रातिकृच्छ्रस्य चान्द्रायणस्य च लक्षणानि कृच्छ्रप्रकरणे निरूपितानि । निमित्ततारतम्येन नैमित्तिकानि कृच्छ्रादीनि व्यस्तानि समस्तानि वा योज्यानि । आज्यचरुभ्यां च प्रत्येकमष्टोत्तरं होमः । व्याहृतीनामृष्यादि नवग्रहयज्ञप्रकरणे देवताऽऽवाहनप्रस्तावे निरूपितम् । यत्किञ्चेदमित्यनेन मोषु वरुणमृन्मयमित्येतत् सूक्तं लक्ष्यते । तस्या ऋच एतत्सूक्तान्तः पातित्वात् । अस्य सूक्तस्य वसिष्ठ ऋषिः । वरुणो देवता । गायत्री छन्दः । अन्त्या जगती । जपे विनियोगः ।

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् । मृळा सुक्षत्र मृळय । १
यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः । मृळा सुक्षत्र मृळय । २
क्रत्वः समह दीनता प्रतीपं जगमा शुचे । मृळा सुक्षत्र मृळय । ३
अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् । मृळा सुक्षत्र मृळय । ४
यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्या३श्चरामसि ।
अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ ५
(ऋ. मं. ७ सू. ८९)

इति मोषु वरुणेति सूक्तम् । इति प्रकारान्तरेणाधनत्वादिहरम् । अथ ब्रह्मराक्षसरूपपिशाचत्वहरम् । कर्मविपाकसमुच्चये–

अन्यायवृत्तिनृपतेः सेवनाद्विप्रहिंसनात् ।
महादानसमादानात् गुरुभार्याविमर्दनात् ॥
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणाद्गुरुनिन्दया ।
वेदबाह्यस्य शास्त्रस्य पठनात् कर्मसेवनात् ॥

अवैदिकशास्त्रपाठादवैदिककर्मकरणाच्चेत्यर्थः ।

विषोद्बन्धनशस्त्राद्यैर्मरणादपि शौनक ।
जननीमैथुनाच्चैव परस्त्रीगमनात्तथा ॥

श्रुताध्ययनसम्पन्नः श्रोत्रियब्राह्मणस्य तु ।
उदासीनः सभामध्ये कृत्वा भङ्गं सुदारुणम् ॥
वेदाध्यापनभृतकाध्ययनाद्विशेषतः ।

भृताध्यापनभृतकाध्ययनादित्यर्थः ।

देवब्राह्मणराज्ञान्तु स्वापहरणात्तथा ॥
अरण्ये निर्जले देशे जायते ब्रह्मराक्षसः ।

ब्रह्मराक्षसत्वं निमित्तान्तरस्याप्युपलक्षणम् । श्रुताध्ययनसम्पन्न उक्तनिमित्तेष्वन्यतरनिमित्तवांश्चेन्मृतः सन् ब्रह्मराक्षसो भवति । श्रुताध्ययनादिरहित उक्तनिमित्तेष्वन्यतरनिमित्तवांश्चेन् मृतः स पिशाचो जायत इति भेदः । अत्र निष्कृतिर्बृहन्मनुनोक्ता तत्पुत्रादिभिः कार्या ।

गयाश्राद्धं तु कृत्वापि जपहोमादिभिस्तथा ।
ब्रह्मस्वार्पणतस्तस्य जपनादेव नित्यशः ॥
देवतातीर्थसेवाभिः कन्यादानेन चैव हि ।
ब्रह्मराक्षसपैशाचान्मुच्यते मनुरब्रवीत् ॥

जपहोमादिभिरिति । जपो वेदपारायणं पवमानादिसूक्त जपश्च । तथा सहस्रनामादिस्तोत्रजपश्च । होमोऽयुतहोमादिः । स च नवग्रहयज्ञोक्तप्रकारेण । तत्र द्रव्यं तिलव्रीहियवादयः । मन्त्रो व्याहृतयो गायत्री वा । आदिशब्देन दानमभिधीयते । तच्च गोभूतिलहिरण्यानां । परिमाणं च शक्त्यनुसारेण कल्प्यम् । गवादिदान मन्त्रास्तु प्रायश्चित्तोपक्रमपद्धतौ दर्शिताः । ब्रह्मस्वार्पणत इति । उपलक्षणं चैतत् । यस्य देवस्य वा ब्राह्मणस्य वा राज्ञो वा द्रव्यमपहृतं तस्मै यथायोगं तत्पुत्रादेर्वा दत्वेत्यर्थः । जपनादेव नित्यश इति । नित्यजपादित्यर्थः । षण्मासान् वत्सरं वाऽवधीकृत्य पुरुषसूक्त पवमानादीनां स्वस्वशाखासमाम्नातानां शाखान्तरपरिपठितानां शतरुद्रीयादीनां वान्यतमं प्रतिदिनं शक्त्यनुसारेण जपेदिति यावत् । पूर्वोक्तानि नैमित्तिकानि गयाश्राद्धादीनि शक्त्याद्यपेक्षया व्यस्तानि समस्तानि वा योज्यानि । वेदपारायणविधिः विष्णु-

नामानि च नवग्रहयज्ञः प्रायश्चित्तोपक्रमप्रकारः शतरुद्रीयविधिश्च परिभाषायां दर्शितः। इति ब्रह्मराक्षसत्वहरं पिशाचत्वहरं च।

महार्णवाख्ये महति प्रबन्धे

मान्धातृनाम्नो मदनात्मजस्य।

तरङ्गमालासु मनोहरासु

नवाधिका त्रिंशदियं समाप्ता॥

इति श्री विश्वेश्वरविरचिते मदनमहार्णवे एकोनचत्वारिंशस्तरङ्गः।

इति प्रकीर्णकप्रकरणम्

# चत्वारिंशस्तरङ्गः

अथ ग्रहप्रकरणमारभ्यते। कर्मविपाकसमुच्चये-

रजस्वलागामिनं च तदुच्छिष्टस्य भोजिनम्।
प्रजाग्रहः प्रगृह्णाति नतः स ज्वरवान् भवेत्॥
अतीसारी च कुष्ठी च गात्रे सर्वत्र वातवान्।
स्त्री चेत् गर्भविनाशः स्यादत्रेयं निष्कृतिः परा।
कृच्छ्रं चान्द्रायणं चैव कुर्यात्सान्तपनव्रतम्।
अष्टोत्तरसहस्रं तु सर्पिषा जुहुयात्तथा।
पुनर्मामैतु मन्त्रेण जपेत्पुरुषसूक्तकम्।

प्राजापत्यकृच्छ्रादीनां लक्षणानि कृच्छ्रप्रकरणे निरूपितानि। पुनर्मामैतु मन्त्रेण जुहुयादित्यन्वयः। पुनर्मामैत्विन्द्रियमिति द्वादश वाक्यानुवाकस्यारुणा ऋषयः। अरुणा एव देवता। यजुष्ट्वान्न छन्दोनियमः। अथवाऽयं तृचोऽनुष्टुभः। द्वितीयास्वराडनुष्टुप्। होमे विनियोगः।

पुनर्मामैत्विन्द्रियम्। पुनरायुः पुनर्भगः।
पुनर्ब्राह्मणमैतु मा। पुनर्द्रविणमैतु मा॥ १॥
यन्मेऽद्य रेतः पृथिवीमस्कान्। यदोषधीरप्यसरद्यदापः।
इदं तत्पुनराददे। दीर्घायुत्वाय वर्चसे॥ २॥
यन्मे रेतः प्रसिच्यते। यन्म आजायते पुनः।
तेन माममृतं कुरु। तेन सुप्रजसं कुरु॥ ३॥

(तै. अरण्य. प्र. १ अ. ३०)

पुरुषसूक्तस्य ऋष्यादि परिभाषायामभिहितम्। जपसङ्ख्या सहस्रम्। जपहोमयोरनन्तरं बलिदानप्रकारमाह-

कांस्यपात्रे नवे व्रीहितण्डुलानाढकोन्मितान्।
निक्षिप्य जलकुम्भेन सार्धं नीत्वा चतुष्पथम्॥
गन्धपुष्पादिभिस्तत्र समभ्यर्च्य बलिं क्षिपेत्।

आढकस्वरूपं परिमाणप्रकरणे निरूपितम्। बलिदानमन्त्रमाह-

प्रगृह्णीष्व बलिं चेमं प्रजाग्रह महाबल ।

आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाग्रह ' ॥

इति प्रजाग्रहहरम् । अथ ज्वरग्रहहरम् । कर्मविपाकसङ्ग्रहे—

रजस्वलां च चण्डालीं यो गच्छेत्तं ज्वरग्रहः ।

गृह्णाति तेन सन्तापज्वरी भवति मानवः ॥

चान्द्रायणं सान्तपनं कुर्याच्च मधुमिश्रितैः ।

रसालपल्लवैर्होमो जातवेदस मन्त्रतः ॥

नाम्नां सहस्रं तु जपेदयुतं जातवेदसम् ।

शक्त्या हिरण्यदानं च ब्राह्मणान् भोजयेदथ ॥

चान्द्रायणसान्तपनयोः स्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि । मधुमिश्रितैः मध्वाक्तैराम्रपल्लवैर्होमः । होमसंख्या त्वष्टोत्तरसहस्रं । जातवेदसमन्त्रतः। जातवेदसे सुनवाइत्यनेन मन्त्रेण। अस्यत्वर्ष्यादि-शीतज्वरहरेऽभिहितम् । नाम्नां सहस्रं विष्णुसहस्रनामानि । एतानि परिभाषायां दर्शितानि । अयुतमित्युभयत्र सम्बध्यते । अतो सहस्रनामस्तोत्रजातवेदसे सुनवामेत्यनयोः प्रत्येकमयुतसङ्ख्याको जपो भवति । एतच्च व्याधिगुरुत्वे । लघुत्वे तु सहस्रद्विसहस्रादि कल्प्यम् । जपानन्तरं पूर्वोक्तहोमः कार्यः । एवं होमानन्तरं बलिदानप्रकारमाह—

पायसं कांस्यपात्रे तु ध्वजैः श्वेतैः परिस्तृतम् ।

निक्षिप्य गन्धपुष्पाद्यैर्ग्रहपूजां विधाय च ॥

देवालये क्षिपेत् यद्वा निक्षिपेच्च चतुष्पथे ।

अथ मन्त्रमाह—

प्रगृह्णीष्व बलिं चेमं दाहरूप महाज्वर ।

आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाग्रह ॥

इति ज्वरग्रहहरम् । अथैकाहिकादिज्वरग्रहहराणि कर्मविपाकसङ्ग्रहे—

तस्करो यो वृथा प्राणिहिंसको निर्दयश्च यः ।

आचाररहितो यश्च परधर्मस्य निन्दकः ॥

अधर्मनिरतो यश्च तानेतान् ज्वरसंज्ञकः ।
ग्रहो गृह्णाति तन्मात्रादेकरात्रज्वरी भवेत् ॥
द्विरात्रेण त्रिरात्रेण चतूरात्रज्वरेण च ।
शीतज्वरेण सततज्वरेणोऽन्यज्वरेण च ॥
युतो भवति तस्येयं निष्कृतिः शास्त्रचोदिता ।
चान्द्रायणं प्रकुर्वीत कुर्यात् कृच्छ्रातिकृच्छ्रकम् ॥
आज्यहोमो व्याहृतिभिरष्टोत्तरसहस्रकम् ।
सहकारप्रवालैश्च मध्वाक्तैर्जुहुयात्तथा ॥
जातवेदसमन्त्रेण दद्याद्धोमं च शक्तितः ।
सहस्रकलशस्नानमीश्वरस्य तु कारयेत् ॥

चान्द्रायण कृच्छ्रातिकृच्छ्रयोर्लक्षणं कृच्छ्रप्रकरणे निरूपितं । व्याहृतीनामृष्यादि नवग्रहयज्ञप्रकरणे देवताऽवाहनप्रस्तावे दर्शितम् । जातवेदसमन्त्रेण जुहुयादित्यन्वयः । अस्य त्वृष्यादि शीतज्वरहरे निरूपितम् । तथेत्यनेन पूर्वोक्ताष्टोत्तरसहस्रसङ्ख्या चानुकृष्यते । सहस्रकलशाभिषेकन्तु रुद्रानुवाकै रुद्रस्य कुर्यात् । रुद्रानुवाकानामृष्यादि तथाभिषेकप्रकारश्च परिभाषायां रुद्रविधानेऽभ्यधायि । बलिप्रकारमाह–

कांस्यपात्रे मधुपूपपायसाज्यसुशर्कराः ।
निक्षिप्याच्छध्वजैर्जातीकुसुमैः श्वेतवाससा ॥
गन्धपुष्पादिभिश्चैव स्थाने देशे शुचौ ग्रहम् ।
पूजयित्वा सहस्रं तु जलकुम्भेन संयुतम् ॥
मध्वादिकं बलिं दद्यान्मन्त्रेणानेन संयतः ।

अच्छध्वजैः शुभ्रध्वजैः । साहचर्याज्जातीकुसुमान्यपि श्वेतान्येव । बलिदानमन्त्रमाह–

प्रगृह्णीष्व बलिं चेममैकाहिक महाज्वर ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाग्रह ॥

द्विरात्रादिषु ज्वरेषु बलिदानस्थाने विशेषमाह–

द्व्याहिकाख्यज्वरे मातृस्थाने शुद्धं बलिं क्षिपेत् ।
त्र्याहिके वह्निकेदारे समीपे वृषभस्य च ॥
विष्णोरायतने दद्याच्चातुर्थिकमहाज्वरे ।

बलिदानमन्त्रे द्व्याहिकाख्यमहाज्वरेत्यूहः कार्यः। एवं त्रिरात्र-ज्वरे त्र्याहिकाख्येति। तथा चातुर्थिके ज्वरे चातुर्थिकमहाज्वरेत्यूहः। द्व्याहिकत्र्याहिकज्वरयोः पूर्वाह्ण एव बलिः। चातुर्थिकज्वरे बलिविशेषमाह—

विष्णोरायतने कृत्वा मण्डलं तत्र पीठकम्।
चतुष्पदं स्थापयित्वा ग्रहं सम्पूज्य यत्नतः॥
कुम्भं संस्थापयेत्तत्र पीठस्योपरि संयतः।
तस्मिन् कुम्भे बलिं दद्यात्कृशरापूपपायसम्॥
लाजान् मधु सुरां चैव सर्पिः पिण्याकमेव च।
रक्तवासो रक्तपुष्पं गृह्णीयादर्चनाविधौ॥
गन्धधूपादिकं रक्तं दद्याद्रोगस्य शान्तये।

यज्जातीयानां या सुरा निषिद्धा तज्जातीयैः सा बलिकर्मणि न ग्राह्या। शीतज्वरे तु विशेषः।

विष्णोरायतने यद्वा मूलेऽश्वत्थद्रुमस्य वा।
शीतज्वरे विधानेन संयतश्चाहरेत् बलिम्॥
बलिहर्ता कृष्णवस्त्रः कृष्णवर्णोत्तरीयकः।
कृशरां पायसं चैव तिलांश्चैव च तण्डुलान्॥
कांस्यपात्रे विनिक्षिप्य स्वर्णं तदुपरि न्यसेत्।
पूर्णकुम्भेन सहितं बलिं तत्र विनिक्षिपेत्॥
पूजयित्वा ग्रहं धूपदीपादिभिरतन्द्रितः।

बलिदानमन्त्रमाह—

'प्रगृह्णीष्व बलिं चेमं ज्वरितस्य ज्वरापहम्।
पक्षिवाहन गोविन्द वराहवदन प्रभो।
असुरघ्न सुरश्रेष्ठ नारसिंह गदाधर' इति।

उष्णज्वरे विशेषमभिदधाति—

उष्णज्वरे महेशानसमीपे बलिमाहरेत्।
राजवृक्षस्य मूले वा बलिःपूर्वोक्त एव हि॥

पूर्वोक्तः शीतज्वरहरोक्तः। अत्र मन्त्रः।

'गोक्षीरधवलाकार त्रिशूलधर गोपते ।
भस्मोद्धूलित देवेश त्रिनेत्र शिव शङ्कर ॥
प्रगृह्णीष्व बलिं चेमं ज्वरितस्य महाग्रह ।
प्रयच्छ त्वं सुखं सिद्धिं ज्वरं चाशु विमोचय ' इति ।

सततज्वरे विशेषमभिधत्ते-

सततज्वर ईशानस्यालये बलिमाहरेत् ।
पूर्वत्र कथितेष्वन्यतमो बलिरुदाहृतः ॥

ये पूर्वं कथितास्तेषु । बलिदानमन्त्रमाह-

'प्रगृह्णीष्व बलिं चेमं हर त्वं सततज्वरं ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ' ॥ इति ।

इत्यैकाहिकादिज्वरहराणि । अथ प्रतुण्डग्रहहरम् । कर्मविपाकसङ्ग्रहे-

अशुचिर्यः स्पृशेद्देवं ब्राह्मणं बुद्धिपूर्वकम् ।
तं गृह्णाति प्रतुण्डाख्यो ग्रहस्तद्ग्रहणात्ततः ॥
ज्वरी मूर्च्छाभ्रमी पक्षघाती चैव प्रजायते ।
कृच्छ्रचान्द्रायणे कुर्यात्तद्रोगस्यापनुत्तये ॥
वात आवात सूक्तं च जपेदयुतसङ्ख्यया ।
स्वशक्त्या हेमदानं तु कुर्यादेवं विमुच्यते ॥

कृच्छ्रचान्द्रायणयोः स्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि। वात आवातु भेषजमित्यस्य सूक्तस्य ऋष्यादि वातगुल्मप्रकरणेऽभ्यधायि । बलिदानप्रकारमाह—

तिलपिष्टेन सहितमन्नं लाजाश्च भाजने
कस्मिंश्चित् स्थापयित्वा तु गन्धपुष्पादिभिर्ग्रहम् ॥
चतुष्पथे पूजयित्वा मन्त्रेणानेन निक्षिपेत् ।
'प्रगृह्णीष्व बलिं चेमं प्रतुण्डाख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ' ॥

इति प्रतुण्डग्रहहरम् । अथ कामिलग्रहहरम् । कर्मविपाकसमुच्चये-

अप्रक्षालितपात्रे च अप्रक्षालितपद्गुणः ।
भुङ्क्तेऽपराह्णे तं कालग्रहो गृह्णाति मानवम् ॥
अन्तर्मेही पीतनेत्रः पीतविण्मूत्रको भवेत् ।
स कुर्यादुपवासं च प्राजापत्यमथापरम् ॥
बलिस्तु पायसापूपलाजैः सम्पूज्य च ग्रहम् ।
देयो जलाशयाभ्यर्णे मन्त्रेणानेन संयतः ॥
'प्रगृह्णीष्व बलिं चेमं कामिलाख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल' ॥

प्राजापत्यस्वरूपं परिभाषायां कृच्छ्रप्रकरणे द्रष्टव्यम् । इति कामिलग्रहहरम् । अथ कालनायकग्रहहरम् । कालनायको लोकनायकश्चेति नाम्नि विकल्पो नतु कर्मणि । कर्मविपाकसमुच्चये—

आदित्यादिग्रहेष्वष्टमादिस्थानस्थितेषु यः ।
न कुर्यात् ग्रहयज्ञं तं कालनायकसंज्ञकः ॥
ग्रहो गृह्णाति चिह्नानि तत्रेमानि भवन्ति हि ।
मुहुर्मुहुर्वक्त्रशोषो स्वरो भवति दारुणः ॥
त्रिमध्वाक्तै रसालस्य पल्लवैर्जातवेदसा ।
अष्टोत्तरसहस्रं हि जुहुयाच्च तथा पुनः ॥
प्राजापत्यं प्रकुर्वीत हेमदानं च शक्तितः ।

त्रिमध्वाक्तैरिति । त्रिमधूनि शर्कराज्यमधूनि । 'त्रिमध्वाक्तैः प्लक्षतरोः पल्लवैः जातवेदसा' इत्यपि पाठः । अतः प्लक्षाम्रपल्लवा विकल्पेन होमद्रव्यम् । 'जातवेदसा । 'जातवेदसे सुनवाम सोम' मितिमन्त्रेण । अस्य चर्य्यादि शीतज्वरहरे द्रष्टव्यम् । प्राजापत्यस्वरूपं कृच्छ्रप्रकरणे । बलिदानप्रकारमाह—

चतुष्पथे रक्तगन्धपुष्पाद्यैर्ग्रहमर्चयेत् ।
बलिस्तु पिष्टलाजाश्च पिण्याकं च तिलास्तथा ॥
हिरण्यं च यथाशक्ति पात्रे कांस्यमये नवे ।

दद्यादिति शेषः । अत्र मन्त्रमाह—

'प्रगृह्णीष्व बलिं चेमं लोकनाथ महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ' ॥

लोकनायक इति ग्रहनामाङ्गीकारे लोकनाथ इत्येव पाठः । कालनायक इति ग्रहनामधेयत्वे कालनाथ महाग्रहेत्यूहः कर्तव्यः । इति कालनायकाख्यग्रहहरम् । अथ पितृग्रहहरम् । कर्मविपाकसङ्ग्रहे–

परस्य [illegible] कुर्याद्व्यवहरन् मृषा ।
पितृग्रहगृहीतः स्यात् तत्र चिह्नानि वै शृणु ॥
व्याधिना परिभूतः स्यात् प्राणसन्देहकारिणा ।
दरिद्रश्च भवेत् कार्यं चान्द्रायणमिहोच्यते ॥
श्रीसूक्तेन चरोर्होममष्टोत्तरशतं भवेत् ।
बलिं पूर्वोक्तरीत्यैव रात्रौ दद्याच्चतुष्पथे ॥

चान्द्रायणलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि । श्रीसूक्तस्यर्ष्यादि नासिकाव्रणहरे दर्शितम् । प्रत्यृचं होमः । सूक्तस्य सप्तवारावृत्त्या पञ्चोत्तरं शतं भवति । ततः पञ्चभिः पञ्चभि ऋग्भिरेकैकाहुतिरिति तिस्रः । ता एवं मिलित्वाष्टोत्तरशतं । पूर्वोक्तरीत्येति । कालनायकग्रहहरोक्तरीत्या । तत्र बलिदानमन्त्रे पितृग्रहेत्यूह्यम् । इति पितृग्रहहरम् । अथ लोकायतग्रहहरं कर्मविपाकसङ्ग्रहे–

पुण्यां शिलां तरुं देवालयाद्यारुह्य मुञ्चति ।
मूत्रं पुरीषमथवा तं गृह्णाति नरं ग्रहः ॥
लोकायताभिधस्तत्र चिह्नानि स्युरमून्यथ ।
अतिमूत्रपुरीषः स्याद्रक्तनेत्रस्तथा पुनः ॥
पित्ताद्रोगी च वदने देहे चैव व्रणी भवेत् ।
उपवासत्रयं कुर्यात् प्राजापत्यमथापि वा ।

व्याधिलघुगुरुभावे निमित्तवशान्नैमित्तिकयोरपि गुरुलघुप्रायश्चित्तयोर्व्यवस्था विज्ञेया ।

तिलहोमो व्याहृतिभिरुद्यन्नद्यजपस्तथा ।
शीतलं सलिलं हेम दद्याद्वित्तानुसारतः ॥

होमसङ्ख्या सहस्रं जपे त्वयुतम्। व्याहृतीनामृष्यादि नवग्रह यज्ञप्रकरणे देवताऽवाहनप्रस्तावेऽभ्यधायि। उद्यन्नद्यमित्रमह इत्यस्य तु परिभाषायां रोगप्रतिमादानविधावुदीरितम्। बलिप्रकारमाह—

पायसं गुडलाजान्नं पिण्याकं शर्करां क्षिपेत्।
चतुष्पथे समभ्यर्च्य वस्त्राद्यैर्ग्रहमादरात्॥

अत्र बलिदानपात्रस्यानभिहितत्वाद्यथासम्भवं पात्रं ग्राह्यम्। तथा च कालश्च। बलिदानमन्त्रमाह—

'प्रगृह्णीष्व बलिं चेमं लोकायत महाग्रह।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल'॥

इति लोकायतग्रहहरम्। अथापस्तम्बग्रहहरं कर्मविपाकसङ्ग्रहे—

अनर्हःसन् स्वयं गर्वादाद्योत्तमभाजनम्।
पङ्क्तौ विशेषभोजी यस्तमापस्तम्बसंज्ञकः॥
ग्रहो गृह्णाति तन्मात्राद्धृदयोदरशोषवान्।
जायते तन्निवृत्यर्थं कुर्याच्चान्द्रायणं नरः॥
पूर्ववद्बलिदानञ्च ततो रोगाद्विमुच्यते।

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणे समुपवर्णितम्। पूर्ववदिति। कामिलाख्यग्रहहरोक्तप्रकारेणेत्यर्थः। बलिदानमन्त्रे आपस्तम्ब महाग्रहेत्यूहः कार्यः। इत्यापस्तम्बग्रहहरम्। अथ वृत्रग्रहहरं कर्म-विपाकसङ्ग्रहे—

वृत्रग्रहः प्रगृह्णाति परदाराभिमर्शिनम्।
कटिः प्रशुष्येच्च नरः प्राजापत्यं चरेत्ततः॥
गायत्र्या च तिलान् हुत्वा गायत्रीमयुतं जपेत्।
दद्याद्धेम स्वशक्त्या च बलिः पूर्वोक्तवद्भवेत्॥

प्राजापत्यलक्षणं कृच्छ्रप्रकरणेऽभ्यधायि। होमसङ्ख्या सहस्रम्। जपानन्तरं होमः। पूर्वोक्तवदिति। आपस्तम्बग्रहहरोक्तरीत्या। बलिदानमन्त्रे वृत्रग्रह महाबलेत्यूहः। इति वृत्रग्रहहरम्। अथ महाज्वरग्रहहरं कर्मविपाकसङ्ग्रहे—

महाग्रहज्वरस्तं वै गृह्णीयाद्यो व्रजेत् स्त्रियम् ।
रजकादेस्ततः पादतलदाही भवेन्नरः ॥
चान्द्रायणं सान्तपनं कुर्यात्तद्रोगशान्तये ।
जातवेदसमन्त्रेण मध्वाक्तानाम्रपल्लवान् ॥
अष्टोत्तरसहस्रं तु जुहुयाज्जातवेदसि ।
जपः सहस्रनाम्नां तु दद्याद्धेम स्वशक्तितः ॥

रजकादेरित्यादि । 'रजकश्चर्मकारश्च नटो बरट एव च । कैवर्तमेदभिल्लाश्च सप्तैतेऽन्त्यावसायिनः' । इति स्मृत्यन्तरोक्तचर्मकारादयो रजकादेरित्यादिशब्देन गृह्यन्ते । जातवेदसमन्त्रऋष्यादि शीतज्वरहरे द्रष्टव्यम् । विष्णुसहस्रनामानि परिभाषायां दर्शितानि । जपसङ्ख्या व्याधिगुरुलघुभावेनाऽष्टाविंशतिरष्टोत्तरशतमित्यादि क्रमेण कल्प्या । बलिदानप्रकारमाह–

मृत्पात्रे पिष्टपिण्याकलाजान् कृत्वा तिलांस्तथा ।
पूजयित्वा ग्रहं रक्तगन्धाद्यैश्च चतुष्पथे ॥
निशि क्षिपेद्बलिं विद्वान्मन्त्रेणानेन संयतः ।
'प्रगृह्णीष्व बलिं चेमं महाग्रह महाज्वर ॥
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल' ॥

इति महाज्वरग्रहहरम् । अथ कुम्भकग्रहहरम् । जम्भकग्रह इत्यपि नाम । कात्यायनः–

अन्त्यजागामिनं चैव परस्त्रीगामिनं तथा ।
कुम्भकाख्यः प्रगृह्णाति ततस्तु ज्वरवान् भवेत् ॥
असंबद्धप्रलापी च श्वासकासी च जायते ।
अत्र चान्द्रायणं कुर्याज्जुहुयाच्चरुसर्पिषी ॥
मन्त्रा व्याहृतयः प्रोक्ता जपेत्सूक्तं च पौरुषम् ।
सावित्रीं च हिरण्यं च दद्याच्छक्त्यनुसारतः ॥

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणे निरूपितम् । चरुसर्पिषीति । चरुं पृथक् जुहुयात् सर्पिश्च पृथक् । सङ्ख्या त्वष्टोत्तरसहस्रम् । व्याहृतीनामृष्यादि नवग्रहयज्ञप्रकरणे देवताऽऽवाहनप्रस्तावेऽभिहितम् । पौरुषं

सूक्तं पुरुषसूक्तम् । अस्य चर्ष्यादि परिभाषायां दर्शितम् । सावित्री गायत्री । अस्या ऋष्यादि कूष्माण्डहोमे । जपसंख्याऽष्टोत्तरसहस्र-मयुतं वा व्याधिगुरुलघुभावेन कल्प्या । बलिदानप्रकारमाह-

अन्नं तिलाश्च पिष्टं च पिण्याकं पायसं मधु ।
तैलं च मृण्मये पात्रे कृत्वा गन्धादिभिर्ग्रहम् ॥
पूजयित्वा पूर्णकुम्भं वस्त्रहेमसमायुतम् ।
बलिं चतुष्पथे रात्रौ मन्त्रेणानेन निक्षिपेत् ॥
'प्रगृह्णीष्व बलिं चेमं कुम्भकाराख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल' ॥

इति कुम्भकग्रहहरम् । अथ कपिलग्रहहरं कर्मविपाकसमुच्चये-

निष्ठीवेद्यो हुतभुजि प्रस्रवेद्वापि तं ग्रहः ।
कपिलाख्यः प्रगृह्णाति ततो जठरशूलवान् ॥
सर्वाङ्गदाहवांश्चैव भवेत्पीतविलोचनः ।
त्रिरात्रमुपवासः स्यात् तद्रोगस्यापनुत्तये ॥
सोमारुद्रेति च जपेत् सूक्तं त्वयुतसङ्ख्यया ।
हिरण्यं च यथाशक्ति दद्यादथ बलिं क्षिपेत् ॥

सोमारुद्रेति सूक्तमग्रे प्रदर्श्यते । बलिदानप्रकारमाह-

लाजांस्तिलांश्च पिण्याकं पिष्टं रुधिरमेव च ।
मांसं च तलपक्वं च कृत्वा मृण्मयभाजने ॥
रात्रौ चतुष्पथे कुर्याद्वस्त्राद्यैर्ग्रहपूजनम् ।
हिरण्यसहितेनाथ पूर्णकुम्भेन संयुतम् ॥
बलिं तत्र क्षिपेद्विद्वान्मन्त्रेणानेन संयतः ।
'प्रगृह्णीष्व बलिं चेमं कपिलाख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल' ॥

सोमा रुद्रेति चतस्रर्चस्य सूक्तस्य भरद्वाजः शंयु ऋषिः । सोमा-रुद्रौ देवता । त्रिष्टुप् छन्दः । जपे विनियोगः ।

सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयोऽरमश्नुवन्तु ।
दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे १

सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु २
सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ३
तिग्मायुधौ तिग्महेती सुशेवौ सोमारुद्राविह सु मृळतं नः ।
प्र नो मुञ्चतं वरुणस्य पाशाद् गोपायतं नः सुमनस्यमाना ४
(ऋ. सं. ६; सू. ७४)

इति सोमारुद्रेति सूक्तम् । इति कपिलग्रहहरम् । अथ शिवपाद-ग्रहहरं कर्मविपाकसमुच्चये–

मातुः पितुर्देवताया गुर्वादेर्यस्तु गर्वतः ।
अवज्ञां कुरुते तन्तु शिवपादाभिधो ग्रहः ॥
गृह्णाति तत्क्षणान्मूर्ध्नि जठरे रोगवान् भवेत् ।
पाददाही ज्वरी चैव जायते तत्र निष्कृतिः ॥
चान्द्रायणं भवेदाते सूक्तेन जुहुयाच्चरुम् ।
घृतं चाष्टाधिकशतं बलिर्देयो यथाविधि ॥

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणेऽभिहितम् । आते पितर्मरुतामिति सूक्तमृग्विधानोक्ताऽसाध्यसर्वरोगहरेऽभ्यधायि । चरोरपि पृथक् होमः । तथा घृतस्यापि । समग्रसूक्तावृत्त्या होमो न प्रत्यृचम् । बलिदानप्रकारमाह–

पिष्टं तिलांश्च पिण्याकं लाजान् कृत्वाथ मृण्मये ।
मार्गद्वयसमायोगे वस्त्राद्यैर्ग्रहमर्चयेत् ॥
ततो बलिं क्षिपेद्विद्वान्मन्त्रेणानेन संयतः ।
प्रगृह्णीष्व बलिं चेमं शिवपाद महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ' ॥

बलिदाने सन्ध्यादिकालविशेषस्यानभिहितत्वादैच्छिकः कालो ग्राह्यः । इति शिवपादग्रहहरम् । अथोऽर्ध्वकेशिग्रहहरं कर्मविपाक-समुच्चये–

निष्कारणं परद्रव्यहारिणं दुःखकारिणम् ।
कर्णेजपं त्वोर्ध्वकेशिग्रहो गृह्णाति मानवम् ॥

स्फोटास्ततः प्रजायन्ते तस्याङ्गेष्वखिलेष्वपि ।
चान्द्रायणं प्रकुर्वीत कृच्छ्रं वा रोगशान्तये ॥
आते सूक्तेन जुहुयाच्चरुमाज्यं पृथक् पृथक् ।
होमो व्याहृतिभिश्चैव दद्यात् स्वर्णं च शक्तितः ॥

चान्द्रायणं प्रकुर्वीतेत्यादि । रोगस्याधिक्ये चान्द्रायणम् । अल्पत्वे प्राजापत्यकृच्छ्रः । अनयोश्च लक्षणं कृच्छ्रप्रकरणेऽभ्यधायि । आते सूक्तेनेति । आते पितर्मरुतामित्येतत्सूक्तं प्रतीकेनाते सूक्तमित्युक्तम् । अस्य च ऋष्यादि ऋग्विधानोक्ताऽसाध्यसर्वरोगहरे प्रदर्शितम् । होमसङ्ख्यात्वष्टोत्तरसहस्रम् । अत्र प्रत्यृचं होमो न सूक्तेन । व्याहृतिहोमेऽपीयमेव सङ्ख्या । व्याहृतिहोमे द्रव्यं तिलाः । व्याहृतीनामृष्यादि कूष्माण्डहोमे दर्शितम् । बलिदानप्रकारमाह—

पायसं च पलं कन्दं लाजांश्चापूपकं दधि ।
ताम्रपात्रे विनिक्षिप्य सोदकं कुम्भमेव च ॥
चतुष्पथे क्षिपेद्वस्त्रैर्गन्धाद्यैर्ग्रहमर्च्य च ।

बलिदानमन्त्रमाह—

'प्रगृह्णीष्व बलिं चेममूर्ध्वकेशिन् महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल' ॥

इत्यूर्ध्वकेशिग्रहहरम् । अथ विष्टम्भग्रहहरम् । अस्यैव विवृताक्ष इति संज्ञान्तरम् । कात्यायनः—

स्वकीयाचारविभ्रष्टान् ब्राह्मणप्रभृतीन्नरान् ।
विष्टम्भनामा गृह्णाति ग्रहः शीतज्वरी ततः ॥
हस्तपादतले दाही नाम्ना कुञ्चितपाणिपत् ।
स्फोटयुक्तश्च जायेत हस्तयोः पादयोस्तथा ॥
विषूची बधिरश्चैव जायते तस्य निष्कृतिः ।
चान्द्रायणं प्रकुर्वीत घृताक्तैराम्रपल्लवैः ॥
अष्टोत्तरसहस्रं हि होमः स्याज्जातवेदसि ।
सहस्रशीर्षा सूक्तं च जपेदयुतसङ्ख्यया ॥

विष्णोर्नामसहस्रं च सहस्रं चाष्ट वै जपेत्।
सहस्रकलशस्नानं वासुदेवस्य कारयेत् ॥
दद्याद्धिरण्यदानं च बलिर्देयो यथाविधि।

चान्द्रायणस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि। जातवेदसेति। जातवेदसमन्त्रस्यर्ष्यादि शीतज्वरेऽभिहितम्। सहस्रशीर्षा पुरुष इति सूक्तस्य ऋष्यादि गणहोमप्रकरणे पुरुषसूक्तविधानेऽभ्यधायि। विष्णुसहस्रनामानि परिभाषायां दर्शितानि। वासुदेवस्य सहस्रकलशस्नानं पुरुषसूक्तेन। स्नानद्रव्यं तु दुग्धं मध्वाज्यमिक्षुरसं दध्यम्बु चेति शक्त्याद्यपेक्षया वैकल्पिकम्। हिरण्यदानं च शक्त्यनुसारेण। बलिदानप्रकारमाह–

पायसं पिष्टगुलिका मधु पूपं पयो दधि।
ताम्रपात्रे शुभे कृत्वा पूर्णकुम्भं सहेमकम् ॥
नीत्वा चतुष्पथे तत्र ध्वजाद्यैर्ग्रहमर्च्य च।
विद्वाननेन मन्त्रेण संयतो निक्षिपेद्बलिम् ॥
प्रगृह्णीष्व बलिं चेमं विष्टम्भाख्य महाग्रह।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ॥

इति विष्टम्भग्रहहरम्। एतदेव विवृताक्षग्रहहरमपि। अथ महाजिह्वग्रहहरं कर्मविपाकसमुच्चये–

मुसलोलूखलादीनि तथा यज्ञायुधान्यपि।
आयुधान्यपि पादाभ्यां लङ्घयेद्यो नरस्तु तम् ॥
कालक्रमात् प्रगृह्णाति महाजिह्वाभिधो ग्रहः।
ततो गद्गदवागास्यः सोऽपि जिह्वाव्रणी भवेत् ॥
कम्पयुक्तः प्रजायेत त्रिरात्रं व्रतमाचरेत्।
आज्यहोमो व्याहृतिभिरुद्यन्नद्यतृचं जपेत् ॥
गायत्रीं चान्नदानं च दद्याच्छक्त्यनुसारतः।

व्रतमुपवासः। होमसङ्ख्या त्वष्टोत्तरसहस्रम्। व्याहृतीनां ऋष्यादि नवग्रहयज्ञप्रकरणे देवतावाहनप्रस्तावे दर्शितम्। उद्यन्नद्य-

तृचस्य तु ऋष्यादि परिभाषायां रोगप्रतिमादानविधौ गायत्र्यास्तु कूष्माण्डहोमप्रकरणे निरूपितम्। प्रत्येकमनयोर्जपश्चायुतम्। बलि-प्रकारमाह–

पक्वान्मत्स्यांस्तथा पक्वतिलमिष्टं सुरा दधि।
रुधिरापूपशाकान्नं शूर्पे कृत्वा चतुष्पथे॥
वस्त्राद्यैर्ग्रहमभ्यर्च्य बलिं दद्याद्विचक्षणः।

सुरादीन्यधिकारिणा देयानि। बलिदानमन्त्रमाह–

प्रगृह्णीष्व बलिं चेमं महाजिह्व महाबल।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाग्रह'॥

इति महाजिह्वग्रहहरम्। अथ नवग्रहहरं कर्मविपाकसङ्ग्रहे–

सख्युस्तपस्विनो वापि गुरोर्वा स्वामिनोऽथवा।
स्त्रीगामिनं सङ्क्रमते ग्रहः कामं नवग्रहः॥
ततः स्फोटी मेढ्रदाही चाध्मानी नेत्ररोगवान्।
जायते निष्कृतिस्तत्र तप्तकृच्छ्रद्वयं भवेत्॥
अतिकृच्छ्रश्च कृच्छ्रश्च चान्द्रायणमथापि वा।
कुष्माण्डैर्जुहुयात् सर्पिर्धेनुं दद्याद्द्विजातये॥
पौरुषं च जपेत्सूक्तं कुर्यात् ब्राह्मणभोजनम्।
लाजैः पर्युषितान्नैश्च पताकाध्वजसंयुतैः॥
पूर्णकुम्भेन सहितैर्बलिर्देयश्चतुष्पथे।

अत्रमन्त्रः–

प्रगृह्णीष्व बलिं चेमं नवग्रह महाग्रह।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल'॥

अतिकृच्छ्रः प्राजापत्यः। तप्तकृच्छ्रादिलक्षणानि कृच्छ्रप्रकरणे द्रष्टव्यानि। व्याधिगुरुलघुभाववशात् तानि व्यस्तानि समस्तानि वा योज्यानि। कूष्माण्डहोमः परिभाषायां निरूपितः। तथा पुरुष-सूक्तस्य ऋष्यादि गणेशहोमे पुरुषसूक्तविधाने च परिभाषायामेव निरूपितम्। लाजादयो बलिद्रव्यम्। तत्र पताकाः स्थूलाः। सूक्ष्मा ध्वजाः। इति नवग्रहहरम्। अथ वासवग्रहहरम्। कर्मविपाकसङ्ग्रहे–

वल्मीकखननाद्येन [चैव] सर्पबाधां करोति यः।
सर्पाणां हननं कृत्वा तेषां क्लेशकरो हि यः॥
तं वासवग्रहो नाम गृह्णीयात्तेन स ज्वरी।
आध्मानी च विसर्पी च जायते तस्य निष्कृतिः॥
प्राजापत्यं भवेदाज्यहोमो व्याहृतिभिस्तथा।
अग्निरस्मीत्यृचं जप्त्वा यत्किञ्चेदं जपेदृचम्॥
दद्याद्रुक्मं यथाशक्ति बलिर्देयो विचक्षणैः।
अन्नं बहुविधं कृत्वा समादाय चतुष्पथे॥
निक्षिपेद्विविधैर्गन्धैः पुष्पैर्नानाविधैर्ध्वजैः।
ग्रहमभ्यर्च्य विधिना मन्त्रेणानेन संयतः॥
प्रगृह्णीष्व बलिं चेमं वासवाख्य महाग्रह।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल॥

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणेऽभ्यधायि। व्याहृतीनामृष्यादि नवग्रहयज्ञे देवताऽऽवाहनप्रस्तावे निरूपितम्। होमसङ्ख्या त्वष्टोत्तर सहस्रम्। अग्निरस्मीत्यस्य ऋष्यादि वातरोगहरे द्रष्टव्यम्। यत्किञ्चेदं वरुणेत्यस्य वसिष्ठ ऋषिः। वरुणो देवता। जगती छन्दः। जपे-विनियोगः।

यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः॥
(तै. सं. ३. ४. ११)

जपसङ्ख्या प्रत्येकमयुतम्। रुक्मं हिरण्यं। तद्यथाशक्ति दद्या-दित्यन्वयः। अन्नं बहुविधमिति। बहु प्रकारं नानावर्णञ्च। एवं गन्धान्यपि नानावर्णानि गृह्याणि। इति वासवग्रहहरम्। अथ वायस-ग्रहहरं कर्मविपाकसमुच्चये—

देवद्विजगृहारामतडागादिषु मोचनम्।
विष्ठायाः कुरुते यस्तु ग्रहो गृह्णाति वायसः॥
आध्मानी चाप्यरुचिमान् पाददाही च जायते।
कृच्छ्रमेकं चरेदाज्यहोमो व्याहृतिभिस्तथा॥
अष्टाधिकसहस्रं च कार्यो दद्याच काञ्चनम्।

कृच्छ्रः प्राजापत्यः। तत्स्वरूपं कृच्छ्रप्रकरणे निरूपितम्। व्याहृतीनामृष्यादि नवग्रहयज्ञप्रकरणे देवतावाहनप्रस्तावे कथितम्। बलिस्तु वासवग्रहहरोक्त एवाऽत्रापि। बलिदानमन्त्रे वायसाख्य महाग्रहेत्यूह्यः इति विशेषः। इति वायसग्रहहरम्। अथ क्षेत्रपालग्रहहरं कर्मविपाकसमुच्चये—

देवतानिन्दनात् क्षेत्रपालः सङ्क्रमते ग्रहः।
ततो भवेन्मुखे शोषो जिह्वायां च भवेद्व्रणः॥
प्राजापत्यं प्रकुर्वीत क्षेत्रपालाभिषेचनम्।
शतरुद्रेण कुर्याच्च महाजिह्वग्रहोदितः॥
बलिर्देयस्तु विधिना मन्त्रपूर्वं समाहितः।

प्राजापत्यस्वरूपं कृच्छ्रप्रकरणे दर्शितम्। शतरुद्रो नाम रुद्रानुवाकः। तेषामृष्यादिस्तथाऽभिषेकप्रकारश्च परिभाषायां रुद्रविधाने समुपवर्णितः। महाजिह्वग्रहहरं कर्म प्राक्दर्शितम्। बलिदानमन्त्रे क्षेत्रपाल महाग्रह इत्यूहः कार्यः। इति क्षेत्रपालग्रहहरम्। अथाचलग्रहहरम्। कर्मविपाकसङ्ग्रहे—

उपकर्तरि बन्धौ वाऽनुपकार्यपवादकैः।
तस्करैर्वा सख्यकारी तं गृह्णात्यचलग्रहः॥

उपकर्तरि बन्धौ वेत्येकं वाक्यम्। अपवादकैस्तस्करैर्वा सख्यकरीत्यपरम्। अनयोरपि प्रत्येकं वा शब्दश्रवणात् उपकर्तरि वा बन्धौ वा अनुपकारीत्यावृत्याऽवान्तरवाक्यद्वयम्। एवं द्वितीयवाक्येपि—

अचलग्रहसंस्पृष्टे ज्वरी श्वासी च कासवान्।
सर्वाङ्गरोग्यामदोषी मन्दाग्निश्च प्रजायते॥
कृच्छ्रं चान्द्रायणं वापि कुर्यात्कूष्माण्डहोमकम्।
कया नश्चित्र इत्येतदष्टोत्तरशतं जपेत्॥
अग्निरस्मीत्यृचं वापि सहस्रं चाष्ट वै जपेत्।

प्राजापत्यकृच्छ्रचान्द्रायणयोः स्वरूपं कृच्छ्रप्रकरणे दर्शितम्। अनयोश्च रोगाल्पत्वमहत्वापेक्षया वा विकल्पः। कूष्माण्डहोम

प्रकारः परिभाषायां निरूपितः । कयानश्चित्र इत्येतदिति नपुंसकलिङ्गनिर्देशात् सूक्तं गृह्यते। अस्य सूक्तस्य ऋष्याद्यपस्पमाररोगहरे कथितम् । अग्निरस्मीत्यस्यास्तु वातरोगहरे । बलिदानप्रकारमाह–

तिलचूर्णयुतं चान्नं दधि क्षीरं च सक्तवः ।
अपूपा रुधिरं चैव सुरा चेत्येष वै बलिः ॥
वस्त्राद्यैर्ग्रहमभ्यर्च्य पूर्णकुम्भयुतं बलिम् ।
चतुष्पथे निक्षिपेत्तु मन्त्रेणानेन संयतः ॥
प्रगृह्णीष्व बलिं चेममचलाख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ॥

अत्र बलिकालस्यानभिहितत्वात् कर्मान्त एव कालः । तत्रासमासे सुरादीन्यधिकारिणा देयानि । इत्यचलग्रहहरम् । अथ हस्तिपादग्रहहरम् । कर्मविपाकसङ्ग्रहे–

देवद्रव्यं तु यो भुङ्क्ते गामग्निं ब्राह्मणं तथा ।
पात्रं स्थानं च निर्माल्यं लङ्घयेद्यस्तु तं नरम् ॥
गृह्णाति हस्तिपादाख्यः चिह्नान्यत्र निबोधत ।
वल्मीकव्याधिमत्पादः पीतच्छविविलोचनः ॥
प्राजापत्यं प्रकुर्वीत होमो व्याहृतिभिर्भवेत् ।
हिरण्यं च यथाशक्ति दद्याद्ब्राह्मणभोजनम् ॥

प्राजापत्यलक्षणं कृच्छ्रप्रकरणेभ्यधायि । व्याहृतीनामृष्यादि नवग्रहयज्ञे देवतावाहनप्रस्तावे दर्शितम् । होमद्रव्यमाज्यम् । ग्रन्थान्तरेषु तथा दर्शनात् । सङ्ख्या त्वष्टोत्तरसहस्रम् । बलिस्त्वचलग्रहोक्तप्रकारेण देयः । बलिदानमन्त्रे हस्तिपाद महाग्रहेत्येतावानेव विशेषः । इति हस्तिपादग्रहहरम् । अथ कर्णग्रहहरं कात्यायनः–

देवस्वमुपभुङ्क्ते यो ग्रहस्तं कर्णसंज्ञकः ।
गृह्णाति तेन जिह्वा तु न चलत्यस्य कर्णयोः ॥
बाधिर्यं जायते चाङ्ग कण्डूनिर्महती भवेत् ।
अत्र चान्द्रायणं कुर्याद्धोमो व्याहृतिभिस्तथा ॥

